उच्चतरमाध्यमिककक्षायाः पाठ्यक्रमः

# वेदाध्ययनम् - ३४५

# पुस्तकम् - १




**राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्**

ए-२४-२५, संस्थागतक्षेत्रम् , विभागः - ६२

नोएडा - २०१ ३०९ (उत्तरप्रदेशः)

जालपुटकूटम् - www.nios.ac.in        निर्मूल्यः दूरभाषः - १८००१८०९३९३

**National Institute of Open Schooling**

A-२४-२५, Institutional Area, Sector – ६२

NOIDA – २०१ ३०९ (UP)

# उच्चतरमाध्यमिककक्षा - वेदाध्ययनम् (३४५)

## मन्त्रणामण्डलम्


**आचार्यः चन्द्रभूषणशर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९


## पाठ्यविषय-निर्मिति-समितिः


**समितेः अध्यक्षः**
डॉ. के. इ. देवनाथन्
कुलपतिः
श्रीवेङ्कटेश्वर-वैदिक-विश्वविद्यालयः
चन्द्रगिरिपरिमार्गः, अलिपिरि
तिरुपतिः - ५१७ ५०२ (आन्ध्रप्रदेशः)

**समितेः उपाध्यक्षः**
**डॉ. दिलीपपण्डाः**
सहायकप्राध्यापकः (संस्कृतविभागः)
हिरालाल-मजुमदार-मेमोरियल-कालेज
दक्षिणेश्वरः, कलिकाता - ७०० ०३५ (पश्चिमवङ्गम्)

**डॉ. रामनाथझा**
आचार्यः (संस्कृताध्यनविशेषकेन्द्रम्)
जवाहरलाल-नेहरू-विश्वविद्यालयः, नवदेहली

**डॉ. सन्तोषकुमारशुक्लः**
आचार्यः(संस्कृताध्यनविशेषकेन्द्रम्)
जवाहरलाल-नेहरू-विश्वविद्यालयः, नवदेहली

**आचार्यः फूलचन्दः**
वैदिकगुरुकुलम् , पतञ्जलि-योगपीठम्, हरिद्वारम् (उत्तराखण्डः)

**आचार्यः प्रद्युम्नः**
वैदिकगुरुकुलम्
पतञ्जलि-योगपीठम्, हरिद्वारम् (उत्तराखण्डः)

**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः
पत्रालयः - इटाचुना, मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९


## पाठ्यक्रम-समन्वयकः


**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्


**डॉ. दिलीपपण्डाः**
सहायकप्राध्यापकः (संस्कृतविभागः)
हिरालाल-मजुमदार-मेमोरियल-कालेज
दक्षिणेश्वरः,
कलिकाता - ७०० ०३५ (पश्चिमवङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)


## पाठलेखकाः


**(पाठः १, ३, ५, ७, ८, ९, २५ )**
**श्रीमान् राहुलगाजिः**
अनुसन्धाता (संस्कृतविभागः)
यादवपुरविश्वविद्यालयः
कलिकाता - ७०० ०३२ (प.वङ्गम्)

**(पाठः २, ४, ६, १०-१४, १७)**
**श्रीमान् विष्णुपदपालः**
अनुसन्धाता (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १५, १६, १८, २०, २३, २६)**
**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १९, २४)**
**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः
पत्रालयः - इटाचुना
मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**(पाठः २१, २२)**
**डॉ. दिलीपपण्डाः**
सहायकप्राध्यापकः (संस्कृतविभागः)
हिरालाल-मजुमदार-मेमोरियल-कालेज
दक्षिणेश्वरः,
कलिकाता - ७०० ०३५ (पश्चिमवङ्गम्)


## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च


**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**

**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)**

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्पाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं वेदाध्ययनस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

डॉ. चन्द्रभूषणशर्मा
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

वेदाध्ययनस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्स्यति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।**
**दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।**
**शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्।।**
**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।**
**मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी।।**

श्री संजय-कुमार-सिन्हा
निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥**

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य उच्चतरमाध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

अनन्ता वै वेदाः। भारतीयानां गर्वस्थानं श्रद्धास्पादं ज्ञानमूलं जीवनपथप्रदर्शकः इहपरलोकज्ञापकः वेदः। बहुषु शाखासु भिन्नः। वेदाङ्गानि च षट्। उपवेदाः च सन्ति। वैदिकशब्दाः बहुत्र लौकिकशब्देभ्यो भिन्नाः। तत्र व्याकरणस्य विशिष्टा नियमाः। अतः पाठ्यक्रमेऽस्मिन् वैदिकवाङ्मयस्य इतिहासः, सूक्तानि, व्याकरणम् चेति त्रेधा विभागः परिकल्पितः। क्लिष्टविषया अत्यन्तं सरलया गिरा अस्मिन् पाठ्यक्रमे वर्तते।

माध्यमिककक्षायां प्रदत्तः वेदाध्ययनम् इति विषयः अपि अत्यन्तम् उपकारकः वर्तते। सति समये छात्रः तस्य अध्ययनेन ज्ञानपीनः भवितुमर्हति। उच्चतरमाध्यमिककक्षाया वेदाध्ययनम् इति विषयस्य अध्ययनेन वेदे प्रवेशाय छात्रस्य योग्यता कल्प्यते। एतत्सामग्री वेदानां सश्रद्धम् अध्ययने प्रवेशाय प्ररोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः द्वयोः पुस्तकयोः कल्पितोऽस्ति।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकुटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

**ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥ ॐ शान्तिः शान्तिः शान्तिः॥**

भवत्कल्याणकामी

राम-नारायण-मीणा
पाठ्यक्रमसमन्वयकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## पुस्तकम्- १

### वैदिकसाहित्येतिहासः

१. वैदिकवाङ्मयस्य वैलक्षण्यं वेदप्रामाण्यविमर्शः च
२. ऋग्वेदसंहितासाहित्यम्
३. यजुर्वेदसामवेदसंहितासाहित्यम्
४. अथर्ववेदसंहितासाहित्यं ब्राह्मणसाहित्यं च
५. ब्राह्मणसाहित्यम्
६. आरण्यकसाहित्यम् उपनिषत्साहित्यं च
७. वेदाङ्गसाहित्यम्

### वैदिकस्वरप्रक्रिया

८. साधारणस्वरप्रकरणम्-१
९. साधारणस्वरप्रकरणम्- २
१०. धातुस्वरः प्रातिपदिकस्वरः च
११. फिट्-स्वरः
१२. प्रत्ययस्वरः
१३. समासस्वरः
१४. तिङन्तस्वरः

## पुस्तकम्- २

### वैदिकसूक्ताध्ययनम्

१५. अग्निसूक्तम्
१६. इन्द्रसूक्तम्
१७. हिरण्यगर्भसूक्तम्
१८. पुरुषसूक्तम्
१९. देवीसूक्तं श्रद्धासूक्तं च
२०. विष्णुसूक्तं मित्रावरुणसूक्तं च
२१. अक्षसूक्तम्
२२. पर्जन्यसूक्तं मनुमत्स्यकथा च
२३. शिवसङ्कल्पसूक्तं प्रजापतिसूक्तं च
२४. रुद्राध्यायः
२५. पृथिवीसूक्तम्
२६. सरमापणिसंवादसूक्तम्

# वेदाध्ययनम्

# उच्चतरमाध्यमिककक्षा

## प्रथमं स्वाध्यायसोपानम्

क्रमः विषयसूची पृष्ठसंख्या

१

# वैदिकवाङ्मयस्य वैलक्षण्यं वेदप्रामाण्यविमर्शः च

## प्रस्तावना-

अस्माकं वैदिकवाङ्मयम् विलक्षणम् वर्तते। लौकिककाव्यस्य अपेक्षया वैदिकं काव्यं विदुषां मनसि अधिकम् आह्लादं जनयति। वैदिककाव्यस्य विषये विदुषां मनसि कोऽपि सन्देहः नास्ति। वैदिकाः ऋषयः मनोगतानां भावानां प्रकटने पटव आसन्। वस्तुतस्तु वेदाः अपौरुषेया इति आस्तिकानां मतम्। ऋषयः केवलं मन्त्राणि दृष्टवन्तः न तु कृतवन्तः। वेदे काव्यत्वं स्वतः एव वर्तते। किन्तु ऋषीणां मुखादेव प्रथमतया तेषां प्रकाशः अभवत् इति ऋषीणां कवित्वम्। वैदिकमन्त्रेषु विविधरसाः स्फुटाः वर्तन्ते। उपमादीनाम् अलङ्काराणाम् अवतारणा वैदिककाले एव अभवत्। वैदिकवाङ्मये अलङ्काराणाम् उपयोगः व्यर्थः नास्ति। यतो हि एभिः अलङ्कारैः नैके सूक्ष्मार्थाः प्रकाशिताः अभवन्। कविषु श्रेष्ठः कविः भवति वैदिकः ऋषिः। वैदिकमन्त्रेषु प्रकृतेः अपि मनोहरं वर्णनं प्राप्यते। इमान् विषयान् वयम् अस्मिन् पाठे पठामः। अपि च अत्र वयं वेदस्य प्रामाण्यविषये आलोचनां कुर्मः।



## उद्देश्यानि-

इमं पाठं पठित्वा भवान्

- वैदिकवाङ्मयस्य विलक्षणताम् अधिगमिष्यति।
- वेदेषु रसस्य विधानं कथं भवति इति बोद्धुं शक्नुयात्।
- वैदिकानाम् ऋषीणां कवित्वविषये ज्ञास्यति
- वेदे अलंकाराणाम् उपयोगः कथम् अस्ति इति अवगच्छेत्।
- वेदे सौन्दर्यपरिकल्पनं कथम् अस्ति तद्विषये ज्ञातुं समर्थः भवेत्।
- वेदस्य प्रामाण्यविषये जानीयात्।



## १.१) भूमिका

लौकिककाव्यादिभ्यः वैदिकवाङ्मयस्य विलक्षणता विद्यते। इयं च विलक्षणता वेदस्य पद्येषु गद्येषु च प्रकाशिता। यद्यपि लौकिकानि काव्यानि बहूनि सन्ति तथापि विद्वांसः वैदिकवाङ्मये एव अधिकम् आह्लादं प्राप्नुवन्ति। निखिलेषु काव्येषु वैदिकं काव्यम् एव प्रथमम् इति विदुषां मतम्। लौकिककाव्यानां स्थानं तु वैदिककाव्यात् परमेव विद्यते। वेदे मिथिलादिनगरीणाम् अतीव रमणीयं वर्णनं वर्तते। यथा तत्र वृत्रासुरस्य विकटरूपस्य वर्णनं प्राप्यते तथा देवासुरसङ्ग्रामस्य अपि वर्णनं लभ्यते। एतानि वर्णनानि पाठकानां मनःसु आनन्दं जनयन्ति।

वैदिकाः ऋषयः मनोगतभावान् सम्यक् प्रकटितवन्तः। मनोगतभावानां सुन्दरतया प्रकटनाय अलङ्काराः आवश्यकाः भवन्ति। ऋषयः अपि स्थाने स्थाने मनोगतभावानां प्रकटने अलङ्कारप्रयोगं कृतवन्तः। वैदिकमन्त्रेषु अपि बहुशः अलङ्काराः प्राप्यन्ते। काव्यसंसारे कविता यावती प्राचीना वर्तते उपमालङ्कारः अपि तावान् एव प्राचीनः वर्तते। कविः यत्र कुत्रापि अलङ्काराणां व्यवहारं न करोति। प्रसङ्गानुसारम् एव तेन अलङ्काराणां व्यवहारः क्रियते। तेषां प्रयोगेण च स बहु दुर्बोध्यम् अपि विषयं स्वल्पैः एव पदैः अतीव सरलतया प्रकटयति। वैदिकवाङ्मये अर्थप्रतिपादनाय अलङ्काराणां प्रयोजनं विद्यते। यथा चन्द्रः घनान्धकारेण आच्छन्नां रात्रिम् आलोकितां करोति, तद्वत् अलङ्कारैः वैदिकवाङ्मयस्य दुरवगम्याः विषयाः बोधगम्याः भवन्ति। तत्र अनुप्रासः उपमा उत्प्रेक्षा दृष्टान्तः अर्थान्तरन्यासः इत्यादयः अलङ्काराः स्थाने स्थाने समुपलभ्यन्ते।

वैदिकवाङ्मये अलङ्काराणां प्रयोगेण रसः एव प्रतिपादितः। समुचिते सन्दर्भे इमे अलङ्काराः काव्यशोभां नितराम् अभिवर्धयन्ति। कविः स्वानुभवं सहृदयहृदयपर्यन्तं सरलतया सम्प्रेषयितुं तदनुरूपं अलङ्कारादियुक्तं वाक्यं व्यवहरति। वयम् एवंविधस्य काव्ययुगस्य कल्पनाम् अपि कर्तुं न शक्नुमः यत्र उपमादयः अलङ्काराः न प्रयुक्ताः।

वैदिकसूक्तेषु नानादेवतानां यज्ञं प्रति समागमनाय पार्थिवसुखस्य सम्पादनाय आध्यात्मिकभावस्य उन्मेषणाय च बहुविधेषु छन्दःसु प्रार्थना कृता अस्ति। प्रार्थनाऽवसरे कविः तासां पवित्रभावानां भव्यरूपाणां च सम्यग् वर्णनं कृतवान्। व्यङ्ग्यार्थप्रतिपादकानि वाक्यानि च तत्र विद्यन्ते। वैदिकर्षयः उच्चविचारान् कर्तुं समर्थः आसीत्। कलारहितं जीवनं तेभ्यः न रोचते स्म। स कलासु कुशलं जीवनं द्रष्टुम् इष्टवन्तः। तेषां मते तदेव जीवनं भवति यस्मिन् कलाः तिष्ठन्ति। वेदः अपि जीवनं कलायुक्तं भवेत् इति सम्भावयति। वेदवेदाङ्गेषु क्वचित् उषाविषयकेषु मन्त्रेषु सौन्दर्यभावना अधिकतया दृश्यते। क्वचित् च इन्द्रविषयकमन्त्रेषु तेजस्वितायाः प्राचुर्यं परिलक्ष्यते। यथा अग्नेः रूपवर्णनप्रसङ्गे स्वभावोक्त्यलंकारः प्रयुज्यते तथा वरुणस्तुतौ हृद्गतकोमलभावानां माधुर्यगुणस्य च प्रकाशः वर्तते। **"उतत्वः पश्यन् न ददर्श वाचं, जायेव पत्ये उषती सुवासा", "द्वा सुपर्णा सयुजा सखाया"** इत्यादीनि अनेकानि वाक्यानि वेदेषु सन्ति। एतेषां वाक्यानाम् अभिप्रायं साहित्यशास्त्रेषु अनभिज्ञः ज्ञातुं न प्रभवति। एवं यो जनः साहित्यशास्त्रं न जानाति स व्यञ्जनया प्रतिपाद्यमानान् वैदिकार्थान् ज्ञातुं न शक्नोति। अनेन प्रकारेण वैदिकमन्त्रेषु काव्यस्य गुणाः भूयशः दृश्यन्ते येषां ज्ञानं वैदिकमन्त्राणाम्

अर्थावगमने अत्यन्तमावश्यकम् अस्ति। तन्मयतायाः अनन्यतायाः च उत्कृष्टं वैशिष्ट्यं वेदेषु समुपलभ्यते। वेदेषु एव भावानां सहजा सरला च अभिव्यक्तिः अस्ति।



## पाठगतप्रश्नाः-१

१. उपमा काव्यसंसारे कियती प्राचीना।

२. मनोगतभावानां प्रकाशाय के आवश्यकाः भवन्ति।

३. केषाञ्चित् अलङ्काराणां नामानि लिखन्तु।

४. कलारहितं जीवनं केभ्यः न रोचते।

५. साहित्यशास्त्रेषु अनभिज्ञः किं ज्ञातुं न प्रभवति।

## १.२) रसविधानम्

ऋग्वेदस्य मन्त्रेषु अनेके रसा वर्तन्ते। अतः ते मन्त्राः अस्माकं मनसः प्रधानम् आकर्षणम् अस्ति। वैदिकर्षीणां मनोगतभावानां सरलनिदर्शनम् एतेषु मन्त्रेषु समुपलभ्यते। ऋङ्मन्त्रेषु इन्द्रस्तुतौ वीररसस्य सम्यग् अभिव्यक्तिः जाता। दाशरात्रसूक्ते महर्षिः वसिष्ठः राज्ञः दिवोदासस्य तथा तस्य प्रतिपक्षिणां मध्ये यः सङ्घर्षः अभवत् तस्य सुष्ठु वर्णनं कृतवान्।

गृत्समदर्षिः अनेकासु स्तुतिषु वीररसम् आश्रित्य इन्द्रस्य वर्णनम् अकरोत्। यथा -

**'यस्मान्न ऋते विजयन्ते जनासोऽयं युध्यमाना अवसे हवन्ते।**

**यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत् स जनास इन्द्रः॥**

(ऋग्वेदे २/१२/९)

अस्य मन्त्रस्य अयम् अर्थः - इन्द्रं विना न कोऽपि मानवो विजयं प्राप्नोति। योद्धारः आत्मरक्षार्थं तम् एव आह्वयन्ति। निखिलेषु देवेषु असौ इन्द्रः श्रेष्ठतमः अस्ति। किन्तु ये इन्द्रपदस्य प्राप्तये कठोरसाधनां कुर्वन्ति स तेषां सङ्कल्पभङ्गं करोति। इन्द्रो हि शौर्यस्य वीर्यस्य च प्रतीकः। अत्र इन्द्रस्य माहात्म्यवर्णने वीररसः स्फुटः वर्तते।

इत्थं सर्वत्र स्थितानां भावानाम् अभिव्यक्तिः कविना समुचितेन प्रशंसनीयेन च प्रकारेण कृता अस्ति। कवेः लेखनी प्रभूतबलशालिनी भवति। अतः तस्य प्रत्येकं पदं बहून् अर्थान् प्रकाशयति। अत एव एतस्मात् श्लोकात् काव्यसौन्दर्यम्, ओजसः छटा, रीतेः प्रकर्षः, पूर्णोपमा इत्यादीनि पाठकानां चेतांसि युगपत् आकर्षन्ति। ऋषेः सर्वे प्रयासाः अत्र वीररसम् एव परिपोषयन्ति।

सौन्दर्यम् एव काव्यस्य 'रस' इति विद्वांसः अपि स्वीकुर्वन्ति। कविः तम् एव रसं साधयितुं काव्यं रचयति। सः रसः शृङ्गारकरुणादिभेदेन नवविधः। नवसु अपि रसेषु शृङ्गारो नाम रसो रसराज इति सर्वे



अपि साहित्यशास्त्रज्ञाः वदन्ति। यथा शृङ्गाररसः अस्माकं मनः मोदयितुं शक्नोति तथा अन्ये रसाः कर्तुं न प्रभवन्ति। अतः सः रसेषु श्रेष्ठतमः अस्ति। स शृङ्गाररसः संभोगशृङ्गारः विप्रलम्भशृङ्गारः इति भेदेन द्विविधः वर्तते। एतयोः मध्ये विप्रलम्भशृङ्गारः मधुरतरः। तत्र मनः काव्यप्रतिपाद्यविषयेषु अनायासेनैव लग्नं भवति। तस्मात् उत्तमः मधुरतमः च कोपि रसः न प्राप्यते।

ऋग्वेदस्य अनेकेषु सूक्तेषु शृङ्गाररसस्य उल्लेखः प्राप्यते। तत्र एकस्मिन् सूक्ते पुरूरवा-उर्वश्योः प्रणयप्रसङ्गे विरहपीडितस्य नायकस्य कथने विप्रलम्भशृङ्गाररसस्य सङ्केतः प्राप्यते-

**'इषुर्न श्रिय इषुधेरसना गोषाः शतसा न रंहिः।**

**अवीरे क्रतौ विदविधुवन्नोरा न मायुं चितयन्तः धुनयः।।'**

शृङ्गाररसाभासस्य अपि सङ्केतः यमयमीसूक्ते (१०/१०) उपलब्धो भवति। यत्र यमी स्वभ्रातुः यमस्य समीपं गत्वा सङ्गमार्थं प्रार्थनां करोति। यमः तु तस्याः प्रलोभनेन न आकृष्टः।



## पाठगतप्रश्नाः-२

६. दाशरात्रसूक्ते केन राज्ञः दिवोदासस्य तथा तेषां प्रतिपक्षिणां सङ्घर्षस्य सुष्ठु वर्णनं कृतम्।

७. क ऋषिः अनेकासु स्तुतिषु वीररसम् आश्रित्य इन्द्रस्य वर्णनं कृतवान्।

८. कं विना न कोऽपि मानवो विजयं प्राप्नोति।

९. शौर्यस्य वीर्यस्य च प्रतीकः कः अस्ति।

१०. कविः किं साधयितुं काव्यं करोति।

११. नवसु अपि रसेषु कं रसं रसराजरूपेण सर्वे अपि साहित्यशास्त्रज्ञाः विदन्ति।

१२. शृङ्गारस्य द्वौ भेदौ कौ।

१३. शृङ्गारस्य द्वयोः भेदयोः मध्ये कः शृङ्गारः मधुरतरः।

१४. शृङ्गाराभासस्य सङ्केतः कुत्र उपलब्धो भवति।

## १.३) अलंकारविधानम्

ऋग्वेदस्य मन्त्रेषु अलङ्काराणां प्राचुर्यं परिलक्ष्यते। एते अलङ्काराः स्वतः आविर्भूताः सन्ति। वैदिकेषु अलङ्कारेषु यत्सौष्ठवं यत्पाटवं यत् च आर्जवं दृश्यते तद् अन्यत्र न प्राप्यते। वैदिकः ऋषिः कविषु श्रेष्ठः कविः अस्ति। सः प्रेम्णः परमोपासकः महान् भावुकः सौन्दर्यप्रियेषु शिरोमणिः च वर्तते। अतः सर्वस्य अपि जगतः ज्ञानं तस्य अस्ति। अलङ्काराः सौन्दर्यस्य प्रकटीकरणे अपि पटवः वर्तन्ते। एते अलङ्काराः कविकथनं प्रभावशालि कर्तुं, विषयान् रमणीयतया प्रतिपादयितुं, हृदयगतभावं च प्रकाशयितुं



सर्वथा समर्थाः सन्ति। रूपकं तु वेदस्य एकः प्रशंसनीयः प्रसिद्धः च अलङ्कारः अस्ति। वेदानां शैली एव रूपकमयी वर्तते। सुष्ठूनाम् उपमानानां सम्यक् आलोचनम् अत्र विहितं वर्तते। अन्येषु अलङ्कारेषु अतिशयोक्त्यलङ्कारस्य व्यतिरेकालङ्कारस्य समासोक्त्यलङ्कारस्य च प्रयोगः अत्र दृश्यते। तत्र उपमालङ्कारस्य उदाहरणं यथा -

**'अभ्रातेव पुंस एति प्रतीची गर्त्ता रुगिव सनये धनानाम्।**

**जायेव पत्य उशती सुवासा उषा हस्रेवः निरिणीते अप्सा।।' इति।।**

अस्य मन्त्रस्य अयम् अर्थः - कदाचिद् उषा भ्रातृहीना भगिनी इव स्वदायभागं प्राप्तुं पितृस्थानीयस्य सूर्यस्य समीपम् आगच्छति। कदाचित् पतिम् अनुरञ्जयितुं सुवस्त्रस्य धारणं करोति। किञ्च कामासक्ता कामिनी इव पत्युः पुरस्तात् निजसौन्दर्यं प्रकटीकरोति।

वैदिककविः पार्श्ववर्त्तिनः पशुजीवनस्य अपि उपमानरूपेण प्रयोगं कृतवान्। सायंकाले स्वस्थानं प्रत्यागतानां गवां दृश्यम् तेषाम् अतीव प्रियम् अस्ति।

इन्द्रस्तुतौ (१/३२) आङ्गिरसहिरण्यस्तूपस्य ऋषेः इयम् उक्तिः अस्ति यत् त्वष्ट्रा निर्मितेन स्वरयुक्तवज्रेण यदा इन्द्रः पर्वताश्रितं वृत्रासुरं निहतवान् तदा रम्भणं कुर्वन्तः समागताः गावः इव जलानि समुद्रं प्रति अगच्छन्-

**'अहन्नहिपवते शिश्रियाणां त्वष्टास्मै वज्रं स्वयं ततक्ष।**

**वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमवदग्मुरापः॥' इति।।**

- ऋग्वेदः १/३२/२

सामान्यतया यः अर्थः बहुभिः पदैः वर्ण्यते, उपमालङ्कारस्य प्रयोगेण स अर्थः स्वल्पैः पदैः प्रकाशितो भवति। यथा 'वाश्रा धेनवः' इत्यनेन पदेन ऋषिः वृष्ट्या सह शब्दं कुर्वतीनां धेनुनां साम्यं प्रकटितवान्। अत्र स वेदपाठकानां पुरस्तात् झञ्झावातेन सह वृष्टिः, समुद्रं प्रति जलस्य वेगेन प्रवाहः, तस्या वृष्टेः अलङ्घनीयता चेत्यादिकं सर्वं सरसं वर्णयति।

हृदयवृत्तीनां सम्यक् प्रकटनाय वरुणसूक्तानाम् अनुशीलनं विशेषरूपेण सहायकः भवति। ऋग्वेदस्य एकस्मिन् सूक्ते (ऋग्वेदः ७/८६) स्वकीयम् आराध्यदेवं वरुणं प्रति महर्षेः वसिष्ठस्य विनम्रता प्रकटिता। तत्र ऋषिः आत्मानं पृच्छति - कदा अहं वरुणस्य मैत्रीं प्राप्स्यामि। क्रोधरहितो भूत्वा कदा वरुणः मया प्रदत्तं हविष्यं ग्रहीष्यति। कदा अहं प्रसन्नमनाः भूत्वा तस्य प्रसादं प्राप्स्यामि।

**'उतस्वया तन्वा संवदे तत्कदान्वन्तर्वरुणे भुवानि।**

**किं मे हव्यमहृणानो जुषेव कदा मृडीकं सुमना अभिख्यम्।।' इति।।**

-(ऋग्वेदः ७/८६/२)

अत्र महर्षिः वशिष्ठः वरुणदेवं प्रार्थयति - हे देव! कृतद्रोहान् अपेहि। तान् द्रोहान् विरोधान् च अपह्रियताम्, ये मया स्वशरीरेण कृताः। यथा पशूनाम् अपहर्त्तारं चौरं यथा वा रज्वा बद्धं वत्सं जनाः मुक्तं कुर्वन्ति तथैव मम अपराधेन बद्धं वसिष्ठं त्वं मोचय।



**'अव द्रुग्धानि पित्र्या सृज्या नोऽव या वयं चकृमा तनूभिः।**

**अव राजन् पशुतृपं न वायुं सृजा वत्सं न दाम्नो वसिष्ठम्।।' इति।।**

- (ऋग्वेदः ७/८६/५)

अस्मिन् सूक्ते आत्मसमर्पणं नम्रता दीनता अपराधस्वीकृतिः इत्यादयः भव्यभावनाः दृश्यन्ते। इदं सूक्तं तस्य वैष्णवभक्तानां वाणीं स्मारयति यत्र ते सहस्रम् अपराधान् कृत्वा अपि भगवन्तं साक्षात्कर्त्तुम् इच्छन्ति।

सूर्योदयस्य दृश्यम् अपि तस्य अतीव प्रियम् अस्ति। अस्य वर्णनं स बहून् अलङ्कारान् आश्रित्य कृतवान्। प्रभातवर्णनप्रसङ्गे सः कथयति यत् यथा कोऽपि जनः किमपि चर्म नीत्वा जलाभ्यन्तरे स्थापयति तथैव सूर्योदयात् परं तस्य किरणानि अन्धकारं निक्षिपन्ति -

**'दविध्यतो रश्मयः सूर्यस्य चर्मेवावाधुस्तमो अप्स्वन्तः।'**

(ऋग्वेदः ४/१३/४)

रूपकाणाम् अपि बाहुल्यम् ऋग्वेदस्य मन्त्रेषु उपलब्धम् अस्ति। सूर्यः आकाशस्य स्वर्णिमः मणिः अस्ति -**"दिवो रुक्म उरुचक्षा उदेति" इति (ऋग्वेदः ७/६३/४)**। सूर्यः ज्वलितप्रस्तरखण्डः अस्ति यदाकाशे स्थापितः - **"मध्ये दिवो निहितः पृश्नरश्मा" इति (ऋग्वेदः ५/४७/३)**। अग्निः स्वप्रभया आकाशं स्पृशति - **"धृतप्रतीको बृहता दिवि स्पृशा" इति (ऋग्वेदः ५/१/१)**। इदं स्पष्टम् एव अस्ति यद् एते मन्त्राः अतिशयोक्तिमूलकाः सन्ति। ऋग्वेदे अतिशयोक्त्याः प्रख्यातम् उदाहरणम् अस्ति। तत्र सायणानुसारं यज्ञस्य, पतञ्जल्यानुसारं शब्दस्य, राजशेखरानुसारं काव्यस्य वा स्तुतिः कृता अस्ति। तथाहि -

**'चत्वारि शृङ्गास्त्रयोऽस्य पादा द्वे शीर्षे सप्त हस्तासौ अस्य।**

**त्रिधा बद्धो बृषभो रोरवीति महोदेवो मर्त्याम् आविवेश।। इति।।**

**(ऋग्वेदः ४/५८/३)**

अपरमपि उदाहरणम् अस्ति-

**'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**

**तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्यो अभचाकशीति।।' इति।।**

अस्य मन्त्रस्य अयम् अर्थः - सुपक्षधरौ सहवासिनौ समानख्यातौ द्वौ पक्षिणौ एकस्य एव वृक्षस्य उपरि स्थितौ। तयोः विहगयोः एकः सुस्वादुफलं भुङ्क्ते, अपरः तु अभुक्त्वा एव तिष्ठति। अत्र पक्षिद्वयेन जीवात्मपरमात्मानौ उपमीतौ। अत्र अतिशयोक्त्यलङ्कारः अस्ति। पक्षिद्वयस्य स्वभावः समानः नास्ति। तेन व्यतिरेकाऽलङ्कारस्य अपि गूढः सङ्केतः अत्र प्राप्यते व्यतिरेकस्य अपरम् अपि सुष्ठु उदाहरणम् ऋतचक्रस्य वर्णने प्राप्यते - 'द्वादशारं नहि तज्जराय वर्वत्ति चक्रं परिधामृतस्य' इति। (ऋग्वेदः १/१६४/११)।



उपनिषत्सु अपि अनेकेषाम् अलङ्काराणां दृष्टान्ताः लभ्यन्ते। कठोपनिषदि रथस्य रूपकं शरीरम् अस्ति (१/३/३)। ऋग्वेदे ऋतुवर्णनपराः अनेके मन्त्रा प्राप्यन्ते। पर्जन्यसूक्ते (५/८३) वर्षाकालस्य अतीव नैसर्गिकं वर्णनम् अस्ति। मण्डूकसूक्ते अपि (७/१०३) वर्षाकालस्य एकं रमणीयं दृश्यं वर्णितम् अस्ति। तत्र एकस्य मण्डुकस्य शब्दं श्रुत्वा अपरः अपि टरटरायते। यथा गुरुः वेदपाठं करोति शिष्याः च तम् अनुवदन्ति तथैव अयं मण्डुकध्वनिः वर्तते -

**'यदेषामन्यो अन्यस्य वाचं शाक्तस्येव वदति शिक्षमाणः।**

**सर्वं तदेषां समृधेव पर्वं यत् सुवाचो वदतनाध्यप्सु।। इति।।'**

अनेन प्रकारेण अलङ्काराणां प्रभा आलोचकानां दृष्टिम् असकृत् आकर्षति।



## पाठगतप्रश्नाः-३

१५. वेदेषु प्रशंसनीयः अलङ्कार कः अस्ति।

१६. वेदानां शैली कथं वर्तते।

१७. ऋतुवर्णनपराः मन्त्राः कुत्र लभ्यन्ते।

१८. व्यतिरेकस्य सुष्ठु उदाहरणं कुत्र प्राप्यते।

## १.४) सौन्दर्यपरिकल्पनम्

उषादेव्याः विषये यानि सूक्तानि समुपलब्धानि तेषां पर्यालोचनेन ज्ञातं भवति यद् एतानि सूक्तानि काव्यदृष्ट्या अपि सरसानि सरलानि भव्यभावपूर्णानि च सन्ति। प्रभाते सूर्यस्य किरणैः आलोकितं पूर्वाकाशं कस्य सहृदस्य हृदयं न आह्लादयति। वैदिकर्षिः तत् सौन्दर्यं प्रेम्णा एव पश्यति। तद् दिव्यरूपं दृष्ट्वा स मोहितो भवति।

कस्यचन पदार्थस्य स्वाभाविकतया यद् वर्णनं भवति तदेव वर्णनं कलायाः उत्कृष्टत्वं द्योतयति। यद्रस्किन-महोदयः उक्तवान् यत् वैदिकाः ऋषयः सम्यक् प्रकृतिवर्णनं कुर्वन्ति। प्रकृतिवर्णने उषादेव्याः सौन्दर्यकथने च तस्य निरीक्षणपाटवं सहृदयता कल्पनाशक्तिः च विशेषेण प्रकाशितानि। अनेन ज्ञातं भवति यत् शैशवात् प्रकृतिमातुः क्रोडे एव ऋषीणां क्रीडनं वर्द्धनञ्च अभवत्। अतः उषाकालस्य वर्णने प्रकृतिः तथा विराजते यथा मणिमालायां स्वर्णसूत्रं विराजते। उषा केवलं बाह्यसौन्दर्यस्य एव प्रकाशिका नास्ति प्रत्युत सा कवेः आन्तरिकसौन्दर्यम् अपि सुतरां प्रकाशयति। अत्र उषादेव्याः कोमलत्वस्य कृशाङ्गत्वस्य सितस्पर्शत्वस्य च तथा मनोरमं वर्णनं प्रदत्तं येन पाठकानां मनांसि सुतरां समुल्लसितानि भवन्ति।



वैदिकर्षेः प्रतिभा उषादेव्याः चरित्रचित्रणे सर्वथा एव कुशला। कविः अत्र उषादेव्याः यत् चरित्रं चित्रयति तत् सहृदयानां हृदये उल्लासं जनयति। अत एव कविः कथयति- 'हे प्रकाशवति उषे! त्वं कमनीया कन्या इव अत्यन्तम् आकर्षणमयी भूत्वा इष्टफलप्रदातुः सूर्यस्य समीपं गच्छसि किञ्च तत्र गत्वा दिवाकरस्य पुरस्तात् स्मितानना तरुणीव स्ववक्षःप्रदेशम् अनावृतं करोषि। तव ईदृशं रूपं कः विस्मर्त्तुं शक्नोति। अनावृतं वक्षःस्थलं दृष्ट्वा कः वा मानवः प्रेरणां न प्राप्नोति। तथाहि -

**'कन्येव तन्वा शाशदानां एषिदेवि देवमियक्षमाणम्।**

**संस्मयमाना युवतिः पुरस्तादाविर्वक्षांसि कृणुसे विभाती।।' इति।।**

- (ऋग्वेदः १/१२३/१०)

अत्र कवेः मानवीकरणस्य भावना अतिप्रबला अस्ति। अत्र उषादेव्याः कुमारीरूपस्य कल्पना वर्तते। सा च भावना स्मितवदनायाः तस्याः सुन्दरस्वरूपं प्रकटयति। युवतिकन्यायाः कल्पना तस्याः सूर्यस्य समीपे गमनम् इत्यादयः भावनाः अत्र कवेः व्यापकदृष्टित्वं ज्ञापयति।

कविः उषादेव्याः विषये अन्याः अपि कल्पनाः कृतवान्। उषा स्वप्रकाशेन संसारं तथा संस्कृतं करोति यथा कोऽपि योद्धा निजशस्त्राणां घर्षणेन तेषां संस्कारं करोति। तथाहि -

**"अपेजते शूरो अस्तेव शत्रून् बाधते तमो अजिरा न बोलहा।" इति॥**

- (ऋग्वेदः ६/६४/३)

उषा स्वप्रकाशं तथा प्रसारयति यथा गोपाः गोचारणभूमौ स्वकीयाः गाः प्रसारयन्ति अथवा यथा काऽपि नदी स्वजलानि प्रसारयति-

**"पशून्न चित्रा सुभगा प्रथाना सिन्धुर्नक्षोद उर्विया व्यश्वैत।"**

- (ऋग्वेदः १/९२/१२)

उषा प्रतिदिनम् उदेति इति तस्याः अमरत्वम् अपि अत्र वर्ण्यते -

**"उषः प्रतीची भुवनानि विश्वोर्ध्वा तिष्ठस्य मृतस्य केतुः।"**

- (ऋग्वेदः ३/६/३)

कवेः दृष्टौ उषादेव्याः गमनागमनं चक्रवत् अस्ति। येन प्रकारेण चक्रं सदा एव आवर्तितं भवति तथा उषादेवी अपि नित्यम् आवर्तनं करोति -

**"सामानामर्थं चरणीयमाना चक्रमिव नव्यस्यावर्वृत्स्व।"**

- (ऋग्वेदः ३/६/३)





## पाठगतप्रश्नाः-४

१९. उषावर्णने प्रकृतिः कथं विराजते।

२०. उषादेवी स्वप्रकाशं कथं प्रसारयति।

२१. उषादेवी दिवाकरस्य पुरस्तात् गत्वा किं करोति।

## १.५) प्रकृतिचित्रणम्

प्रकृतेः वर्णनं प्रकारद्वयेन भवितुम् अर्हति-

### १.५.१) अनावृतं वर्णनम्

प्रकृतेः स्वतः आलम्बनत्वेन वर्णनम् अनावृतवर्णनम्। अत्र प्रकृत्याः नैसर्गिकं माधुर्यं कविहृदयम् आकृष्टं करोति तथा अनिर्वचनीयेन आनन्देन कविमानसं तोषयति।

### १.५.२) अलङ्कृतवर्णनम्

अलङ्कृतवर्णने प्रकृत्याः तथा तस्याः व्यापाराणां मानवीकरणं भवति। तत्र प्रकृतिः चैतन्यप्राणिनाम् इव नानाविधकर्मणां सम्पादनं करोति। सा कदाचित् स्मितवदना कुमारी इव दर्शकानां हृदयम् आकृष्टं करोति। कदाचिद् भीषणजन्तुः इव अस्माकं हृदये भयं क्षोभं च समुत्पादयति।

उषादेव्याः वर्णने वैदिककवेः द्विविधाभावनाः प्रकाशिताः भवन्ति। पूर्वस्यां दिशि प्रभाते उषायाः स्वरूपं दृष्ट्वा वैदिककवेः हृदयम् आनन्देन पूरितं भूत्वा कथयति-

**"उषो देव्यमर्त्या विभाहि चन्द्ररथा सूनृता ईरयन्ती।**

**आत्त्था वहन्तु सुयमासो अश्वाः हिण्यवर्णा पृथववाजसो ये।" इति।।**

- (ऋग्वेदः ३/६१/२)

अस्य मन्त्रस्य अयम् अर्थः - हे प्रकाशमयि उषे! त्वं सुवर्णरथे आरूढा असि। त्वम् अमृतत्वं प्राप्तवती। अतः त्वं दिव्या। तव उदयकाले विहगाः श्रुतिमधुरं कलरवं कुर्वन्ति। हिरण्यवर्णाः सुशिक्षिताः सुदर्शनाः च अश्वाः पृथुबलेन त्वां वहन्तु।

अलङ्कृतवर्णनावसरे उषायाः मनोहररूपस्य व्यापारस्य च हृदयग्राहि वर्णनं प्राप्यते -

**जायेव पत्या उशती सुवासा उषा हस्रेव निरिणीते अप्सः।** (ऋग्वेद १/१२४/७)

अत्र कविः नारीणां कोमलहृदयस्य स्पर्शं करोति। नारीजीवनं प्रेमपूर्णं भवति। प्रेम प्रकृत्याम् अपि प्राणप्रदां शक्तिं सञ्चारयति। प्रेम्णा प्रकृतिः जीवति, श्वसिति वर्धते च। जीवनस्य मूलभूतं लक्ष्यम् एव



वर्तते नारीप्रेम। न केवला नारी प्रत्युत नरनार्यौ उभौ अपि तत्र अपेक्षितौ। वैदिककविः उषायाः रूपवर्णनेन मानवजीवनस्य प्रेमरूपं प्रधानं तत्त्वमेव वर्णयति। स इच्छति यत् जीवनं प्रेम्णा पवित्रं भवेत्। तस्य मते न तत् प्रेम यत् अनाचारदोषेण दूषितं स्वार्थविशेषसाधकं वा विद्यते। तस्मात् स पवित्रप्रेमपूर्णे जीवने महतीम् एव श्रद्धां प्रकाशयति।



## पाठगतप्रश्नाः-५

२२. जीवनस्य प्रधानं लक्ष्यं किम्।

२३. किं प्रकृत्यां प्राणप्रदां शक्तिं सञ्चारयति।

२४. अश्वाः कस्य बलेन उषादेवीं वहन्तु।

२५. अलङ्कृतवर्णने केषां मानवीकरणं भवति।

२६. कविः कुत्र श्रद्धां प्रकटितवान्।

## १.६) अथ वेदप्रामाण्यम्

लक्षणं प्रमाणं च विहाय कस्य अपि वस्तुनः सिद्धिः न भवति। तथाहि उच्यते- 'लक्षणप्रमाणाभ्यां वस्तुसिद्धिः' इति। वेदस्य लक्षणविषये इतः पूर्वं वयम् आलोचनां कृतवन्तः। अस्मिन् परिच्छेदे अस्माकम् आलोच्यविषयः वेदप्रामाण्यम् इति। तत्र आदौ अयं प्रश्नः समुदेति यत् कीदृशं वाक्यं प्रमाणम् इति। तत्र उत्तरं हि यस्य वाक्यस्य अर्थविषये सन्देहस्य अवकाशः नास्ति, यस्य वाक्यस्य अर्थः पूर्वम् अज्ञातः अनधिगतो वा अस्ति, यस्य वाक्यस्य अर्थविषये कापि बाधा नास्ति अर्थात् यस्य वाक्यस्य अर्थः केनापि अनुभवेन खण्डितो न भवति तादृशं वाक्यम् एव प्रमाणम्। तस्मादेव उक्तम् - 'असन्दिग्ध-अनधिगत-अबाधितार्थबोधकं वाक्यं प्रमाणम्' इति।

यदा वेदवाक्येषु सन्देहः, ज्ञातस्य अर्थस्य ज्ञापनम्, बाधा इत्यादयः दोषाः न तिष्ठन्ति तदा वेदवाक्यं प्रमाणरूपेण गण्यते। प्राचीनकालाद् आरभ्य चार्वाकप्रभृतयः वेदविरोधिनः सम्प्रदायाः वेदस्य प्रामाण्यं खण्डयितुं विविधाः युक्तीः समुपस्थापयन्ति। वेदस्य प्रामाण्यं नित्यत्वम् अपौरुषेयत्वम् इत्यादीनि गूढतत्त्वानि महर्षिः जैमिनिः तस्य पूर्वमीमांसाग्रन्थे उपस्थापितवान्। स चार्वाकादीनां मतं पूर्वपक्षमतरूपेण संस्थाप्य तेषां मतानां खण्डनं कृतवान्। महर्षिः जैमिनिः वेदविरोधिनां वाक्यानां खण्डनाय याः युक्तीः समुपस्थापितवान् तासां विवरणम् अपि च कथं स ताः वेदविरोधिनीः युक्तीः खण्डितवान् इत्यस्मिन् विषये अस्मिन् पाठे आलोच्यते।



केचन प्रत्यक्षानुमानशब्दागमप्रमाणैः वेदस्य अस्तित्वं प्रतिपादयन्ति। आप्तपुरुषाणाम् उपदेशः हि शब्दप्रमाणम् - 'आप्तोपदेशः शब्दः' इति। इदं शब्दप्रमाणं वेदस्य अस्तित्वं प्रतिपादयितुं न समर्थः। यतो हि इदं प्रमाणं यथा वेदे प्रयुक्तं दृश्यते तथैव वेदबहिर्भूते स्मृतिशास्त्रे अपि। अतः इदं शब्दप्रमाणं वेदस्य स्वकीयं नास्ति। अत्र दोषः वर्तते। मुण्डकोपनिषदि ऋग्वेद-यजुर्वेद-सामवेद-अथर्ववेदानां च उल्लेखः अस्ति। छान्दोग्योपनिषदि नारदः यदा अधीतशास्त्रविषये सनत्कुमारं प्रति उक्तवान् तदा चतुर्णां वेदानाम् उल्लेखम् अपि कृतवान्। यदि उच्यते वेदस्य मध्ये एव वेदचतुष्टयस्य नामोल्लेखः अस्ति इत्यतः एताः उक्तयः वेदस्य अस्तित्वे प्रमाणभूताः तर्हि आत्माश्रयत्वरूपस्य दोषस्य आविर्भावः भवति। स्मृतिग्रन्थेषु वेदस्य उल्लेखः अस्ति अतः स्मृतिग्रन्थाः वेदस्य अस्तित्वं प्रमाणयन्ति इति यदि उच्यते तर्हि तत्रापि दोषः अस्ति। यतो हि स्मृतिग्रन्थानां प्रामाण्यं वेदस्य प्रामाण्यम् आश्रयति। मीमांसकाः कथयन्ति यत् स्मृतिसम्बन्धिशास्त्रेषु लौकिकग्रन्थेषु च आत्माश्रयत्वदोषः दोषरूपेण गण्यते। परन्तु स्वयंसिद्धस्य स्वतःप्रमाणस्य अपौरुषेयस्य वेदस्य विषये आत्माश्रयत्वदोषः दोषरूपेण न गण्यते। वेदस्य अलौकिकशक्तिशालित्वात् वेदवाक्यानि एव वेदस्य अस्तित्वं प्रमाणयन्ति। अतः वेदान्तर्भूते उपनिषद्वाक्ये ऋक्संहितान्तर्गते पुरुषसूक्ते च ऋक्-साम- यजुर्वेदानाम् उल्लेखः वेदस्य अस्तित्वविषये प्रमाणम्। पूर्वपक्षी कथयति यत् वेदः अस्ति इति यद्यपि प्रमाणसिद्धं तथापि वेदवाक्यानां प्रामाण्यं न स्वीकार्यम्। यतो हि वेदवाक्यं सन्देह- ज्ञातार्थज्ञापकता-व्याघातप्रभृतिभ्यः दोषेभ्यः न मुक्तम्। कतिपयानां वेदवाक्यानां कोऽपि अर्थः एव नास्ति यथा-

**'अम्यक् स्यात इन्द्र ऋष्टिः' (ऋग्वेदः१-१६९-३)'**

**'सृण्येव जर्भरी तुर्फरी तु पर्फरी फर्फरीका' (ऋग्वेदः १०-१०६-६)'**

**'आपास्तमन्युस्तृपल प्रभर्मा' (ऋग्वेदः१०-८९-५)' इत्यादि।**

एते मन्त्राः उन्मादव्यक्तीनां प्रलापः इव अर्थहीनाः वर्तन्ते। अत्र अस्माकं वक्तव्यमिदं यत् निरुक्त-व्याकरणप्रभृतीनां वेदाङ्गानां अध्ययनेन एतेषां मन्त्राणाम् अर्थः बोधगम्यः भवति। यास्काचार्यः निरुक्ते एतेषां मन्त्राणां व्याख्यां कृतवान्। अतः ये निरुक्तप्रभृतीनां ग्रन्थानाम् अध्ययनं न कृतवन्तः ते एतेषां मन्त्राणाम् अर्थं ज्ञातुं न शक्नुवन्ति। अतः ये मन्त्रार्थं न जानन्ति तेषाम् एव अयं दोषः न तु वेदस्य। यथा अन्धः गमनसमये यदि स्तम्भे आघातं प्राप्नोति तर्हि सः दोषः तस्य अन्धस्य दृष्टिहीनतायाः न तु स्तम्भस्य - '**नायं स्थानोरपराधो यदेनम् अन्धो न पश्यति**'। इति। एवं सिद्धान्तपक्षिणः तेषां मतं समुपस्थापयन्ति।

कतिपयानां वेदमन्त्राणाम् अर्थः सन्दिग्धः अस्ति अर्थात् तेषां प्रकृतः अर्थः कः इत्यस्मिन् विषये मनसि सन्देहः भवति। यथा - 'अधस्विदासीदुपरिस्विदीसीत्' **(ऋग्वेदः१०-१२९-५)** अर्थात् सः अधः अपि आसीत् उपरि अपि आसीत् इति। एतेषु मन्त्रेषु सन्देहस्य सत्त्वात् वेदवाक्यं न प्रमाणम् इति पूर्वपक्षिणः कथयन्ति। अस्याः आपत्तेः उत्तररूपेण वक्तुं शक्यते यद् उक्तमन्त्रे सन्देहस्य अवकाशः नास्ति इति। अयं मन्त्रः ऋग्वेदस्य सृष्टिसूक्तात्(१०-१२९) उद्धृतः। जगतः मूलकारणस्य परब्रह्मणः अपूर्वसृजनशक्तेः तथा अलौकिकमहिम्नः वर्णनम् अस्मिन् सूक्ते अस्ति। क्षुद्रशक्तिमतः ससीमस्य मानवस्य युगपत् ऊर्ध्वम् अधः च अवस्थानं न सम्भवम्। परन्तु यस्य सत्ता समग्रे विश्वे ओतप्रोतरूपेण व्याप्ता



अनुस्यूता च तत् परं ब्रह्म युगपत् ऊर्ध्वम् अधः च सर्वत्र अवस्थातुं शक्नोति। अतः सन्दिग्धार्थस्य दोषस्य अवकाशः नास्ति इति सिद्धान्तिमतम्।

कतिपयेषु मन्त्रेषु अचेतनपदार्थानां सम्बोधनं चेतनवद् दृश्यते। यथा-क्षुरं लक्षीकृत्य एकस्मिन् मन्त्रे उच्यते - **'स्वधिते नैनं हिंसीः' इति। (तैत्तिरीयसंहिता १-२-१-१)**। अर्थात् हे क्षुर! त्वम् अस्य हिंसां मा कुरु। **'शृणोत ग्रावाणः'(तै.सं१-३-१३-१)**। हे प्रस्तरगणाः! यूयं श्रवणं कुर्वन्तु इत्यादि। अचेतनस्य पदार्थस्य इत्थं चेतनवत् सम्बोधनं कोऽपि न करोति। इदम् अनुभवविरुद्धं युक्तिविरुद्धं च। अतः एतेषां वेदमन्त्राणाम् अर्थः अनुभवेन बाधितः। अत्र बाधितार्थदोषः आगच्छति इति पूर्वपक्षिणां मतम्। एतस्य उत्तररूपेण इदं वक्तव्यं यत् एतेषु मन्त्रेषु अचेतनपदार्थस्य सम्बोधनं नास्ति। अपि तु, अचेतनपदार्थानाम् अभिमानिनीनां देवतानां सम्बोधनम् अस्ति। प्रत्येकं पदार्थे चैतन्यम् अनुस्यूतम्, तत् च चैतन्यं आपातदृष्टानां जडपदार्थानाम् अभिमानिनी देवता। अस्य तत्त्वस्य आलोचनं भगवान् वेदव्यासः स्वरचितस्य ब्रह्मसूत्रस्य 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्'(ब्रह्मसूत्र२-१-५) - इत्यस्मिन् सूत्रे कृतवान्। मन्त्रेषु यस्मिन् स्थले अचेतनस्य चेतनवत् सम्बोधनं व्यवहारो वा श्रूयते तस्मिन् स्थले तदभिमानिनीनां देवतानां चैतन्यसत्तायाः आमन्त्रणं बोद्धव्यम्। अत एव तस्मिन् स्थले बाधितार्थदोषस्य अवकाशो नास्ति। जगति कोऽपि पदार्थः सम्पूर्णतया जडो भवितुं नार्हति, यतो हि चैतन्यसत्ता सर्वत्र परिव्याप्ता। नाम रूपं च सृष्ट्वा परमपुरुषः परमात्मा तन्मध्ये प्रविशति - 'तत् सृष्ट्वा तदेव अनुप्राविशत्'। तस्य रूपम् एव विश्वस्य सर्वेषां रूपम् इति। आपातदृष्टौ यत् जडं तादृशस्य पदार्थस्य यदि कोऽपि सम्बोधनं करोति, तदा इदं ज्ञातव्यं भवति यत् तस्मिन् पदार्थे वर्तमानायाः चित्सत्तायाः सम्बोधनं भवति। अतः कस्य अपि व्याघातस्य आशङ्का नास्ति इति सिद्धान्तिनां मतम्।

पूर्वपक्षी सिद्धान्तिनाम् उत्तरे असन्तुष्टः सन् पुनः आपत्तिम् उत्थापयति। कतिपयेषु वेदमन्त्रेषु परस्परविरोधः संलक्ष्यते। उदाहरणभूतः एको मन्त्रो हि- 'एक एव रुद्रो न द्वितीयः अवतस्थे'(तैत्तिरीयसंहिता१-८-१-१), अर्थात् रुद्रः एक एव, द्वितीयः रुद्रः नास्ति। किन्तु, अपरस्मिन् मन्त्रे उच्यते- 'सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम्'(तैत्तिरीयसंहिता४-५-११-५), अर्थात् पृथिव्यां सहस्रं रुद्राः सन्ति। इदं मन्त्रद्वयं परस्परविरुद्धम् अतः विपरीतार्थदोषः अपरिहार्यः। कोऽपि स्वयं कथयति यत् अहं सम्पूर्णं जीवनं व्याप्य मौनी अस्मि। तत्र यता तस्य मौनी अस्मि इति वचनम् एव मौनव्रतविरुद्धं भवति तथैव दोषः प्रकृतस्थले समापतति। एतस्य समाधानरूपेण वक्तुं शक्यते यत् मनुष्यः एकस्मिन्नेव काले एकः बहुः इति उभयरूपेण भवितुं न शक्नोति। परन्तु अलौकिकशक्तिशाली रुद्रः स्वस्य विभूतिबलेन सहस्ररूपाणि धारयितुं समर्थः। अतः वेदवाक्यम् उक्तदोषात् विनिर्मुक्तम् एव अस्ति।



## पाठगतप्रश्नाः-६

२७. वस्तुनः सिद्धये किं किम् आवश्यकं भवति।

२८. कीदृशं वाक्यं प्रमाणम्।



२९. वेदस्य प्रामाण्यम् नित्यत्वम् अपौरुषेयत्वम् इत्यादिकं गूढतत्त्वं कः कुत्र स्थापितवान्।

३०. कैः वेदस्य अस्तित्वं प्रतिपाद्यते।

३१. किं शब्दप्रमाणम्।

३२. चतुर्णां वेदानाम् उल्लेखः कुत्र अस्ति।

३३. वेदस्य विषये कः दोषः दोषरूपेण न गण्यते।

३४. नामरूपे सृष्ट्वा परमपुरुषः परमात्मा तन्मध्ये प्रविशति इत्यस्मिन् विषये श्रुतिः का।

## १.७) षड्दर्शनेषु वेदस्य प्रामाण्यप्रतिपादनम्

न्यायसाङ्ख्यमीमांसादिदर्शनानाम् आचार्याः शब्दं प्रमाणतया स्वीकृतवन्तः। ते शब्दप्रमाणेन एव वेदस्य अस्तित्वं स्वीकृतवन्तः। लौकिकवैदिकभेदेन शब्दः द्विविधः। लौकिकवाक्यानि अन्येन प्रमाणेन सिद्धानि भवन्ति। परन्तु वैदिकवाक्यानि शब्दप्रमाणेन एव सिध्यन्ति। तत्र अन्यं प्रमाणम् न अपेक्ष्यते। साङ्ख्यदर्शने शब्दप्रमाणं श्रुतिः एव। साङ्ख्यदर्शने लौकिकवाक्यानां शब्दप्रमाणे अन्तर्भावः न स्वीक्रियते। यतो हि तेषां नये लौकिकवाक्यानि प्रत्यक्षेण अनुमानेन वा गृह्यन्ते। अत एव लौकिकानि वाक्यानि स्वतः न प्रमीयन्ते। प्रत्यक्षानुमानाभ्याम् एव तेषां प्रमितिः सम्भवति। तथाहि साङ्ख्यसूत्रे उक्तम्- निजशक्त्यभिव्यक्तेः स्वतप्रामाण्यम् (५.५१)। एवञ्च साङ्ख्यनये वेदस्य स्वतःप्रामाण्यं सिद्धम् एव।

वैशेषिकदर्शने कणादर्षिः वेदस्य प्रामाण्यं स्वीकृतवान्। तेन उक्तं यत् वेदः ईश्वरस्य वचनम्। अतः तद् अभ्रान्तं प्रामाणिकं च इति सिध्यति। उच्यते च- "**तद्वचनादाम्नायस्य प्रामाण्यम्। अत्र आम्नायशब्दस्य अर्थः वेदः।**" इति।



### पाठगतप्रश्नाः-७

३५. साङ्ख्यानां मते शब्दप्रमाणं किम्।

३६. साङ्ख्यमते लौकिकवाक्यानाम् अन्तर्भावः कुत्र न स्वीक्रियते।

३७. वैशेषिकदर्शनाचार्यः कः।

३८. आम्नायशब्दस्य अर्थः कः।





## पाठसारः

अस्मिन् पाठे वेदस्य विविधेषु स्थलेषु प्रयुक्तानां रसालङ्कारादीनां विशदं वर्णनं कृतम्। उपमाद्यलंकाराणाम् अवतारणं तावद् एव प्राचीनम् अस्ति यावद् जगति कविता प्राचीना। ऋग्वेदः एव प्राचीनतमः वेदः। ऋग्वेदमन्त्रेषु उपमाद्यलंकाराणां प्रयोगः दृश्यते। काव्ये रस एव प्रधानः। रसः आत्मा काव्यस्य इति आलंकारिकैः प्रतिपादितम्। तम् एव रसं प्रतिपादयितुं सर्वे कवयः यतन्ते। वैदिककवयः अपि रसप्रतिपादने परमपटवः आसन्। वैदिककवीनां काव्येषु रसस्य यथा उत्कर्षता अस्ति तथा उत्कर्षता लौकिककवीनां काव्येषु न दृश्यते। अतः रसप्रतिपादने वैदिकवाङ्मयः विलक्षणः। रसेषु प्रधानः शृङ्गारः अपि वेदे वर्णितः। शृङ्गाररसप्रतिपादने उषस्सूक्तम् अन्यतमम्। उषाविषयकमन्त्राणाम् अनुशीलनेन वयं वैदिकानाम् ऋषीणां प्रकृतिं प्रति उदात्तभावनां ज्ञातुं शक्नुमः। एवम् अस्मिन् पाठे सामान्येन रसस्य अवतारणाविषये अलंकारप्रतिपादनविषये प्रकृतिवर्णनविषये च आलोचनं कृतम्। अन्तिमे च वेदप्रामाण्यविषये विस्तारेण आलोचना विहिता। तत्र प्रत्येकं दर्शनेषु स्वमतानुसारं वेदस्य प्रामाण्यं कथम् अङ्गीकृतं तत् आलोचितं वर्तते।



## पाठान्तप्रश्नाः

१. वैदिकवाङ्मयविषये संक्षेपेण लिखत।
२. रसविधानविषये टिप्पणी लेख्या।
३. वैदिकवाङ्मये प्रयुक्तानां केषाञ्चित् उपमालङ्काराणां वर्णनं कुरुत।
४. उषादेव्याः सौन्दर्यकल्पनाविषये लिखत।
५. प्रकृतिवर्णनस्य कति प्रकाराः। प्रत्येकं प्रकारम् आश्रित्य टिप्पणीं विरचयत।
६. वेदप्रामाण्यविषये विस्तृतं वर्णनं कुरुत।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. काव्यसंसारे कविता यावती प्राचीना वर्तते उपमालङ्कारः अपि तावान् एव प्राचीनः वर्तते।
२. अलङ्काराः
३. अनुप्रासालङ्कारः उपमालङ्कारः उत्प्रेक्षालङ्कारः दृष्टान्तालङ्कारः अर्थान्तरन्यासः
४. वैदिक-ऋषिभ्यः
५. व्यञ्जनया प्रतिपाद्यमानान् वैदिकार्थान् ज्ञातुं न प्रभवति।



**उत्तराणि-२**

६. वसिष्ठेन।

७. गृत्समद-ऋषिः।

८. इन्द्रम्।

९. इन्द्रः।

१०. रसम्।

११. शृङ्गाररसः।

१२. संयोगः विप्रलम्भः च।

१३. विप्रलम्भः।

१४. यम-यमीसूक्ते (१०/१०)।

**उत्तराणि-३**

१५. रूपकालंकारः

१६. रूपकमयी

१७. ऋग्वेदे

१८. ऋतचक्रस्य वर्णने

**उत्तराणि-४**

१९. उषाकालस्य वर्णने प्रकृतिः तथा विराजते यथा मणिमालायां स्वर्णसूत्रं विराजते

२०. उषा स्वप्रकाशं तथा प्रसारयति यथा गोपाः गोचारणभूमौ स्वकीयाः गाः प्रसारयन्ति अथवा यथा काऽपि नदी स्वजलानि प्रसारयति

२१. स्मितानना तरुणीव स्ववक्षःप्रदेशम् अनावृतं करोषि।

**उत्तराणि-५**

२२. नारीप्रेम

२३. प्रेम

२४. पृथोः

२५. प्रकृत्याः तथा तस्याः व्यापाराणाम्

२६. पवित्रप्रेमपूर्णे जीवने

**उत्तराणि-६**

२७. लक्षणं प्रमाणं च।

२८. 'असन्दिग्ध-अनधिगत-अबाधितार्थबोधकं वाक्यं प्रमाणम्' इति।

२९. महर्षिः जैमिनिः तस्य पूर्वमीमांसाग्रन्थे।



३०. प्रत्यक्षानुमानशब्दागमप्रमाणैः।

३१. आप्तपुरुषाणाम् उपदेशः हि शब्दप्रमाणम्।

३२. मुण्डकोपनिषदि।

३३. आत्माश्रयत्वदोषः।

३४. 'तत्सृष्ट्वा तदेव अनुप्राविशत्' इति।

**उत्तराणि - ७**

३५. श्रुतिः एव

३६. शब्दप्रमाणे

३७. कणादः

३८. वेदः

।।इति प्रथमः पाठः।।



# २

# ऋक्संहितासाहित्यम्

## प्रस्तावना

मन्त्रब्राह्मणयोर्भेदेन वेदः प्राथम्येन द्विविधः। मन्त्रभाग एव संहिताशब्देन व्यवह्रियते। अस्मिन् अध्याये वयम् ऋग्वेदस्य संहितायाः विषये अवगमिष्यामः। संहिता हि मन्त्रस्य पर्यायः। ऋङ्मन्त्राणां विषये अत्र संक्षेपेण आलोचितम्। संहितायां च अष्टकक्रमः मण्डलक्रमश्च दृश्यते। तदत्र संक्षेपेण आलोच्यते। शाखानां ज्ञानं विना संहितापाठः निरर्थकः एव, अतः कासाञ्चन शाखानां विषये ज्ञानम् अत्यावश्यकम्। कानिचन सूक्तानि अपि प्राथम्येन ज्ञातव्यानि। सूक्तानि च संवाद-लौकिक-दार्शनिकानि भवन्ति, तदत्र आलोचितम्। ऋग्वेदे एकं विशिष्टं मण्डलं वर्तते, तद्धि दशममण्डलं, यत्र भाषायां छन्दसि पूर्व-पूर्वमण्डलापेक्षया भेदः दृश्यते, तदत्र संक्षेपेण किञ्चिदालोचितम्।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- ऋग्वेदस्य विभागानां परिचयं प्राप्तुं शक्ष्यति।
- अष्टकमण्डलक्रमौ ज्ञास्यति।
- ऋचां विविधानां शाखानां परिचयं प्राप्स्यति।
- दशममण्डलस्य विशेषतां ज्ञास्यति।

## २.१) ऋक्संहिता

ऋच्यते स्तूयते यया सा ऋक्। तादृशीनाम् ऋचां समूह एव ऋग्वेदः। यत्रार्थवशेन पादव्यवस्था सा ऋगिति मीमांसकाः कथयन्ति। चतुर्षु वेदेषु ऋग्वेदस्य माहात्म्यं सर्वातिशयि अस्ति। ऋग्वेदो हि धर्मसम्बन्धिनां स्तोत्राणाम् महान् समुद्रतुल्यः। ऋक्षु बहुभिः ऋषिभिः विविधैः मधुरशब्दैः अनेके देवाः आदरेण भक्त्या च स्तुताः सन्ति। पाश्चात्यानां नये तु भाषायाः तथा भावस्य पार्थक्येन अन्येभ्यः वेदेभ्यः प्राचीनतमः अयम् ऋग्वेदः। भारतीयैरपि ऋग्वेदः अतिशयेन आद्रियते। तैत्तिरीयसंहितानुसारं यज्ञानां कृते यानि विधानानि सन्ति तत्र तादृशी दृढता न परिलक्ष्यते , परन्तु ऋग्वेदेन विधीयमानम् अनुष्ठानं तु दृढमेव भवति। यथा-

"यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तत्, यदृचा तत् दृढमिति"।(तै.सं. ६/५/१०/३)



परमेश्वरात् सर्वप्रथमः ऋचामेवाविर्भावः अभवत् इति पुरुषसूक्तेऽपि आम्नातम्। यथा-

"तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे।

छन्दांसि यज्ञिरे तस्माद् यजुस्तस्मादजायत।। इति।। "

## २.२) ऋग्वेदस्य विभागः

यद्यपि महाभाष्ये ऋग्वेदस्य एकविंशतिसंख्यकाः शाखा निर्दिष्टाः, तत्र च शाकल-वाष्कल-आश्वलायन-शांख्यायन-माण्डूकायन-नामधेयाः पञ्च मुख्याः शाखाः सन्ति। स ऋग्वेदः सूक्त-मण्डलभेदेन द्विधा विभक्तः। तत्र सूक्तं चतुर्विधम्, ऋषिसूक्त-देवतासूक्त-च्छन्दःसूक्त-अर्थसूक्तभेदात्। येषां मन्त्राणाम् ऋषिः एकः एव वर्तते तेषां समूहः ऋषिसूक्तम्। येषां मन्त्राणाम् देवता एका वर्तते तेषां समूहः हि देवतासूक्तम्। यावदर्थसमाप्तानां मन्त्राणां समूहः अर्थसूक्तम्। सुष्ठूक्तत्वात्सर्वं सूक्तमित्याख्यायते। स ऋग्वेदः मण्डल-अनुवाक-वर्गभेदेन अष्टक-अध्याय-सूक्तभेदेन च द्विधा।

उपर्युक्तभागद्वयस्य प्रथमभागे हि बालखिल्यसूक्तानि विहाय सम्पूर्णायां ऋग्वेदसंहितायां दश मण्डलानि, पञ्चाशीतिश्चानुवाकाः, अष्टोत्तरद्विशतमिताश्च वर्गाः सन्ति। द्वितीये च भागे अष्टौ अष्टकानि, चतुषष्टिरध्यायाः, सप्तदशोत्तरसहस्राणि च सूक्तानि च सन्ति।



## पाठगतप्रश्नाः-१

१. का ऋक्।

२. कः ऋग्वेदः।

३. मीमांसकानां नये का ऋक्।

४. ऋचाम् आविर्भावविषये कुत्र आलोचना वर्तते।

५. महाभाष्ये ऋग्वेदस्य कति शाखाः निर्दिष्टाः।

६. ऋग्वेदस्य भागद्वयं किम्।

७. सूक्तं कतिविधम्। कानि च तानि।

८. किम् ऋषिसूक्तम्।

९. किं छन्दःसूक्तम्।

१०. किम् अर्थसूक्तम्।

११. ऋग्वेदः कतिविधः। के च ते।

१२. ऋग्वेदस्य प्रथमभागे किम् अस्ति।

## २.३) क्रमविभाजनम्

ऋग्वेदस्य विभागः द्विधा क्रियते, एकः अस्ति अष्टकक्रमः, अपरश्च मण्डलक्रमः। एतौ क्रमौ अत्र संक्षेपेण आलोच्येते।

### २.३.१) अष्टकक्रमः

समग्रा ऋक्संहिता अष्टसु भागेषु विभक्ता अस्ति। अष्टसु च भागेषु प्रत्येकम् अष्टौ अध्यायाः सन्ति। अतः सम्पूर्णे ऋग्वेदे चतुषष्टिः अध्यायाः सन्ति। प्रत्येकम् अध्यायस्य अनन्तरविभागस्य नाम 'वर्गः'इत्यस्ति। सुष्ठुतया सारल्येन च यथा अध्ययनं भवेत् तस्मादेव एतादृशः वर्गभेदः कृतः अस्ति। वर्गस्तु ऋचां समुदायस्य संज्ञाऽस्ति। वास्तविकतया वर्गेषु ऋचां संख्या सुनिश्चिता नास्ति। प्रायः पञ्चभिः मन्त्रैः एको वर्गो भवति।। सम्पूर्णे ऋग्वेदे वर्गाः षडधिक-द्विसहस्रपरिमिताः सन्ति।



## पाठगतप्रश्नाः-२

१३. ऋक्संहितायाः कति भागाः, प्रतिभागं कति अध्यायाश्च सन्ति।

१४. सम्पूर्णे ऋग्वेदे कति अध्यायाः सन्ति।

१५. प्रत्येकम् अध्यायस्य अन्तरविभागस्य नाम किम् अस्ति।

१६. वर्गभेदः किमर्थं कृतः।

१७. सम्पूर्णे ऋग्वेदे कति वर्गाः सन्ति।

### २.३.२) मण्डलक्रमः

ऋग्वेदस्य द्वितीयः क्रमः मण्डलक्रमः, अयम् ऐतिहासिकदृष्ट्या वैज्ञानिकदृष्ट्या च महत्त्वपूर्णः अस्ति। बालखिल्यसूक्तानि विहाय सम्पूर्णायामृग्वेदसंहितायां दश मण्डलानि, पञ्चाशीतिश्चानुवाकाः, अष्टोत्तरशतद्वयमिताश्च वर्गाः सन्ति। अत्र च अनुवाकेषु सूक्तानि, सूक्तेषु मन्त्राश्च परिश्रमपूर्वकं निर्धारिताः सन्ति। अस्माकं प्राचीनाः ऋषयस्तु वेदानां विशुद्धये तेषु प्रयुक्तानाम् अक्षराणामपि गणनां कृतवन्तः। मन्त्राश्च सर्वे सप्तषष्ट्युत्तरचतुःशताधिकदशसहस्रमिताः (१०४६७) इति शाकल्यर्षिः, शौनकानुक्रमण्यः तु अशीत्युत्तर-पञ्चशताधिक-दशसहस्रमितान्(१०५८०) मन्त्रान् आहुः। अत्र भेदे खिलभेदेन कालभेदेन वा मन्त्रवृद्धिलोपावेव हेतुतयोन्नयौ भवतः। शब्दसंख्या- १५३८२६, अक्षरसंख्या- ४३२०००। सर्वेऽपि मन्त्राः चतुर्दशसु छन्दःसु विभक्ताः इति बोध्यम्। ऋग्वेदगतमन्त्रद्रष्टारो ऋषयः गृत्समद-विश्वामित्र-वामदेवा-अत्रि-भरद्वाज-वशिष्ठादयः सन्ति। मण्डलानुसारेण सूक्तानां व्यवस्था (१९१+४३+६२+५८+८७+१०४+९२+११४+१९१) एवमस्ति। एतेषां सूक्तानामतिरिक्तानि एकादश सूक्तानि च बालखिल्यनाम्ना सन्ति।



एतेषां 'बालखिल्य'-सूक्तानां स्थानं तु अष्टममण्डलान्तर्गते एव स्वीकर्तुं शक्यते। अस्मिन्मण्डले प्रमुखसूक्तानि आहत्य द्विनवतिः सन्ति। खिलसूक्तानां सङ्कलनं कृत्वा तेषां संख्या त्र्यधिकशतमिता सम्भवति। खिलशब्दास्यार्थो भवति 'परिशिष्टम्' अथवा पश्चात्सङ्कलितमन्त्राः। स्वेनैव यदा अध्ययनं क्रियते तदैव खिलपठनस्य व्यवस्था वर्तते। किञ्चैते खिलमन्त्राः कुत्रापि न उपलभ्यन्ते , न चाक्षरगणनायाम् एव एतेषां मन्त्राणां समावेशोऽपि भवति। एतेषां यथार्थरूपस्याऽपि बोधो न भवति। एतेषामृग्वेदे स्थानम् अष्टममण्डलस्यान्तराले ऊनपञ्चाशत्तमात् सूक्तादारभ्य ऊनषष्टितमं सूक्तपर्यन्तमस्ति। एतेषां मन्त्राणां संख्याऽशीतिरस्ति। अनुवाक-अनुक्रमानुसारेण च एतेषां मन्त्राणां संख्या दशसहस्र-पञ्चशत-अशीतिरस्ति-

**'ऋचां दशसहस्राणि ऋचां पञ्चशतानि च।**

**ऋचामशीतिः पादश्च पारणं सम्प्रकीर्त्तितम्।।'४३।।**

(अनुवाकानुक्रमणी)

ऋचां शब्दानां संख्या १५३८२३ वर्तते। यथा-

**'शाकल्यदृष्टेः पदलक्षमेकं सार्धं च वेदे त्रिसहस्रयुक्तम्।**

**शतानि चाष्टौ दशतद्वयं च पदानि षट् चेति हि चर्चितानि।।' (अनु. ४५)**

तथा शब्दगताक्षरणां संख्या ४३२००० वर्तते। तद्यथा-

'स ऋचो व्यौहत्। द्वादशबृहतीसहस्राणि। एतावस्तौ ह्यर्चीयाः प्रजापतिसृष्टाः' (शत.ब्रा. १०/४/२/२/२३)।

'बृहतीच्छन्दः षट्त्रिंशदक्षराणां भवति। अतः १२०००*३६=४३२००० भवति चत्वारिंशत्सहस्राणि द्वात्रिंशच्च अक्षरसहस्राणि' (अनु.अन्तिमे भागे)।

ऋग्वेदस्य शब्दाक्षरादीनां गणनाप्रसङ्गे यत्र तत्र पार्थक्यमपि परिदृश्यते। मालावारीयेण नारायणभट्टेन विरचितः सूक्तश्लोकः समुपलब्धो भवति। ग्रन्थेऽस्मिन् ऋग्वेदस्य वर्गाणां सूक्तानाञ्च संख्या निर्धारिताऽस्ति। वर्गसूक्तादीनां गणनाप्रतिपादकश्लोकस्तथा तद्विवरणञ्च निम्नरूपेणास्ति-

जानन्नपि द्विषामोदं स यज्ञः पातनानरः।

रसं भिन्नाय मांसादो नरस्तस्य जलाधिपः।।

नारायणभट्टेन दत्तमृग्वेदस्य विवरणम् -

| | |
|---|---|
| अष्टकानि | ८ |
| मण्डलानि | १० |
| अध्यायाः | ६४ |
| अनुवाकाः | ८५ |
| सूक्तानि | १०१७ |



| | |
|---|---|
| वर्गाः | २००६ |
| ऋचः | १०४७२ |
| अर्धर्चः | २०८७५ |
| शब्दाः | १५३८१६ |
| अक्षराणि | ३९४२२१ |

उपरिनिर्दिष्टायां संख्यायां बालखिल्यसूतानां गणना नास्ति, यदि तान्यपि ११ सूक्तानि, ८० ऋचः, १८ वर्गाः, ३०४४ अक्षराणि अपि सङ्कलितो भवेत्तदा, सूतानां संख्या १०२८, वर्गाः २०२४, ऋचः १०५५२ तथा अक्षराणि ३, ९७, २६५ भवेयुरिति।



## पाठगतप्रश्नाः-३

१८. ऋग्वेदस्य कतमः विभागोऽयं मण्डलक्रमः।

१९. बालखिल्यसूक्तानि विहाय सम्पूर्णयाम् ऋग्वेदसंहितायां कति मण्डलानि अनुवाकाः वर्गाश्च सन्ति।

२०. शाक्यलानुसारेण कति मन्त्राः।

२१. ऋङ्मन्त्रेषु अक्षरसंख्या का अस्ति।

२२. सर्वे मन्त्राः कतिषु छन्दःसु विभक्ताः।

२३. ऋग्वेदद्रष्टारः ऋषयः के सन्ति।

२४. खिलशब्दस्य कः अर्थः।

२५. ऋचां कति शब्दाः सन्ति।

२६. बृहतीच्छन्दः कतीनामक्षराणां भवति।

## २.४) ऋचां संख्या

ऋग्वेदे ऋङ्मन्त्राणां गणना अपि एका विषमैव समस्या वर्तते। अस्याः गणनायाः समाधानं प्राचीनैः अर्वाचीनैः च विद्वद्भिः कृतम्। प्राचीनाचार्याणां मध्ये ऋङ्मन्त्राणां गणनाप्रसङ्गे यद् वैषम्यं परिलक्ष्यते, तत्तु वास्तविकतया शाखाभेदजन्यम् एव अस्ति, परन्तु अर्वाचीनानां मध्ये मन्त्रगणनाप्रसङ्गे यत् वैषम्यम् अस्ति तत्तु भ्रमजनितम् एव । अस्य भ्रमोदयस्य कारणमस्ति- ऋग्वेदे कियत्यः ऋचः एवंविधाः सन्ति, या अध्ययनकाले चतुष्पदा भवन्ति, किञ्च प्रयोगकाले द्विपदा एव मन्यते। ऋक्सर्वानुक्रमण्याम् अस्योल्लेखः प्राप्यते- 'द्विर्द्विपदास्त्वृचः समामनन्ति' अस्य सूत्रस्य व्याख्यायां षड्गुरुशिष्यस्य स्पष्टकथनमस्ति- 'ऋचोऽध्ययने तु अध्येतारो द्वे द्वे द्विपदे एकैकामृचं कृत्वा समामनन्ति



अधीयरन्। समामनन्तीति वचनात् शंसनादौ न भवन्ति। तेन पश्वान वायुम्(ऋ. १/६५) इति शंसने दर्शचत्वम्। आसामाध्ययने तु पञ्चत्वं भवति।'

सायणभाष्येऽपि अस्योल्लेखः प्राप्यते। चरणव्यूहस्य टीकाकर्त्रा महिमदासेनाऽपि पूर्वोक्तकथनं समर्थितम्। एतादृश्यः ऋचः 'नैमित्तिकद्विपदाः' कथ्यन्ते। ऋग्वेदे नित्यद्विपदाऽपि ऋचः सन्ति। ताः गणनायां सप्तदश एव सन्ति। एताः द्विपदाः कदाचिदपि निजस्वरूपात् वञ्चिता न भवन्ति। अस्याः एव द्विपदायाः वास्तविकस्वरूपस्य परिचयाभावात् मैक्समूलर-मैक्डोनलप्रभृतीनां आङ्ग्लवेदज्ञानां गणना भ्रान्ता अभवत्।

ऋग्वेदस्य संहितायां त्रयाणां छन्दसां प्रचुरता विद्यते। येषु 'त्रिष्टुप्'-छन्दसः संख्या सर्वातिशायिनी वर्तते। अस्मिन् छन्दसि चत्वारः पादाः भवन्ति। प्रतिपादे एकादश अक्षराणि भवन्ति। अस्यां संहितायां ४२५१ त्रिष्टुप्छन्दांसि सन्ति। तदनन्तरं गायत्रीछन्दसः स्थानम् आयाति। अस्मिन् छन्दसि त्रयः पादाः भवन्ति। प्रतिपादम् अष्टौ अक्षराणि भवन्ति। अस्य छन्दसः समस्ता संख्या २४४९ वर्त्तते। तदनन्तरं जगतीच्छन्दसः स्थानं भवति। अस्मिन् छन्दसि चत्वारः पादाः सन्ति। प्रतिपादं द्वादशाक्षराणि सन्ति। अस्य छन्दसः संख्याऽत्र १,३४६ वर्त्तते। शेषभागे अनुष्टुप ८९८, पंङ्क्तिः ४९८, उष्णिक् ६९८, बृहती ३७१ वर्त्तन्ते।



## पाठगतप्रश्नाः-४

२७. प्राचीनाचार्याणां मध्ये ऋङ्मन्त्राणां गणनाप्रसङ्गे वैषम्यं किमर्थं परिलक्ष्यते।

२८. अर्वाचीनानां भ्रमोदयस्य कारणं किम् अस्ति।

२९. चरणव्यूहस्य टीकाकर्ता कः।

३०. ऋग्वेदस्य संहितायां कस्य छन्दसः आधिक्यं दृश्यते।

३१. त्रिष्टुप्-छन्दसि कति पादाः कति अक्षराणि च भवन्ति।

३२. गायत्री-छन्दसि कति पादाः तथा प्रतिपादं कति अक्षराणि भवन्ति।

३३. जगती-छन्दसि कति पादाः कति अक्षराणि च भवन्ति।

३४. ऋग्वेदस्य शेषभागे कति अनुष्टुप्च्छन्दांसि वर्तन्ते।

## २.५) ऋग्वेदीयशाखापरिचयः

यज्ञस्य आवश्यकताम् अनुभूय उदात्तदृष्ट्या महामुनिः व्यासः स्वस्य चतुरः शिष्यान् वेदम् अध्यापितवान्। यज्ञे चत्वारो ऋत्विजो भवन्ति -१.होता, २.अध्वर्युः, ३. उद्गाता, ४. ब्रह्मा च। होता-आह्वानकर्त्ता, स हि यज्ञावसरे देवतानां प्रशंसायै रचितान् मन्त्रान् उच्चारयन् देवताः आह्वयति, तत्कार्याय



सङ्कलिताः मन्त्राः स्तुतिरूपतया समाख्याताः, तेषां सङ्ग्रह एव ऋग्वेदः। एनमुद्देश्यमभिलक्ष्य व्यासः पैलाय ऋग्वेदं पाठयामास। अध्वर्युर्विधिवद्यज्ञं सम्पादयति, तत्रावश्यकमन्त्रा **यजूंषी, तत्संग्रहः** यजुर्वेदः,उद्गाता तु उच्चस्वरेण गानकर्त्ता, स हि स्वरबद्धान् मन्त्रान् उच्चैर्गायति, तदपेक्षितमन्त्राणां सङ्ग्रहः सामवेदः। महर्षिः व्यासः कवये जैमिनये सामवेदमध्यापितवान्। ब्रह्मा यज्ञनिरीक्षकः कृताकृतावेक्षणकर्त्ता, स हि सर्वविधमन्त्रज्ञः, तदपेक्षितो मन्त्रराशिः अथर्ववेद इति कथ्यते। यज्ञनिरीक्षणकार्यसम्पादनाय मुनिः व्यासः सुमन्तुमुनिमर्थववेदं पाठितवान् -

**'तदृक्वेदधरः पैलः सामगौ जैमिनिः कविः।**

**वैशम्पायन एवैको निष्णातो यजुषामत।**

**अथर्वाङ्गिरसनासीत् सुमन्तुर्दारुणो मुनिः।।' (नाग.पुरा. १/४/२१)**

शाखया सह 'चरण'-शब्दस्यापि सम्बन्धोऽस्ति। अधुना उभयोः शब्दयोः प्रयोगः प्रायः समानार्थे एव भवति। मालतीमाधवस्य टीकाकर्त्तः जगद्धरस्य कथनानुसारेण-'चरणशब्दः शाखाविशेषाध्ययन-परैकतापन्नजटासंघवाची'। आसां शाखानां विस्तृतविवरणं पुराणेषु चरणव्यूहे च प्राप्यते। विविधेषु ग्रन्थेषु शाखासंख्यायां विपर्ययो वर्त्तते। भाष्यकारेण पतञ्जलिनोक्तम्- 'चत्वार वेदाः साङ्गाः सरहस्या बहुधा भिन्नाः। एकशतमध्वर्युशाखाः। सहस्रवर्त्मा सामवेदः। एकविंशतिधा वाह् वृच्यम्। नवधाऽर्थवणो वेदः'(पस्पशाह्निकम्)।

यद्यपि महाभाष्ये ऋग्वेदस्य एकविंशतिशाखाः निर्दिष्टाः परं शाकल-वाष्कल-आश्वलायन-शाङ्खायन-माण्डूकायन-नामधेयाः पञ्च शाखाः सन्ति मुख्याः।



## पाठगतप्रश्नाः-५

३५. यज्ञस्य आवश्यकताम् अनुभूय महामुनिना व्यासेन किं कृतम्।

३६. यज्ञे कति ऋत्विजो भवन्ति, के च ते।

३७. होता किं करोति।

३८. अध्वर्युः किं करोति।

३९. उद्गाता किं करोति।

४०. जैमिनीं कः सामवेदम् अध्यापितवान्।

४१. ब्रह्मणः किं कार्यम्।

४२. व्यासः सुमन्तमुनिम् अथर्ववेदं किमर्थं पाठितवान्।

४३. शाखया सह कस्य सम्बन्धोऽस्ति।

४४. मालतीमाधवस्य टीकाकर्ता कः।

४५. महाभाष्ये कति शाखाः निर्दिष्टाः।



### २.५.१) शाकलशाखा

सम्प्रति ऋग्वेदस्य प्रचलिता संहिता शाकलशाखीया एवाऽस्ति। शाकलसंहितान्ते ऋक्परिशिष्टनाम्ना षट्त्रिंशत्सूक्तानि संगृहीतानि सन्ति। एतेषु सूक्तेषु कतिपयानि नितान्तप्रख्यातानि बहुशः चर्चितानि च सूक्तानि सन्ति। यथा- श्रीसूक्तम् (सू.स. ११), रात्रिसूक्तम् (सू.स. २६), मेधासूक्तम् (सू.स. ३१), शिवसङ्कल्पसूक्तम् (सू.स. ३३)। अस्य सूक्तस्य प्रत्येकं मन्त्रस्य चतुर्थचरणः 'तन्मे मनः शिवसङ्कल्पमस्तु' इति वाक्येन समाप्तो भवति। वाष्कलशाखानुसारेण 'संज्ञानसूक्तम्' ऋग्वेदस्यान्तिमं सूक्तमस्ति। ऋक्परिशिष्टस्य मन्त्राः पुराणेषु वैदिकमन्त्रदृष्ट्या समुद्धृताः सन्ति। श्रीसूक्तस्य द्वौ मन्त्रौ- 'हिरण्यवर्णां हरिणीम्' तथा 'गन्धद्वारां दुराधर्षाम्' पद्मपुराणे समुद्धृतौ स्तः (६/१५५/२८/३०) 'सितासिते सरीते यत्र सङ्गते' इति स्कन्दपुराणस्य काशीखण्डे (७/४४) तथा पद्मपुराणे (६/२४६/३५), समुद्धृतोऽस्ति। द्वयोः स्थानयोः मन्त्रयोऽयं प्रयागपरकः अस्ति।प्रयागे सिता=गङ्गा, तथा असिता=यमुना तयोः सङ्गमतीर्थस्य विपुलमहिम्नः प्रतिपादकः अस्ति अयं मन्त्रः। ऋक्परिशिष्टस्य मन्त्राः पुराणेषु प्रमाणाय समुद्धृताः सन्ति, तेन एते मन्त्राः विशेषसम्मानार्हाः भवन्ति।

### २.५.२) वाष्कलशाखा

यद्यपि सम्प्रति वाष्कलशाखायाः संहिता समुपलब्धा न भवति तथाप्यस्याः विशिष्टतायाः वर्णनं विविधेषु स्थलेषु प्राप्यते। शाकलशाखानुसारेण ऋग्वेदस्यान्तिमो मन्त्रः 'समानी व आकूतिः' (१०/१९१/४) अस्ति, किञ्च वाष्कलसंहितानुसारेण 'तच्छ्रेयोरावृणीमहे' इत्येव अन्तिमो मन्त्रोऽस्ति। अस्मादेव सूक्तात् वाष्कलशाखा-सम्मत-संहितायाः समाप्तिर्भवति। मन्त्राणां संख्याऽपि कुतश्चिदधिकाऽस्ति। शाकलशाखायां सप्तदशाधिकसहस्रसंख्यकानि (१०१७) सूक्तानि सन्ति। किञ्च वाष्कलशाखायां पञ्चविंशत्यधिकसहस्रसंख्यकानि (१०२५) सूक्तानि सन्ति। एतेषु अष्टाधिकसूक्तेषु एकं तु संज्ञानसूक्तमस्ति। मन्त्रोऽयमस्याः संहितायाः अन्ते निवेशितोऽस्ति। अवशिष्टसप्तसूक्तानि बाल्यखिल्यसूक्तेभ्यः सङ्गृहीतानि सन्ति। अतोऽस्य मण्डल्यस्य समस्तसूक्तानां संख्या (९९) नवनवतिर्भवति।

**'एतत् सहस्रं दश सप्त चैवाष्टवतो बाष्कलकेऽधिकानि।**
**तान् पारेण शाकले शैशिरीये वदन्ति शिष्टानखिलेषु विप्रा॥'**
(अनुवाकाक्रमणी, श्लो.३६)

### २.५.३) आश्वलायनशाखा

आश्वलायनसंहितायाः तथा तेषां ब्राह्मणानां कालः कस्मिंश्चित् समये

अवश्यमेव आसीत्। यतो हि कवीन्द्राचार्यस्य (१७ शताब्द्याः) सूच्यामेतेषां ग्रन्थानां नामोल्लेखः स्पष्टरूपेणोपलब्धो भवति। सम्प्रति अस्याः शाखायाः गृह्यसूत्रं श्रौतसूत्रमिति द्वौ समुपलब्धौ स्तः।

### २.५.४) शाङ्ख्यायनशाखा

अस्याः शाखायाः संहिता तु अनुपलब्धाऽस्ति। किञ्च ब्राह्मणारण्यकौ ग्रन्थौ प्रकाशितौ स्तः। बहूनामालोचकानां विचारे शाङ्खायनस्तथा कौषीतकि शाखा एकैवाऽस्ति, किञ्च द्वेऽपि शाखे भिन्ने एव स्तः। शाङ्खायनीयसंहितायाः तथा शाकलशाखानुयायि-ऋक्संहितायाः च मन्त्रसंहितयोः भेदो न दृश्यते, केवलं मन्त्राणां क्रमे एव विभिन्नता वर्त्तते।

### २.५.५) माण्डूकायनशाखा

अस्याः अपि शाखायाः ग्रन्थाः अनुपलब्धाः सन्ति। यत्र तत्र समुद्धरणादेव अस्यास्तित्वबोधो भवति।



## पाठगतप्रश्नाः-६

४६. ऋग्वेदस्य द्वे शाखे के।
४७. आश्वलायनशाखायाः प्रमाणं कुतः प्राप्यते।
४८. श्रौतसूत्रं कस्यां शाखायाम् अन्तर्भवति।
४९. शाकलशाखानुसारेण ऋग्वेदस्य अन्तिमो मन्त्रः कः।
५०. हिरण्यवर्णां हरिणीम् इत्यादिमन्त्रः कस्मिन् सूक्ते वर्तते।

## २.६) दानस्तुतिः

ऋग्वेदस्य सूक्तेषु 'दानस्तुतिः' नाम्ना कतिपये मन्त्रा लभ्यन्ते। कात्यायनस्य ऋक्सर्वानुक्रमण्यां केवलं द्वाविंशतिसंख्यकेषु सूक्तेषु दानस्तुतीनाम् उल्लेखो वर्त्तते। किञ्चाधुनिकशोधदृष्ट्या अष्टाषष्टिसूक्तेषु दानस्तुतीनां वर्णनमस्ति। ग्रन्थे मणिलालस्य निबन्धः दर्शनीयोऽस्ति। ऋग्वेदस्य ८/३/२१-२४ मन्त्रस्य देवता सर्वानुक्रमण्यां पाकस्थामाकौरयाणस्य दानस्तुतिः कथिता। किञ्च निघण्टु-निरुक्तादि-ग्रन्थानाम् अनुशीलनेन ज्ञायते यत् कौरयाणपदस्य यास्केन कृतोऽर्थः कृतयानो भवति। दुर्गाचार्यस्य सम्मतौ अस्मिन् मन्त्रे 'यान'स्य स्तुतिरस्ति दानस्य नास्ति। शौनकमतेन पाकस्थामाशब्दोऽपि व्यक्तिवाचको नास्ति अपितु विशेषणपदमस्ति (बृहद्देवता ६/४५)। स्कन्दमाहेश्वरस्य व्याख्यानुसारेण पाकस्थामाशब्दस्यार्थो भवति- महाप्राणः अथवा महाबलवानिति- 'पाकस्थामालोके स्थामशब्दः प्राणे प्रसिद्धः। पाकः परिपक्वो महान् स्थामा यस्मै स पाकस्थामा महाप्राणश्चेत्यर्थः' (स्कन्दमाहेश्वरस्य व्याख्या)।



जैमिनिसूक्तस्थ-गुणवादस्य (मी. सू १/२/१०) शबरभाष्यं भारतीयसिद्धान्तस्य कुञ्जिकाऽस्ति। तस्य स्पष्टकथनमस्ति यत् समस्तम् आख्यानमिदम् असत्यमस्ति। आख्यानेषु द्वे वार्त्ते स्तः- वृतान्तज्ञानं तथा प्ररोचना। वृतान्तज्ञानं विधौ न प्रवर्त्तकं नापि निवर्त्तकम्। फलतस्तत्तु प्रयोजनाभावाद् अनपेक्षितमस्ति। प्रीत्या कार्ये प्रवृत्तिर्भवति द्वेषान्निवृत्तिः। आख्यानेष्वेतावदेव अंशस्य विवक्षा वर्त्तते। यथा-

'अस्मद्वृत्तान्तान्वाख्यानं स्तुत्यर्थेन। ...तत्र वृत्तान्तान्वाख्यानं न प्रवर्तकम्, न निवर्तकञ्चेति प्रयोजनाभावात्। अनर्थकमित्यविवक्षितं प्ररोचनया तु प्रवर्त्तते इति द्वेषान्निवर्त्तते इति तयोर्विवक्षा।'

सामान्यदानस्तुतिप्रतिपादकमेकं भव्यं सूक्तमस्ति। सूक्तेऽस्मिन् दान-महिम्नः सुन्दरं वर्णनमस्ति। या व्यक्तिः निजधनं स्वहितायैव नियोजयति सो हि पापं भक्षयति-

**'मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत् स तस्य।**

**नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी॥'**

(तैति. ब्रा. २/८/८/३ एवं निरु. ७ द्रष्टव्यम्।)

एवं- विधजनात् दूरगमनमेव श्रेयस्करं भवति। तस्मै जनाय गृहं न भवति। तं जनं पोषणकर्त्तुः कस्यापि अपरिचितस्य जनस्यैव शरणं गन्तव्यम्। यथा-

**'न स सखा यो न ददाति सख्यै स चा भुवे स च मानायषित्वः।**

**अपास्मात् प्रेयान् न तदोको अस्ति पृणन्तमन्यमरणं चिदिच्छेत्।।'**

'केवलाघो भवति केवलादी' अयं हि त्यागमूलकवैदिकसंस्कृतेः महामन्त्रोऽस्ति। अस्यैव तत्त्वस्य वर्णनं स्मृतिग्रन्थेषु पर्याप्तम् प्राप्यते। अस्मिन् सन्दर्भेऽक्षरशोऽनुवादरूपेण गीतायाः श्लोकोऽयं द्रष्टव्यः-

**'यज्ञाशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः।**

**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्।।' (गीताः. ३/१३)**

## २.७) संवादसूक्तानि

ऋगेवेदे दार्शनिकसूक्तानि यथा उपनिषदां तात्त्विकविवेचनैः सह सम्बद्धानि सन्ति, तथैव एतानि सूक्तानि प्रबन्धकाव्येन नाटकेनापि च सम्बन्धं संयोजयन्ति। एवंविधेषु सूक्तेषु कथोपकथनस्य प्राधान्यमस्ति। ऋग्वेदे अनेकानि कथोपकथनप्रधानानि यमयमीसूक्त-सरमाणिसंवादसूक्त-ऊर्वशीपुरुरवःसंवादसूक्त-प्रभृतीनि सूक्तानि सन्ति, यानि आधारीकृत्यैव भारतीयनाटकानि जातानि। दृष्टान्तरूपेणोर्वशीपुरुरवः संवादमूलं कालिदासीयं विक्रमोर्वशीयं नाम त्रोटकम् उपस्थापयितुं शक्यते।

अस्मिन् सन्दर्भे भारतीया विद्वांसो नाटकानामुदयः वेदस्थितसूक्तमूलकः एव इत्याहुः। किञ्च अस्मिन् विषये पाश्चात्यविद्वत्सु गम्भीरमतभेदो दृश्यते।जर्मनविद्वान् डक्टरश्रोदरमहोदयोऽपि विचारमिमम् अनुमोदयति। स हि संवादसूक्तानां गीतरूपत्वं स्वीकरोति। तदिदं गानं नृत्येन आभिनीयते स्म, तदिष्यते एषां संवादसूक्तानां धार्मिकनाटकरूपता। एतन्मूलैव च भारतीयनाटकप्रवृत्तिः इत्याह।



डॉ. हर्टलमहोदयोऽपि श्रोदरमहोदयस्य विचारमनुमोदयति। अपरे पुनर्विद्वांसो विण्डिश-ओल्डेनवर्ग-पिशेलमुख्या अभिप्रयन्ति यत् संवादसूक्तानि पुरा गद्यपद्यात्मकानि आसन्। पद्यभागः अतिरोचकतया सम्प्रति अवशिष्यते। गद्यभागस्तु केवलवर्णनपरकः, अतः अयं भागः लुप्तप्रायो जातः। नाटके यदधुना गद्यपद्ययोर्मिश्रणं दृश्यते। तदपि एतादृशसंवादसूक्तमूलकम् एव। एते विद्वांसः ऐतरेयब्राह्मणगतं शुनःशेपोपाख्यानं, शतपथब्राह्मणगतमुर्वशी-पुरुरव-उपाख्यानं, चात्र साक्षिभावेनोपस्थापयन्ति।अपरे कतिपये विद्वांसः रामलीला कृष्णलीला चात्र निर्दशनभावं भजतः। ऋग्वेदस्य एतानि सर्वाणि संवादसूक्तानि नाटकीयौजस्वितया सह सम्पृक्तानि सन्ति। कलात्मकदृष्ट्याऽपि चैतानि सूक्तानि नितान्तरमणीयानि, सरसानि प्रभावोत्पादकानि च सन्ति।

## २.८) लौकिकसूक्तानि

ऋग्वेदस्य दशममण्डलस्य अनेकेषु सूक्तेषु लौकिक-व्यवहारिक-विषयाणां रोचकं वर्णनमस्ति। ऋग्वेदस्य दशममण्डलेऽपि एवंविधया लौकिकसंस्कृत्या सह सम्बद्धविषयाणां समुपलब्धिः अस्य मण्डलस्य विशिष्टतां सूचयति। यक्ष्माख्यस्य व्याधेः विनाशाय १६१, १६३ तथाऽन्यानि अनेकविधानि च सूक्तानि लभ्यन्ते। रक्षोहासूक्ते दानवात् गर्भस्य त्राणार्थं मन्त्रोऽस्ति। एकस्मिन् सूक्ते पत्न्याः कष्टमपहाय पत्युः प्राप्त्युपायस्य विवरणं प्राप्यते। यथा-

**'इमां खनाम्योषधिं वीरुधं बलवत्तम्।**

**यया सपत्नीं बाधते संविन्दते पतिम्।।'(ऋग्वे. १०/१४५/१)**

अपरस्मिन् सूक्ते शत्रु-संहाराय प्रार्थना वर्त्तते-

**'ऋषभं मां समानानां सपत्नानां विषासहितम्।**

**हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम्।।' (ऋग्वे. १०/१६६)**

अनेन प्रकारेण १०/१६४ सूक्ते दुःस्वप्नविनाशाय प्रार्थनाऽस्ति। १०/५४ सूक्तस्य नाम एव 'मनःआवर्त्तनम्' सूक्तमस्ति। वैवस्वत-यम-दिव-भूमि-समुद्रादीनां पार्श्वगतानां जनानां मनसां परिवर्त्तनाय प्रार्थनाऽस्ति-

**'यत् ते यमं वैवस्वतं मनो जगाम दूरकम्।**

**तत्त आवर्तयामसीह क्षयाय जीवसे।।' (ऋग्वे. १०/५८)**

एकस्मिन् सूक्ते भिषगृषिः औषधीनां भव्यस्तुतिं समुपस्थापयति-

**'याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः।**

**बृहस्पति-प्रसुतास्ता नो मुञ्चत्वं हसः।।' (ऋग्वे. १०/९७/१५)**

एकस्मात् सूक्तात् ज्ञातो भवति यत् प्राचीनकालेऽपि प्रजा एव राज्ञः वरणमकुर्वन्। यथा-

**'अभित्वा देवः सविताभि सोमो अवीवृतत्।**

**अभित्वा विश्वाभूतान्यभिवर्चो यथाससि।।'**



## २.९) दार्शनिकसूक्तानि

नासदीयसूक्त-(१०/१२९)पुरुषसूक्त-(१०/९०)हिरण्यगर्भसूक्त-(१०/१२१)वाक्सूक्तादीनि सूक्तानि दार्शनिकदृष्ट्या यथा गम्भीराणि सन्ति तथैव प्रतिभानुभूतिदृष्ट्या अतीव रमणीयानि, अभिनवकल्पनादृष्ट्या अपि च नितान्तानि प्रसिद्धानि सन्ति। नासदीयसूक्त-विषये आलोचकानां मतमस्ति, यदिदं सूक्तं ऋग्वेदीयानाम् ऋषीणाम् अलौकिकचिन्तनधारायाः मौलिक-परिचायकम् अस्ति। जगतः प्रारम्भिकस्थितेः वर्णनं कुर्वन् अस्य सूक्तस्य ऋषिः कथयति- सृष्टेः आरम्भकाले नासीत् सद्वस्तु न वा असद्वस्तु। न दिनमासीत् न वा रात्रिः, सृष्टेः अभिव्यञ्जकं किमपि चिह्नं तदा नासीत्। सर्वप्रथमः कामः अर्थात् सङ्कल्पः समुत्पन्नोऽभवत्। अस्यैव कामस्याभिव्यक्तिः सृष्टेः विभिन्नस्तरेषु प्रतिफलिता अभवत्। तदा एकम् एव तत्त्वमासीत्, यद् विना वातं श्वासग्रहणमकरोत् तथा स्वस्य स्वाभाविकशक्त्या जीवितमासीत् तत् तत्त्वम्।

**'आनीदवातं स्वधया तदेकम्।**

**तस्माद्धान्यन्न परः किञ्च नास।।' (ऋ.१०/१२९/२)**

प्रतिभानुभूतेः उपरि अद्वैततत्त्वस्य प्रतिष्ठा एवास्य गम्भीरमन्त्रस्य गूढरहस्यमस्ति।



### पाठगतप्रश्नाः-७

५१. दानस्तुतीनाम् उल्लेखः कुत्र वर्तते।

५२. भारतीयसिद्धान्तस्य कुञ्जिका इति का।

५३. त्यागमूलकवैदिकसंस्कृतेः महामन्त्रः कः।

५४. नाटकानामुदयः कस्माज्जातः इति विद्वांसः कथयन्ति।

५५. केषाञ्चन पाश्चात्यविदुषां नाम लिख्यताम्।

५६. दार्शनिकदृष्ट्या गाम्भीर्यार्थकानां सूक्तानां नाम लिखत।

---

## २.१०) दशममण्डलस्य अर्वाचीनत्वम्

दशमं मण्डलं सर्वतः अर्वाचीनं मण्डलं वर्तते। अस्य कारणञ्च वंशमण्डलात् भाषागतभेदः तथा विषयगतभेदः च बहुत्र दृश्यते। अत्र भाषागतवैशिष्ट्यं, छन्दोगतवैशिष्ट्यं तथा देवतागतं च वैशिष्ट्यमालोच्यते।

## २.१०.१) भाषागतभेदः

ऋक्संहितासाहित्ये बहुत्र भाषायां भेदाः परिलक्ष्यन्ते। ऋग्वेदस्य बहुषु स्थलेषु शब्दानां भिन्नरूपेण प्रयोगः दृश्यते। भाषाविदामियं मान्यता अस्ति यत् संस्कृतभाषा यथैव विकसिता भवति तथैव तस्यां भाषायां रेफस्य स्थाने लकारस्य प्रयोगो वर्द्धते, यथा जलवाचकस्य सलिल-शब्दस्य प्राचीनरूपं सरिर इति पदं गोत्रमण्डलेषु प्रयुक्तम् अस्ति। किञ्च दशममण्डले लकारयुक्तशब्दस्यैव प्रयोगः प्राप्यते। अयं प्रयोगदृष्ट्या भाषायां भेदः। व्याकरणदृष्ट्या अपि भाषायां पार्थक्यं परिलक्ष्यते। प्राचीनांशे पुंल्लिङ्ग-आकारान्तशब्देषु प्रथमाद्विवचनस्य प्रत्यय आ इत्येवास्ति। यथा द्वा सुपर्णा सयुजा सखाया (ऋ.वे. १.१६१) इति। किञ्च दशममण्डले तस्मिन् स्थाने औ इति प्रत्ययस्य अपि प्रयोगः प्राप्यते। यथा – मा वामेतौ मा परेतौ रिषाम् (ऋ.वे.१०.१७८.२), सूर्याचन्द्रमसौ धाता (१०.१९०.३)। प्राचीनांशे क्रियार्थकक्रियायाः सूचनार्थं तवै , से, असे, अध्यै, इत्यादयः प्रत्ययाः प्रयुक्ताः सन्ति। किञ्च दशममण्डले आधिक्येन  तुम् इति प्रत्ययस्यैव प्रयोगः प्राप्यते। दशममण्डले कर्त्तवै, जीवसे, अवसे इत्यादिप्राचीनपदानां स्थाने कर्त्तुम्, जीवितुम्, अवितुम् इत्यादिप्रयोगानां प्राचुर्यं परिलक्ष्यते। ब्राह्मणग्रन्थानां भाषया सह दशममण्डलस्य भाषा समाना दृश्यते। अतः एतेषां ग्रन्थानां कालविचारे कृते प्राचीनत्वं न प्रतीयते।

## २.१०.२) छन्दोगतवैशिष्ट्यम्

प्राचीनांशेषु उपलब्धानां छन्दसाम् अपेक्षया दशममण्डलस्य छन्दःसु पार्थक्यम् अस्ति। प्राचीनकाले वर्णानां संख्याया उपरि छन्दोविन्यासे विशेषः आग्रहः आसीत्। किञ्च दशममण्डले लघु-गुरूणाम् अपि उचितविन्यासे सर्वत्र विशेषबलं परिदृश्यते। येन पद्यानां पठने सुस्वरस्य लयस्य च आविर्भावः अतीव रुचिरतया सम्पद्यते। फलतः प्राचीनानुष्टुप् दशममण्डले लौकिकसंस्कृतस्य अनुष्टुप् इव अभवत्।

## २.१०.३) देवगतवैशिष्ट्यम्

ऋग्वेदे हि देवताः प्राणशालित्वात् असुर इति प्रोक्ताः। अस्मिन् वेदे देवतानां स्थानमतीव महत्त्वपूर्णम् अस्ति। वैदिककालस्य महर्षयः प्रकृतेः लीलाः अवधारयितुम् विविधानि रूपाणि कल्पितवन्तः। किञ्च दशममण्डले उल्लिखितेषु देवेषु बहवो नवीनाः देवताः सन्निविष्टाः अभवन्। वरुणः समस्तजगतां नियन्ता, सर्वज्ञः, सर्वशक्तिमान् देवस्वरूपेण पूर्वं चित्रितः आसीत्, किञ्चाऽस्मिन् मण्डले तस्य शासनक्षेत्रं सङ्कीर्णं भूत्वा जलमात्रम् अवशिष्टमिति दृश्यते। विश्वनियन्तृ-पदाद् अपसृत्य जलदेवतास्वरूपेणैव दृग्गोचरो भवति। कतिपये मानसिकभावनायाः, मानसिकवृत्तेश्च प्रतिनिधिस्वरूपाः अभिनवाः देवाः कल्पिताः। एतादृशेषु देवेषु 'श्रद्धा (ऋ. १०.१५१) , 'मन्युः( १०.८३.८४) प्रभृतयः परिकल्पिताः सन्ति। तार्क्ष्यस्याऽपि स्तुतिः एकस्मिन् स्थाने देवतारूपे एवोपलब्धा भवति (ऋ. १०.१७८)। कामायनीश्रद्धायाः अतीव रोचकवर्णनं सूक्ते अस्ति -

**श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः।**



**श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि।।**

श्रद्धया अग्नेः समिन्धनं भवति, अर्थात् ज्ञानाग्नेः प्रज्वलनं श्रद्धया एव भवति। हविषः हवनमपि श्रद्धया एव सम्भवति। गीतायां भगवता श्रीकृष्णेनापि बहुधा एवमुच्यते। ऐश्वरस्य ऊर्ध्वस्थानं गमनाय वयं वचसा श्रद्धायाः स्तुतिं कुर्मः। गोः स्तुतौ प्रयुक्तमेकं समग्रसूक्तं (१०.१६९) वैदिकानाम् आर्याणां गोविषयिणीं भावनां सुन्दरतया अभिव्यक्तं करोति। अरण्यानी-देव्याः स्तुतौ (१०.१४६) विषयस्य नवीनत्वं पण्डितानां हृदयम् आकर्षयति। अस्यैव सूक्तस्य प्रख्यातमन्त्रे (१०.७१.११) यज्ञसम्पादकानां चतुर्णाम् ऋत्विजां होतृ-अध्वर्यु-उद्गातृ-ब्रह्मादीनां स्पष्टरूपेण सङ्केतो प्राप्यते।



## पाठगतप्रश्नाः-८

५७. वेदे सलिलशब्दस्य स्थाने कस्य प्रयोगो दृश्यते।

५८. ऋग्वेदस्य दशममण्डले केषां प्रत्ययानां प्रयोगः दृश्यते।

५९. जीवसे अवसे इत्यनयोः स्थलयोः ऋग्वेदस्य दशममण्डले किं प्रयुक्तं दृश्यते।

६०. पद्यानां पठने रुचिरता कथमागच्छति।

६१. ऋग्वेदे देवाः कथम् असुराः इत्युच्यन्ते।

६२. ऋग्वेदस्य दशममण्डले वरुणदेवः कथं प्रतिपादितः।

६३. वरुणदेवस्य शासनक्षेत्रं कुत्र आसीदिति।

६४. श्रद्धयाग्निः समिध्यते इति मन्त्रं सम्पूर्णं लिखत?



## पाठसारः

ऋग्वेदः अष्टक-अध्याय-सूक्तभेदेन तथा मण्डल-अनुवाक-वर्गभेदेन विभक्तः। ऋग्वेदे त्रिष्टुप्-छन्दसः प्रयोगः आधिक्येन दृश्यते। ऋग्वेदस्य शाकल-वाष्कल-आश्वलायन-शांख्यायन-माण्डूकायन-नामधेयाः पञ्च मुख्याः शाखाः सन्ति। सम्प्रति ऋग्वेदस्य प्रचलिता संहिता शाकलशाखीया एवाऽस्ति। संवादसूक्ते कानिचन उपाख्यानानि प्राप्यन्ते। तेषु ऐतरेयब्राह्मणगतं शुनःशेपोपाख्यानं, शतपथब्राह्मणगतमुर्वशी-पुरुरव-उपाख्यानम् इत्यादीनि मुख्यानि सन्ति। ऋग्वेदस्य दशमं मण्डलं सर्वतः अर्वाचीनं मण्डलं वर्तते। कारणञ्च अस्य वंशमण्डलात् भाषागतभेदः तथा विषयगतभिन्नता सर्वत्र परिलक्ष्यते। अत्र भाषागतवैशिष्ट्यं, छन्दोगतवैशिष्ट्यं तथा देवतागतं च वैशिष्ट्यञ्च आलोचितम्।





## पाठान्तप्रश्नाः

१. ऋक्संहितायाः द्वौ क्रमौ वर्णयत।

२. ऋग्वेदे ऋचां संख्यायाः विषये यज्जानन्ति तल्लिखन्तु।

३. ऋग्वेदस्य काः शाखाः प्रसिद्धाः सन्ति, ताः विशदम् आलोच्यताम्।

४. संवादसूक्तविषये संक्षेपेण लिखत।

५. दशममण्डलस्य अर्वाचीनत्वं युक्तिभिः समर्थयत।

६. दशममण्डले भाषागतभेदं वर्णयत।



## पाठगतप्रश्नानाम् उत्तराणि-

### उत्तराणि-१

१. ऋच्यते स्तूयते यया सा ऋक्।

२. ऋचां समूह एव ऋग्वेदः।

३. यत्रार्थवशेन पादव्यावस्था सा ऋगिति मीमांसकाः।

४. ऋचाम् आविर्भावविषये पुरुषसूक्ते आलोचना वर्तते।

५. महाभाष्ये ऋग्वेदस्य एकविंशतिः शाखाः निर्दिष्टाः।

६. ऋग्वेदः सूक्त-मण्डलभेदेन द्विधा विभक्तः।

७. ऋषिसूक्त-देवतासूक्त-च्छन्दःसूक्त-अर्थसूक्तभेदात् सूक्तं चतुर्विधम्।

८. येषां मन्त्राणाम् ऋषिः तु एकः एव वर्तते तेषां समूहः हि ऋषिसूक्तम्।

९. येषां मन्त्राणां कृते छन्दः समानमेव अस्ति तेषां समूहो हि छन्दःसूक्तम्।

१०. यावदर्थसमाप्तानां मन्त्राणां समूहः अर्थसूक्तम्।

११. ऋग्वेदः मण्डल-अनुवाक-वर्गभेदेन अष्टकाध्यायसूक्तभेदेन च द्विधा।

१२. प्रथमभागे बालखिल्यसूक्तानि विहाय सम्पूर्णायां ऋग्वेदसंहितायां दश मण्डलानि, पञ्चाशीतिश्चानुवाकाः, अष्टोत्तरद्विशतमिताश्च वर्गाः सन्ति।

### उत्तराणि-२

१३. ऋक्संहितायाम् अष्टौ भागाः, प्रतिभागं च अष्टौ अध्यायाः।

१४. सम्पूर्णे ऋग्वेदे चतुष्षष्टिः अध्यायाः सन्ति।

१५. प्रत्येकाध्यायस्य अन्तरविभागस्य नाम -'वर्गे' इत्यस्ति।

१६. सुष्ठुतया सारल्येन च यथा अध्ययनं भवेत् तस्मादेव एतादृशः वर्गभेदः कृतः।

१७. सम्पूर्णे ऋग्वेदे षडधिकद्विसहस्रपरिमिताः वर्गाः सन्ति।



### उत्तराणि-३

१८. ऋग्वेदस्य द्वितीयोऽयं मण्डलक्रमविभागः।

१९. बालखिल्यसूक्तानि विहाय सम्पूर्णयाम् ऋग्वेदसंहितायां दश मण्डलानि पञ्चाशीतिश्च अनुवाकाःअष्टोत्तरशतद्वयमिताश्च वर्गाः सन्ति।

२०. शाकल्यनुसारेण दशसहस्र-चतुःशतसप्तषष्टिमिताः मन्त्राः सन्ति।

२१. मन्त्रेषु अक्षरसंख्या हि - ४३२०००।

२२. सर्वेऽपि मन्त्राः चतुर्दशसु छन्दःसु विभक्ताः।

२३. ऋग्वेदगतमन्त्रद्रष्टारो ऋषयः गृत्समद-विश्वामित्र-वामदेव-अत्रि-भरद्वाज-वशिष्ठादयः सन्ति।।

२४. खिलशब्दास्यार्थो भवति 'परिशिष्टम्' अथवा पश्चात्सङ्कलितमन्त्राः।

२५. ऋचां शब्दानां संख्या १५३८२३ वर्तते।

२६. 'बृहतीच्छन्दः षट्त्रिंशदक्षराणां भवति।

### उत्तराणि-४

२७. प्राचीनाचार्याणां मध्ये ऋङ्मन्त्राणां गणनाप्रसंगे वैषम्यं शाखानां भेदजन्यादेव परिलक्ष्यते।

२८. अस्य भ्रमोदयस्य कारणमस्ति- ऋग्वेदे कियत्यः ऋचः एवंविधाः सन्ति या ऋचः अध्ययनकाले चतुष्पदा भवन्ति किञ्च प्रयोगकाले द्विपदा एव मन्यते इति।

२९. चरणव्यूहस्य टीकाकर्ता हि – महिमदासः।

३०. ऋग्वेदस्य संहितायां 'त्रिष्टुप्'-छन्दसः आधिक्यं दृश्यते।

३१. त्रिष्टुप्-छन्दसि चत्वारः पादाः एकादश अक्षराणि च भवन्ति।

३२. गायत्री-छन्दसि त्रयः पादाः प्रतिपादं अष्टाक्षराणि भवन्ति।

३३. जगती-छन्दसि चत्वारः पादाः एकादश अक्षराणि च भवन्ति।

३४. शेषभागे ८९८ अनुष्टुप् वर्तन्ते।

### उत्तराणि-५

३५. यज्ञस्य आवश्यकताम् अनुभूय उदात्तदृष्ट्या महामुनिः व्यासः स्वचतुरान् शिष्यान् वेदम् अध्यापितवान्।

३६. यज्ञे चत्वारः ऋत्विजो भवन्ति, ते च १.होता, २.अध्वर्युः, ३. उद्गाता, ४. ब्रह्मा चेति।

३७. होता हि यज्ञस्य आह्वानकर्त्ता।

३८. अध्वर्युर्विधिवद्यज्ञं सम्पादयति।

३९. उद्गाता हि स्वरबद्धान् मन्त्रान् उच्चैर्गायति।

४०. जैमिनीं व्यासः सामवेदं पाठितवान्।

४१. ब्रह्मा हि यज्ञनिरीक्षकः कृताकृतावेक्षणकर्त्ता च ।



४२. यज्ञनिरीक्षणकार्यसम्पादनाय मुनिः व्यासः सुमन्तुमुनिमर्थववेदं पाठितवान्।

४३. शाखया सह 'चरण'-शब्दस्यापि सम्बन्धोऽस्ति।

४४. मालतीमाधवस्य टीकाकर्ता हि – श्रीजगधरः।

४५. महाभाष्ये ऋग्वेदस्यैकविंशतिशाखा निर्दिष्टाः।

**उत्तराणि-६**

४६. शाकलशाखा वाष्कलशाखा च।

४७. कवीन्द्राचार्यस्य सूचीतः।

४८. आश्वलायनशाखायाम्।

४९. समानी व आकूतिः इत्यादिमन्त्रः।

५०. श्रीसुक्ते।

**उत्तराणि-७**

५१. कात्यायनस्य ऋक्सर्वानुक्रमण्यां केवलं द्वाविंशतिसंख्यकेषु सूक्तेषु।

५२. शबरस्वामिनः शबरभाष्यमिति।

५३. 'केवलाघो भवति केवलादी' इति

५४. वेदस्थसूक्तेभ्य इति।

५५. डॉ. हर्टलमहोदयः, श्रोदरमहोदयः, विण्डिशमहोदयः, ओल्डेनवर्गमहोदयः, पिशेलमहोदयः इत्येते

५६. नासदीयसूक्तम्,पुरुषसूक्तम्,हिरण्यगर्भसूक्तम्,वाक्सूक्तम् इत्यादि।

**उत्तराणि-८**

५७. सरिर इति।

५८. तवै , से, असे, अध्यै, इत्यादयः प्रत्ययाः।

५९. जीवितुम्, अवितुम् इति।

६०. सुस्वरस्य तथा लयस्य सत्त्वात्।

६१. प्राणशालित्वात्।

६२. समस्तजगतां नियन्ता, सर्वज्ञः, सर्वशक्तिमान्।

६३. जलमात्रम् एव।

६४. श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः।श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि।

---

।।इति द्वितीयः पाठः।।

---

## ३

# यजुर्वेद-सामवेद-संहितासाहित्यम्

### प्रस्तावना -

अस्मिन् पाठे यजुर्वेदीयसंहितासाहित्यं सामवेदीयसंहितासाहित्यं च आलोच्यम्। यजुर्वेदः शुक्लकृष्णभेदेन द्विविधो भवति। तयोः पुनः संहिताभेदोऽपि अस्ति। अत्र तावत् आदौ यजुर्वेदसंहितायाः सामान्येन परिचयं कृत्वा माध्यन्दिनसंहिता, काण्वसंहिता, तैत्तिरीयसंहिता, मैत्रायणीसंहिता, कठसंहिता, कापिष्ठलसंहिता च इत्येतेषां विभागानां विस्तरशः आलोचना करिष्यते। अनन्तरं सामवेदसंहिता आलोचयिष्यते। तत्र च सामशब्दार्थः प्रतिपादयिष्यते। तदनन्तरं कौथुमीयशाखा राणायणीयशाखा जैमिनीयशाखा चेति तिसृणां सामवेदीयशाखानाम् विस्तृता आलोचना भविष्यति। अन्ते च सामगानसामान्यपरिचयः सामविभागः च प्रदर्शयिष्यते।



### उद्देश्यानि -

इमं पाठं पठित्वा भवान् -

- यजुर्वेदस्य विभागं ज्ञास्यति।
- यजुर्वेदीयसंहितानां प्रकारं ज्ञास्यति।
- माध्यन्दिनसंहिता, काण्वसंहिता, तैत्तिरीयसंहिता, मैत्रायणीसंहिता, कठसंहिता, कापिष्ठलसंहिता - इत्येतासां मुख्यसंहितानां विषये ज्ञास्यति।
- साम-शब्दस्य अर्थं ज्ञास्यति।
- सामवेदीयसंहितानां प्रकाराणि अवगमिष्यति।
- कौथुमीयशाखा, राणायनीयशाखा जैमिनीयशाखा चेति तिस्रः सामवेदीयशाखाः ज्ञास्यति।
- सामगानसामान्यपरिचयं सामविभागं च ज्ञास्यति।

## ३.१) यजुःसंहितासाहित्यम्

ऋग्वेदसंहिता सामवेदसंहिता यजुर्वेदसंहिता अथर्ववेदसंहिता इति एतासु चतसृष्वपि संहितासु यजुःसंहिता अतीव महत्त्वपूर्णा। यजुर्वेदे सर्वविधस्य यागस्य वर्णनं विद्यते। सा च यजुःसंहिता कृष्णयजुश्शुक्लयजुर्भेदेन द्विविधा। मन्त्रब्राह्मणयोर्द्वयोरपि यत्र मिश्रीभावः कृतः स कृष्णयजुर्वेद इति नाम्ना, किञ्च यत्र मन्त्राणामेव विशुद्धतया प्रतिष्ठानं कृतम् सः शुक्लयजुर्वेदः इति विश्रुतम्।

शुक्लयजुर्वेदस्य सम्प्रति पञ्चाशीतिशाखासु केवलं चतस्रः तैत्तिरीय-मैत्रायणी-काठक-कापिष्ठलाख्याः शाखाः समुपलभ्यन्ते।

यजूंषि गद्यानि। अध्वर्युणा यज्ञे उपयुज्यमानाः मन्त्राः एव यजुर्वेदे सङ्कलिताः। यज्ञस्य वास्तविकं विधानमध्वर्युरेव करोति, अतोऽयं यजुर्वेदो यज्ञविधेरतिसन्निकृष्टं सम्बन्धं रक्षति। यजुःशब्दस्य व्याख्याः आपातदृष्ट्या भिन्नाः प्रतीता भवन्ति चेदपि तासु एकमेव लक्षणं प्रति सङ्केतः प्राप्यते। 'अनियताक्षरावसानो यजुः' अर्थात् यत्र अक्षराणां संख्या नियता निश्चिता वा नास्ति तद्यजुः। 'गद्यात्मको यजुस्तथा शेषे यजुः' इति कथनस्य तात्पर्यम् इदम् एवास्ति यत् गद्यात्मक-मन्त्राणामभिधानमेव 'यजुः' वर्तते इति।

वेदस्य द्वौ सम्प्रदायौ स्तः- १) ब्रह्मसम्प्रदायः, २) आदित्यसम्प्रदायः चेति। शतपथब्राह्मणानुसारेण आदित्ययजुः शुक्लयजुर्वेदनाम्ना विख्यातमस्ति, तथा च याज्ञवल्क्येन आख्यातम् - 'आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते' (श.ब्रा. १४/९/५/३३)। अतः आदित्यसम्प्रदायस्य प्रतिनिधिः शुक्लयजुर्वेदोऽस्ति। यजुर्वेदस्य शुक्लत्वकृष्णत्वयोः यो भेदः स तयोः स्वरूपमाश्रित्य। शुक्लयजुर्वेदे दर्शपौर्णमासाद्यनुष्ठानस्य कृते मन्त्राः सङ्कलिताः सन्ति। किञ्च तत्र ब्राह्मणभागः पृथक्तया निर्दिष्टः। कृष्णयजुर्वेदे तु मन्त्रैः सह तन्नियोजकानां ब्राह्मणवाक्यानां सम्मिश्रणमस्ति। मन्त्रब्राह्मणयोः एकत्र मिश्रणमेव कृष्णयजुर्वेदस्य कृष्णत्वस्य कारणमस्ति। एवञ्च मन्त्रब्राह्मणयोः पृथक्त्वं शुक्लयजुर्वेदस्य शुक्लत्वस्य कारणम् अस्ति।

## ३.२) विषयविवेचनम्

शुक्लयजुर्वेदीय-मन्त्रसंहिता वाजसनेयीसंहिता इति नाम्ना विख्याता। अस्य चत्वारिंशत् अध्यायाः सन्ति। तेषु अन्तिमाः पञ्चदशाध्यायाः खिलरूपेण प्रसिद्धेः अवान्तरयुगीयाः मन्यन्ते।

प्रारम्भिकयोर्द्वयोरध्यायः दर्शपौर्णमासनामकयागसम्बद्धमन्त्राणां वर्णनमस्ति। तृतीयाध्याये अग्निहोत्राय चातुर्मास्याय च यज्ञाय उपयोगिनाम् मन्त्राणां विवरणं कृतम् अस्ति। चतुर्थाध्यायात् आरभ्य अष्टमाध्यायपर्यन्तं सोमयागानां वर्णनमस्ति। अस्मिन्नेवाध्याये अग्निष्टोमस्य प्रकृतियागत्वेन नितान्तं विस्तृतविवरणम् अस्ति। अग्निष्टोमे सोमस्य उपलखण्डेन कुट्टनं कृत्वा रसक्षरणम् करणीयम्। तेन हि प्रातः, मध्याह्ने, सायंकाले चाग्नौ हवनं भवति। अस्यैव 'सवनमि'त्यभिधानमस्ति। सवनमिदं समयानुसारेण विभिन्ननाम्ना विख्यातमस्ति। दिनमात्रमेव समाप्य सवनम् 'एकाहः' इति कथ्यते। सोमयागे वाजपेययागः अन्यतमोऽस्ति। राज्ञः अभिषेककाले राजसूययज्ञो भवति। यज्ञेऽस्मिन् द्यूतक्रीडा-अस्त्रक्रीडाप्रभृतीनां राजन्योचितविभिन्नक्रियाकलापानां विधानं भवति। नवमे दशमे च अध्याये अनेन यज्ञेनैव सम्बद्धानां मन्त्राणां सङ्कलनमस्ति। तदनन्तरम् एकादशाध्यायाद् आरभ्य अष्टादशाध्यायपर्यन्तम् अग्निचयनविषये आलोचना वर्तते। किञ्च यज्ञीयहोमाग्निहेतवे वेदीनिर्माणस्य वर्णनमपि विस्तरेण कृतमस्ति। वेद्या रचना १०८०० इष्टिकाभिः भवति। इयम् विशिष्टस्थानादेव समानीता भवति।वेद्याः आकृतिः पतत्रप्रसारितः पक्षी इव भवति। ब्राह्मणमन्त्रेषु वेद्याः तथा तासाम् इष्टिकाणाम् आध्यात्मिकरूपतया व्याख्यानम् अतीव सुन्दरतया कृतमस्ति। षोडशाध्याये शतरुद्रीयहोमस्य प्रसङ्गः अस्ति। अस्मिन् अध्याये रुद्रस्य



कल्पनायाः साङ्गोपाङ्गविवेचनमस्ति। रुद्रसम्बन्धिवैदिकयज्ञेषु रुद्राध्यायः अतीव उपयोगित्वेन नितान्तं प्रसिद्धोऽस्ति। अष्टादशाध्याये वसोः धारासम्बन्धिनः मन्त्राः निर्दिष्टाः सन्ति। तदनन्तरं त्रिष्वध्यायेषु (१९-२१) सौत्रामणियज्ञस्य विधानमस्ति। अस्य यज्ञस्य विषये अस्ति एका जनश्रुतिः यत् अधिकसोमपानेन इन्द्रः रुग्णोऽभवत्। अस्य रोगस्य चिकित्सा स्ववैद्येन अनेनैव यज्ञेन कृता इति। राज्यच्युतनृपाय, पशुकाम-यजमानाय, सोमरसानुकूलतया पराङ्मुखजनाय चास्यैव यज्ञास्यानुष्ठानं विहितम्। अस्याः प्रक्रियायाः संक्षिप्तं विवरणम् ऊनविंशत्यध्यायस्य महीधरभाष्यस्य प्रारम्भे समुपलब्धमस्ति। सौत्रामणियज्ञे सोमरसेन सह सुरापानस्याऽपि विधानं वर्त्तते। तथाहि "सौत्रामण्यां सुरां पिबेत्" इति।

द्वाविंशत्यध्यायाद् आरभ्य पञ्चविंशत्यध्यायपर्यन्तम् अश्वमेधयज्ञस्य विशिष्टमन्त्राणां निर्देशोऽस्ति। अश्वमेधयज्ञस्तु सार्वभौमाधिपत्याभिलाषिसम्राजे विहितोऽस्ति। अस्य यज्ञस्य साङ्गोपाङ्गवर्णनं शतपथब्राह्मणस्य त्रयोदशकाण्डे तथा च कात्यायनश्रौतसूत्रस्य विंशत्यध्याये अस्ति। षड्विंशत्यध्यायाद् आरभ्य ऊनत्रिंशदध्यायपर्यन्तं खिलमन्त्राणां सङ्कलनमस्ति। त्रिंशदध्याये पुरुषमेधयज्ञस्य वर्णनमस्ति। यत्र चतुरशीत्यधिकशतपदार्थानां आलम्भनस्य (बलिदानस्य) निर्देशः विहितः। भारतवर्षे कदापि पुरुषमेधो नाभवत्। अयं काल्पनिकयज्ञोऽस्ति। अस्मिन्नध्याये तात्कालिकसमाजस्य अवस्थायाः, वृत्तेस्तथा कलाकौशलस्य परिचयः प्राप्यते। एकत्रिंशदध्याये प्रसिद्धपुरुषसूक्तमस्ति, यस्मिन्नृग्वेदापेक्षया षट् मन्त्रा अधिकाः सन्ति। द्वात्रिंशत् तथा त्रयस्त्रिंशदध्याये सर्वमेधस्य मन्त्रः उल्लिखितोऽस्ति। द्वात्रिंशदध्यस्यारम्भे हिरण्यगर्भसूक्तस्याऽपि कतिपयमन्त्राः समुद्धृताः सन्ति। चतुस्त्रिंशदध्यायस्य प्रारम्भे षण्मन्त्रविशिष्टा 'शिवसङ्कल्पसूक्तम्' (तन्मे मनः शिवसङ्कल्पमस्तु) नितान्तम् उपादेया अस्ति।

**"सुषारथिरश्वानिव यन्मनुष्यान्**
**नेनीयतेऽभीशुभिर्वाजिन इव।**
**हृत्प्रतिष्ठं यदजिरं जविष्ठं**
**तन्मे मनः शिवसङ्कल्पमस्तु॥" (यजुः ३४/६)**

पञ्चत्रिंशदध्याये पितृमेधयज्ञसम्बन्धिमन्त्राः सङ्कलिताः। षट्त्रिंशदध्यायाद् आरभ्य अष्टात्रिंशदध्यायपर्यन्तं प्रवर्ग्ययागस्य विस्तरशः वर्णनमस्ति। अन्तिमाध्याये ईशावास्योपनिषत् अस्ति। उपनिषत्सु लघुकाशिकेयमुपनिषद् आदिमोपनिषदस्ति, यतो हि अन्योपनिषत्संहितायाः भागो नास्ति। उपनिषद्ग्रन्थेषु अस्य ग्रन्थस्य प्राथम्यस्य इदमेव कारणमस्ति। अस्याः संहितायाः आदित्येन सह घनिष्ठसम्बन्धस्यापि सूचना अस्याः एव अन्तिममन्त्रेण प्राप्यते-

**"हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।**
**योसावादित्ये पुरुषः सोऽसावहम्।।" इति। (ईशावा.४०/१७)**





## पाठगतप्रश्नाः-१

१. गद्यात्मकमन्त्राणां किमभिधानम्।

२. यजुर्वेदः कतिविधः।

३. वेदस्य कति सम्प्रदायाः।

४. कृष्णयजुर्वेदस्य तथा नामकरणे हेतुः कः।

५. शुक्लयजुर्वेदे कति अध्यायाः सन्ति।

६. अश्वमेधयज्ञविषये निर्देशः शुक्लयजुर्वेदे कुत्र प्राप्यते।

## ३.३) शुक्लयजुर्वेदस्य शाखा

शुक्लयजुर्वेदस्य माध्यन्दिनशाखा, काण्वशाखा चेति द्वे शाखे स्तः। प्रथमा उत्तरभारते प्राप्यते द्वितीया च महाराष्ट्रे। अनयोः शाखयोः संहिते भिन्ने सत्यौ अपि स्वल्पमेव भेदं ते धारयतः, बहुत्र च साम्यम् अस्ति। किञ्च प्राचीनकाले काण्वशाखा उत्तरभारते एवासीत्। यतः अस्याः संहितायाः एकस्मिन् मन्त्रे (११/११) कुरु-पाञ्चालदेशीयनृपतेः निर्देशः प्राप्यते (एष वः कुरवो राजा, एष पाञ्चालो राजा)। महाभारतस्य आदिपर्वानुसारेण (६३/१८) शकुन्तलायाः पालनकर्तुः पितुः कुलपतिकण्वस्य आश्रमः मालिनीनद्याः तटे आसीत्। अद्यापि इदम् स्थानम् उत्तरप्रदेशस्य 'बिजनौर'मण्डले 'मालन'नाम्ना ख्याता एका लघ्वी नदी अस्ति। अतः काण्वसंहितायाः प्राचीनसम्बन्धः उत्तरप्रदेशेन सह अङ्गीकरणे न कापि विप्रतिपत्तिः।

## ३.४) कृष्णयजुर्वेदस्य शाखा

कृष्णयजुर्वेदस्य सम्प्रति चतस्रः शाखाः प्राप्यन्ते -

क. तैत्तिरीयसंहिता- इयं प्रधानशाखा, अत्र सप्तखण्डाः सन्ति। ते च खण्डाः अष्टकशब्देन काण्डशब्देन च व्यवह्रियन्ते। प्रतिकाण्डं कतिपयाध्यायाः वर्तन्ते ये प्रपाठकनाम्ना ख्याताः। इमे प्रपाठकाः बहुषु अनुवाक्षु विभक्ताः सन्ति।

ख. मैत्रायणीसंहिता- इमे द्वे अपि संहिते तैत्तिरीयसंहिताम् अनुकुरुतः।

ग. काठकसंहिता- केवलं क्रमे यत्र तत्र पार्थक्यं विद्यते।

घ. कापिष्ठलसंहिता- चरणव्यूहमतानुसारेण अस्याः विषये प्रतिपादयिष्यते।



## ३.४.१) तैत्तिरीयसंहिता

तैत्तिरीयसंहितायाः प्रसारदेशः दक्षिणभारतेऽस्ति। आंशिकरूपेण महाराष्ट्रप्रदेशीयाः समग्ररूपेण च अन्ध्रद्रविडदेशीयाः अस्याः शाखायाः अनुयायिनः सन्ति। अस्याः संहितायाः स्वकीयाः ब्राह्मण-आरण्यक-उपनिषत्-श्रौतसूत्र-गृह्यसूत्रप्रभृतयः अक्षुण्णाः सन्ति। तैत्तिरीयसंहितायाः परिमाणमपि न्यूनं नास्ति। आचार्यसायणस्य इयं स्वकीया शाखासीत्। शुक्लयजुर्वेदे वर्णितविषयाः इव अस्याः विषयाः सन्ति। पौरोडाश-याजमान-वाजपेय-राजसूयप्रभृतिनानायागानुष्ठानानां विशदं वर्णनम् अत्राप्यस्ति। यज्ञस्य मुख्यस्वरूपस्य निष्पादकत्वेन अस्याः संहितायाः विद्वत्तापूर्णभाष्यं सर्वप्रथमम् आचार्यसायणेन रचितम्। किञ्च तस्मादपि पूर्वतरं भाष्यं भट्टभास्करमिश्रस्य (एकादशशताब्द्याः) समुपलब्धं भवति। ज्ञानयज्ञनाम्ना भाष्यमिदं विख्यातमस्ति। प्रामाणिकदृष्ट्या विद्वत्तादृष्ट्या वा कस्मादपि भाष्याद् हीनतरमिदं भाष्यं नास्ति। अधियज्ञार्थाद् अतिरिक्तः आध्यात्मिकाधिदैविकपक्षयोरपि मन्त्राणामर्थो यत्र तत्र कृतोऽस्ति।

## ३.४.२) मैत्रायणीसंहिता

कृष्णयजुर्वेदस्य अन्यतमा शाखा मैत्रायणी। इयं च संहिता गद्यपद्यात्मिकाऽस्ति। अस्यां संहितायां चत्वारः काण्डाः सन्ति। प्रथमकाण्डः एकादशप्रपाठकेषु विभक्तोऽस्ति। येषु क्रमशः दर्शपूर्णमास-अध्वर-आधान-पुनराधान-चातुर्मास्य वाजपेयप्रभृतीनां यज्ञानां वर्णनमस्ति। द्वितीयः काण्डः त्रयोदशप्रपाठकेषु विभक्तः अस्ति। एतेषु प्रपाठकेषु काम्य-इष्टि-राजसूय-अग्निचितिप्रभृतीनां विस्तृतं विवरणमस्ति। तृतीयकाण्डे षोडशप्रपाठकाः सन्ति। येषु अग्निचिति-अध्वरविधि-सौत्रामणी-अश्वमेधादीनां विस्तृतं वर्णनमस्ति। चतुर्थकाण्डः खिलकाण्डनाम्ना विख्यातोऽस्ति। एतेषु पूर्वनिर्दिष्टराजसूयादियज्ञानां विषये आवश्यकवस्तूनां सुमहान् सङ्ग्रहो वर्तते। समग्रसंहितायां २१४४ मन्त्राः सन्ति, येषु १७०१ ऋचः प्रतिकाण्डम् ऋग्वेदात् समुद्धृताः सन्ति। एते सर्वेऽपि मन्त्राः ऋग्वेदस्य विभिन्नमण्डलेषु समुपलब्धाः भवन्ति।

## ३.४.३) कठसंहिता

यजुर्वेदस्य सप्तविंशतिशाखासु कठशाखा अन्यतमा। पुराणेषु काठकजनाः मध्यप्रदेशीयनाम्ना माध्यमनाम्ना वा विख्याताः आसन्। अनेन ज्ञायते यत् ते प्राचीनकाले मध्यप्रदेशे वसन्ति स्म। पतञ्जलेः कथानुसारं कठसंहितायाः प्रसारः तथा पठन-पाठनं प्रतिग्रामम् आसीत् ('ग्रामे ग्रामे काठकं कालापकं च प्रोच्यते'- महाभाष्यम् ४/३/१०१)। अनेन अस्याः संहितायाः प्राचीनकाले विपुलप्रचारस्य बोधो भवति। अधुना अस्याः अध्येतॄणां संख्या अतीव अल्पा।

कठसंहितायां पञ्च खण्डाः सन्ति। ते च क्रमशः इठिमिका-माध्यमिका-ओरमिका-याज्यानुवाक्या-अश्वमेधाद्यनुवचननामभिः ख्याताः सन्ति। एतेषां खण्डानाम् अंशस्य नाम स्थानकमस्ति। एतानि नामानि वैदिकसाहित्येऽन्यत्र दुर्लभानि सन्ति। अस्यां संहितायां स्थानकस्य



संख्या चत्वारिंशत्, अनुवचनानां संख्या त्रयोदश, अनुवाकानां संख्या त्रयश्चत्वारिंशदधिकाष्टशतम्, मन्त्राणां संख्या एकनवत्यधिकत्रिसहस्रम्, मन्त्रब्राह्मणयोः सम्मिलिता संख्या अष्टादशसहस्रपरिमिता।

इठिमिकायाः अष्टादशस्थानकेषु पुरोडाश-अध्वर-पशुबन्ध-वाजपेय-राजसूयादियागानां विस्तृतं वर्णनमस्ति। माध्यमिकायाः द्वादशस्थानकेषु सावित्री-पञ्चचूड-स्वर्ग-दीक्षित-आयुष्यादीनां विवेचनमस्ति। ओरिमिकायाः दशस्थानकेषु पुरोडाशब्राह्मण-यजमानब्राह्मण-सत्रप्रायश्चित्ति-चातुर्मास्य-सव-सौत्रामण्यादीनां वर्णनमस्ति। अन्तिमे काण्डे त्रयोदशानुवचनानि सन्ति। अत्र दर्शपौर्णमास-अग्निष्टोम-अग्निहोत्र-आधान-काम्येष्टि-निरूढपशुबन्ध-वाजपेय-राजसूय-अग्निचयन-चातुर्मास्य-सौत्रामणी-अश्वमेधादियज्ञानां विशिष्टविधानपुरस्सरम् वर्णना अस्ति। कृष्णयजुर्वदेस्य चतसृषु संहितासु न केवलं स्वरूपतः एकरूपताऽस्ति प्रत्युत तासु वर्णितानुष्ठानेषु तथा तन्निष्पादकमन्त्रेष्वपि साम्यं वर्त्तते।

## ३.४.४) कापिष्ठलसंहिता

चरणव्यूहस्य मतानुसारेण चरकशाखान्तर्गते कठानां, प्राच्यकठानां कपिष्ठलकठानाञ्च उल्लेखः प्राप्यते, येन उल्लेखेन शाखासम्बद्धस्य अस्य पूर्णपरिचयो भवति। कपिष्ठलः कस्यचित् ऋषिविशेषस्य नाम आसीत्। अस्य उल्लेखम् महावैयाकरणपाणिनिमहर्षिः 'कपिष्ठलो गोत्रे' (८/३/९१) इत्येतस्मिन् सूत्रे कृतवान्। भाष्यकारेण दुर्गाचार्येणापि स्वात्मानं 'कपिष्ठलो वाशिष्ठः' इति उक्तम् ("अहञ्च कापिष्ठलो वाशिष्ठः" निरुक्तटीका ४/४)। प्रायः कस्यचित् स्थानविशेषस्य इदम् अभिधानम् आसीत्। अस्याः संहितायाः सम्पादकेन अनुमीयते यत्- कपिष्ठलग्रामस्य प्रतिनिधिः 'कैथल' इत्याख्यो ग्राम एवासीत्। ग्रामोऽयं कुरुक्षेत्रे सरस्वतीनद्याः पूर्वस्यां दिशि अवस्थितः आसीत्। अस्य ग्रामस्योल्लेखः काशिकायां तथा वराहमिहिरेण रचितायाम् बृहत्संहितायां (१४/४) प्राप्यते।

काठकसंहितातः अनेकविधं वैभिन्यं पार्थक्यञ्च अस्यां कापिष्ठलसंहितायां परिलक्ष्यते। काठकसंहितावत् मूलग्रन्थस्य समानत्वेऽपि अस्याः स्वराङ्कनपद्धतिः ऋग्वेदसदृशी। ऋग्वेद इव ग्रन्थोऽयम् अष्टकेषु अध्यायेषु च विभक्तोऽस्ति। एवम् कापिष्ठलसंहितायाम् ऋग्वेदस्यैव महान् प्रभावः परिलक्ष्यते। ग्रन्थोऽयम् अपूर्णः एवास्ति। ग्रन्थेऽस्मिन् निम्नलिखितानि अष्टकानि तथा तदन्तर्गता अध्यायाश्च सन्ति-

प्रथममष्टकम्- सम्पूर्णम्, अष्टाध्याययुतश्च।

द्वितीयमष्टकम्,+तृतीयमष्टकम्- नवमाध्यायादारभ्य चतुर्विंशति-अध्यायपर्यन्तं द्वितीयतृतीय-अष्टकद्वयम्।

चतुर्थमष्टकम्- द्वात्रिंशदध्यायं विहाय पञ्चविंशत्यध्यायादारभ्य एकत्रिंशदध्यायपर्यन्तं सर्वेऽपि अध्यायाः समुपलब्धाः सन्ति।

पञ्चममष्टकम्- त्रयस्त्रिंशदध्यायं विना द्वात्रिंशदध्यायादरभ्य अन्ये सप्त अध्यायाः समुपलब्धाः।

षष्ठमष्टकम्- त्रयश्चत्वारिंशदध्यायं विना सर्वेऽप्यध्यायाः समुपलब्धाः। अष्टचत्वारिंशदध्याये ग्रन्थोऽयं सम्पूर्णो भवति। तुलनात्मकदृष्ट्या अपूर्णो ग्रन्थोऽयमतीव महत्त्वपूर्णमस्ति।





## पाठगतप्रश्नाः-२

७. शुक्लयजुर्वेदस्य कति शाखाः।

८. कृष्णयजुर्वेदस्य कति शाखाः प्राप्यन्ते।

९. माध्यन्दिनशाखा कुत्र लभ्यते।

१०. काण्वशाखा कुत्र प्राप्यते।

११. मैत्रायणीसंहितायां कति काण्डाः सन्ति।

## ३.५) अथ सामसंहितासाहित्यम्

चतसृष्वपि संहितासु सामसंहिता परमगौरवशालिनी वर्त्तते। 'सामानि यो वेत्ति स वेद तत्त्वम्' इत्येषा बृहद्देवतायाः उक्तिः तन्महिमानम् उच्चैः गायति। गीतायां भगवान् श्रीकृष्णः आह- 'वेदानां सामवेदोऽस्मि' इति। गानपूर्वकम् उपासनं वेदस्य अस्य उद्देश्यमस्ति। साम्प्रतम् अस्य गरीयसो वेदस्य त्रिस्रः एव शाखाः उपलभ्यन्ते। ताश्च यथाक्रमं कौथुमीया, राणायनीया, जैमिनीया च।

ऋग्वेदे अथर्ववेदे च सामवेदस्य प्रशस्ता प्रशंसा लभ्यते। ऋग्वेदे एकस्मिन् मन्त्रे खग-कुल-कलरव इव सामगायनं मधुरं भवति इति प्रोक्तम्- 'उद्गातेव शकुने साम गायसि' इति (ऋ.२/४३/२)। अथर्ववेदे वेदानां स्वरूपविषये एकत्र आम्नातं यत् जगतः नियन्तुः परमेश्वरस्य मुखस्वरूपः अस्ति अथर्ववेदः, त्वचः लोमस्वरूपः अस्ति सामवेदः, हृदयस्वरूपः अस्ति यजुर्वेदः, किञ्च प्राणस्वरूपः अस्ति ऋग्वेदः इति। तथाहि आम्नातम्-

**"यस्मादृचो अपातक्षन् यजुर्यस्मादपाकषन्।**

**सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखं स्कम्भं तं ब्रूहि कतमः स्विदेव सः" इति। (अथर्ववेदः. १०/७/२०)।**

अन्यस्मिन् मन्त्रे ऋग्वेदेन सह सामवेदस्याऽपि आविर्भावः उच्छिष्टादेव प्रदर्शितोऽस्ति- **'ऋचः सामानि छन्दांसि.........उच्छिष्टास्तु यज्ञिरे सर्वे' (अथ.वे. ११/७/२४)।** इतरस्मिन् मन्त्रे कर्मणः साधनभूतस्य ऋग्वेदस्य सामवेदस्य च स्तुतेः विधानमस्ति- 'ऋचं साम यजामहे यासां कर्माणि कुर्वते' (अ.वे. ७/५४/१)। एतदतिरिक्तम् सामवेदस्य विभिन्नम् अभिधानं प्राचीनवैदिकसाहित्ये समुपलब्धं भवति, येनास्य सामवेदस्य प्राचीनता असन्दिग्धतया सिद्धा भवति। ऋग्वेदे वैरूप-बृहत्-रैवत-गायत्र-भद्रादीनां साम्नाम् अभिधानम् उपलभ्यते। यजुर्वेदे रथन्तर-वैखानस-वामदेव्य-शाक्वर-रैवत-अभीवर्त्तादीनाम् उल्लेखः प्राप्यते। ऐतरेयब्राह्मणे नौधस-रौरय-यौधाजय-अग्निष्टोमीयप्रभृतीनां विशिष्टसाम्नाम् अभिधानस्य निर्देशः लभ्यते। अनेन इदं प्रतीतं भवति यत् सामगायनं प्राचीनकालादेव समायाति। ऋग्वेदस्यापि समये एतेषां विशिष्टगायनानाम् अस्तित्वं स्पष्टरूपेण सिद्धं भवति।

## ३.६) सामशब्दार्थः

ऋङ्मन्त्रसम्बद्धं गानमेव वस्तुतः सामशब्दस्य वाच्यम् अस्ति। सामसंहितायाः सङ्कलनम् उद्गातृनाम्ना ऋत्विजा कृतमस्ति। उद्गाता एव देवतास्तुतिपरकमन्त्रान् आवश्यकतानुसारं विविधस्वरैः गायति। अतः साम्नाम् आधारभूताः ऋङ्मन्त्राः एव भवन्ति इति निश्चितं भवति (ऋचि अध्यूढं साम- छा. उ. १/६/१)। अत्र च ऋक्साम्नोः प्रगाढमिदं पारस्परिकसम्बन्धं सूचयितुम् उभयोः मध्ये दाम्पत्यभावस्यापि कल्पना वर्तते। पतिः सन्तानोत्पादनाय पत्न्याः आह्वानं कुर्वन् कथयति- सामरूपोऽहं पतिरस्मि त्वञ्च ऋग्रूपा पत्नी असि। अहमाकाशोऽस्मि त्वञ्च पृथिवी असि। अतः आगच्छ।आवाम् मिलित्वा प्रजानामुत्पादनं कुर्वः **'अमोऽहमस्मि सा त्वम्, सामाहमस्मि ऋक् त्वम्, द्यौरहं पृथिवी त्वम्, ताविह सम्भवावा प्रजानामजनयावहै'** (बृह. उ. ६/५/२०; अ. वे. १४/२/७ ऐ.ब्रा. ८/२७)। सामशब्दस्य एका अतीव सुष्ठुः निरुक्तिः बृहदारण्यकोपनिषदि वर्त्तते- **'सा च अमश्चोति तत्साम्नः सामत्वम्'** (बृह.उ. १/३/२२)। 'सा' इति शब्दस्य अर्थो भवति ऋक् तथा 'अम' इति शब्दस्य अर्थः गान्धारादयः स्वराः। अतः सामशब्दस्य व्युत्पत्तिलभ्यार्थः भवति ऋक्सम्बद्धस्वरप्रधानगयानम्। तथाहि- 'तया सह सम्बन्धः अमो नाम स्वरः यत्र वर्त्तते तत्साम' इति। यासाम् ऋचाम् उपरि सामगानं भवति ता ऋचः वेदज्ञाः 'सामयोनि'नाम्ना जानन्ति। अत्र स्मरणीयमस्ति यत् इदं सामसंहितायाः वर्णनमस्ति। इदं तासां साम-ऋचां सङ्ग्रहमात्रमेवास्ति अर्थात् सामसंहितायां केवलं सामोपयोगिनां मन्त्राणां सङ्कलनमेवास्ति, तेषां गायनानां नास्ति यत्सामवेदस्य मुख्यं वाच्यमस्ति।

## ३.७) विषयविवेचनम्

सामवेदस्य द्वौ प्रधानौ भागौ स्तः- आर्चिकः गानम् चेति। आर्चिकशब्दार्थः ऋक्-समूहः। सोऽपि द्वेधा विभज्यते- पूर्वाचिकम् उत्तरार्चिकम् चेति। पूर्वार्चिकमेव छन्दः, छन्दसी, छन्दसिका चेति त्रिभिरपि नामभिः अभिधीयते। विषयानुसारं पूर्वार्चिकम् चतुर्षु भागेषु विभज्यते- आग्नेयपर्व (अग्निसम्बन्धिनीभिः ऋग्भिः उपेतम्), ऐन्द्रपर्व (इन्द्रसम्बन्धिनीभिः ऋग्भिः युतम्), पवमानपर्व (सोमविषयकम्), आरण्यकम् चेति। पूर्वार्चिके षट् प्रपाठकाः अथवा अध्यायाः सन्ति। प्रतिप्रपाठकम् द्वौ अर्द्धौ खण्डौ वा स्तः, तथा प्रत्येकम् खण्डे पुनः 'दशति'नामकाः अंशाः विद्यन्ते। प्रत्येकं दशतिनामकखण्डे कतिपयाः ऋचः सन्ति। प्रथमाध्यायात् आरभ्य पञ्चमाध्यायपर्यन्तस्य ऋचस्तु 'सामगान'नाम्ना ख्याताः सन्ति, किञ्च षष्ठाध्यायस्य ऋचः अरण्ये एव गीयन्ते। अतोऽत्र आसाम् ऋचाम् एकत्र सङ्ग्रहोऽस्ति। अस्य अन्ते परिशिष्टरूपेण 'महानाम्नी' इत्याख्याः दश ऋचः सन्ति। अनेन प्रकारेण पूर्वार्चिके मन्त्राणां संख्या पञ्चाशदधिकषट्शतम् (६५०) अस्ति।

उत्तरार्चिकं तु अनुष्ठाननिर्देशकम्। तस्य बहवो विभागाः। दशरात्रम्, संवत्सरम्, ऐकाहम्, अहीनम्, सत्रम्, प्रायश्चित्तम्, क्षुद्रम् चेति प्रमुखाः तत्र भेदाः सन्ति। अस्मिन् उत्तरार्चिके नव प्रपाठकाः सन्ति। प्रथमपञ्चप्रपाठकेषु प्रत्येकम् प्रपाठके द्वौ भागौ स्तः, यौ प्रपाठकार्द्धनाम्ना ख्यातौ स्तः। किञ्च अन्तिमचतुर्षु प्रपाठकेषु प्रत्येकम् प्रपाठके भागत्रयम् अस्ति। अयम् भेदः राणायनीयशाखानुसारम्।



उत्तरार्चिकस्य समग्रमन्त्राणां संख्या (१२२५) पञ्चविंशत्यधिकद्वादशशतमस्ति। अतः उभयोः आर्चिकयोः मेलनेन मन्त्राणां संख्या (१८७५) पञ्चसप्तत्यधिकाष्टादशशतमस्ति।



## पाठगतप्रश्नाः-३

१२. बृहद्देवतायां सामविषये किमुच्यते।

१३. श्रीकृष्णेन साममहिमानं कथं कीर्त्यते।

१४. साम्नः किमुद्देश्यम्।

१५. साम्नः कति शाखाः। के च ते।

१६. कस्मिन् मन्त्रे कर्मणः साधनभूतस्य ऋग्वेदस्य सामवेदस्य च स्तुतिर्विहिता।

१७. ऋग्वेदे केषां साम्नाम् अभिधानं प्राप्यते।

१८. ऋक्साम्नोः का तुलना।

१९. सामयोनिः कः।

२०. आर्चिकस्य शाब्दिकार्थः कः।

२१. पूर्वार्चिकं कैः नामभिः व्यवह्रियते।

२२. पवमानपर्व किंविषयकम्।

## ३.८) सामवेदशाखा

भागवत-विष्णु-वाय्वादिपुराणमतानुसारं वेदव्यासमहोदयः स्वशिष्याय जैमिनये सामवेदस्य शिक्षाम् अदात्। कविः जैमिनिः एव सामवेदस्य आद्याचार्यरूपेण सर्वत्र प्रसिद्धोऽस्ति। जैमिनिः स्वपुत्रं सुमन्तुम्, सुमन्तुः स्वात्मजं सुन्वान्तम्, सुन्वान् स्वसूनुं सुकर्माणं सामवेदसंहितायाः अध्ययनं कारितवान्। अस्याः संहितायाः विपुलप्रसाराय वेदाचार्यस्य सुकर्मणः महत् योगदानम् अस्ति। अस्य द्वौ पट्टशिष्यौ आस्ताम्- हिरण्यनाभकौशल्यः, पौष्यञ्जिः चेति, याभ्यां सामवेदस्य द्विविधा धारा प्रस्फुटिताऽभवत्। प्राच्या उदीच्या चेति। प्रश्नोपनिषदि (६/१) हिरण्यनाभः कौशलदेशीयराजपुत्ररूपेण चित्रितोऽस्ति। भागवतपुराणे (१२/६/७८) सामगानां परम्पराद्वयस्य उल्लेखः अस्ति- प्राच्यसामगाः उदीच्यसामगाः चेति। भौगोलिकभिन्नत्वेनैवात्र नामकरणस्य भिन्नताऽस्ति। हिरण्यनाभस्य शिष्यस्य नाम आसीत् कृतः इति। सः पौरववंशीयः राज्ञः सन्नतिमान्-महोदयस्य पुत्रः आसीत्। तेन सामसंहितायाः स्वशिष्यैः चतुर्विंशतिप्रकाराणाम् प्रवर्त्तनं कृतम्। अस्य वर्णनं मत्स्यपुराणे (४९/७५-७६), हरिवंशपुराणे (२०/४१-४४), विष्णुपुराणे (४/१९-५०), वायुपुराणे (४१/४४), ब्रह्माण्डपुराणे (३५/४९-५०) तथा भागवतपुराणे (१२६/८०) सामान्यरूपेण लभ्यते। वायुपुराणे ब्रह्माण्डपुराणे च कृत-महोदयस्य

चतुर्विंशतिशिष्याणां नामानि अपि उपलभ्यन्ते। कृतमहोदयस्य अनुयायित्वेन सामाचार्याः कार्त्तनाम्ना प्रख्यााताः आसन्। यथा-

**"चतुर्विंशतिधा येन प्रोक्ता वै सामसंहिताः।**

**स्मृतास्ते सामगाः प्राच्याः कार्त्ता नाम्नेह सामगाः॥" इति॥**

अस्य कृतमहोदयस्य लोगाक्षि-माङ्गलि-कुल्य-कुसीद-कुक्षि-नाम्नाम् पञ्चशिष्याणाम् उल्लेखः श्रीमद्भागवते (१२/६/७९) प्राप्यते। पौराणिकानां मतानुसारेण सामवेदस्य सहस्रं शाखाः वर्त्तन्ते। अस्य समर्थनं पतञ्जलिनाऽपि कृतम्- 'सहस्रवर्त्मा सामवेदः' इति। मूलतो गानप्रधानोऽयं सामवेदः। जैमिनिगृह्यसूत्रादीनां (जै.गृ.१/१४) पर्यालोचनेन सामवेदस्य त्रयोदशशाखानाम् उल्लेखो लभ्यते। सामतर्पणस्य अवसरे एतेषाम् शाखानाम् आचार्याणां नामानि उच्चार्यन्ते। तथाहि 'राणायण-सात्यमुग्रि-व्यास-भागुरि-औलुण्डि-गौल्मुलवि-भानु-मानौपन्यव-काराटि-मशक-गार्ग्य-वार्षगण्यकौथुमि-शालिहोत्र-जैमिनि-त्रयोदशैतेमे सामगाचार्याः स्वस्ति कुर्वन्तु तर्पिताः।' सम्प्रति सामवेदस्य तिस्रः शाखाः उपलभ्यन्ते- कौथुमीया, राणायनीया, जैमिनीया चेति।

## ३.८.१) कौथुमीयशाखा

इयम् संहिता अतीव लोकप्रिया। अस्याः ताण्ड्यनामकशाखापि प्राप्यते। यस्याः विशिष्टः प्रभावः प्रसारश्च अतीतकाले आसीत्। आचार्यशङ्करः स्ववेदान्तभाष्यस्य अनेकस्थलेषु अस्य चर्चां कृतवान्। इयम् चर्चा अस्य गौरवस्य महत्त्वस्य च सूचिकास्ति। पञ्चविंशतिकाण्डात्मकः विपुलकायः ताण्ड्यब्राह्मणग्रन्थः अस्याः एव शाखायाः। सुप्रसिद्धा छान्दोग्योपनिषद् अपि अनया शाखया सह सम्बद्धा अस्ति इति भगवान् शङ्कराचार्यः स्वभाष्ये स्पष्टं लिखति। तथाहि "यथा ताण्डिनामुपनिषदि षष्ठे प्रपाठके स आत्मा" इति (शा. भा. ३/३/३६), "स आत्मा....छान्दोग्य उपनिषद्" इति (६८/७) तथा "अन्येऽपि शाखिनः ताण्डिनः शाट्यायिनः" इति (शा.भा. ३/४/२७)।

## ३.८.२) राणायनीयशाखा

इयम् संहिता कौथुमीयशाखातः कथञ्चिदपि भिन्ना नास्ति। मन्त्रगणनादृष्ट्या शाखाद्वयं प्रायः समानम्। केवलम् उच्चारणे यत्र कुत्रचित् पार्थक्यम् उपलभ्यते। कौथुमीयाः जनाः यत्र 'हाउ' तथा 'राइ' इत्येतत् पदम् उच्चारयन्ति तत्र राणायनीयजनाः 'हाबु' तथा 'रायी' इति उच्चारयन्ति। राणायनीयेषु सात्यमुग्रि इति एका अवान्तरशाखा वर्त्तते, यस्याः उच्चारणस्य विशेषता भाषाविज्ञानदृष्ट्या नितान्तम् आलोचनीया अस्ति। आपिशलीशिक्षाकृता तथा महाभाष्यकारेण च स्पष्टतया निर्देशितं यत् सात्यमुग्रिजनाः एकारस्य उकारस्य च स्थाने ह्रस्वोच्चारणं कुर्वन्ति। तथाहि उक्तम्-

"छन्दोगानां सात्यमुग्रिराणायनीया ह्रस्वानि पठन्ति।" इति। (आपिशलीशिक्षा)

"ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारं.......अर्धमोकारं च अधीयते। सुजाते ए अश्वसूनृते। अध्वर्वो ओ अद्रिभिः सुतम्" (महाभाष्यम्-१/१/४/४८)।



### ३.८.३) जैमिनीयशाखा

अस्याः शाखायाः समग्रांशाः ब्राह्मण-श्रौत-गृह्यसूत्रसंहिताः समुपलब्धाः सन्ति। जैमिनीयसंहिता देवनागरीलिप्यां लाहौरनगरात् प्रकाशिताभवत्। अस्याः मन्त्राणां संख्या १६८७ वर्त्तते। तवलकारशाखा अस्या एव अवान्तरशाखा वर्त्तते। तवलकारोऽयं जैमिनिमहोदयस्य पट्टशिष्यः आसीत्। सामगानमिदं पूर्वार्चिकेन सम्बद्धम् अस्ति। अस्य त्रयो भागाः सन्ति- आग्नेयः, ऐन्द्रः, पवमानः चेति। एतेषु आदिमस्य अन्तिमस्य च पर्वणः विशेषविभागो नास्ति, किञ्च ऐन्द्रपर्वणः चत्वारो भागाः सन्ति। सम्पूर्णग्रन्थे गानसंख्या १२२४ वर्त्तते। कौथुमीयसामसंहितातः जैमिनीयसामसंहितायाः पाठे सर्वथा भेदो नास्ति, किन्तु गानप्रकारः सर्वथा भिन्नः एवास्ति। अद्यावधि अस्याः शाखायाः केवलं प्रथमभागः एव प्रकाशितोऽस्ति। द्वितीयभागस्य तु हस्तलेखमात्रम् अस्ति।



## पाठगतप्रश्नाः-४

२३. सामवेदस्य शिक्षा कः कस्मै अददात्।

२४. जैमिनेः पुत्रः कः।

२५. प्रश्नोपनिषदि कौशलदेशीयराजपुत्ररूपेण कः चित्रितोऽस्ति।

२६. कृतमहोदयस्य कति शिष्याः।

२७. राणायणीयेषु एका अवान्तरशाखा काः।

२८. एकारस्योकारस्य च स्थाने ह्रस्वोच्चारणं के कुर्वन्ति।

---

## ३.९) सामगानसामान्यपरिचयः

एतान् सामयोनिमन्त्रान् आश्रित्य ऋषिभिः गान-मन्त्राणां रचना कृताऽस्ति। गानन्तु चतुर्धा भवति - १) गेयगानम् (प्रकृतिगानम्) २) आरण्यकगानम् ३) ऊहगानम् ४) ऊह्यगानम् (रहस्यगानम्)। पूर्वार्चिकस्य प्रथमपञ्चमाध्यायगतमन्त्रान् आदाय गेयगानं भवति। आरण्यकपर्वणि निर्दिष्टमन्त्रान् आदाय आरण्यकगानं भवति। ऊहगानम् ऊह्यगानम् च उत्तरार्चिके उल्लिखितमन्त्रान् आदाय प्राधान्येन भवति। विभिन्नशाखायाम् एषां मन्त्राणां संख्यापि विभिन्ना भवति। सर्वाधिकगानानि जैमिनीयशाखायाम् एव उपलब्धानि।

| गानम् | कौथुमीयशाखा | जैमिनीयशाखा |
|---|---|---|
| गेयगानानि | ११९७ | १२३२ |



| | | |
|---|---|---|
| आरण्यकगानानि | २९४ | २९१ |
| ऊहगानानि | १०२६ | १८०२ |
| ऊह्यगानानि | २०५ | ३५६ |
| सर्वेषां सङ्कलनम् | २७२२ | ३६८७ |

भारतीयसङ्गीतशास्त्रस्य मूलम् एतत् सामगानम् एव अस्ति। सामगानपद्धत्या रहस्यज्ञानमपि अधुना तथैव दुरूहोऽस्ति यथा भारतीयसङ्गीतशास्त्रस्य ज्ञानरहस्यमस्ति। नारदीयशिक्षानुसारेण सामवेदस्य स्वरमण्डलानि इत्थं सन्ति-

| **सामानि** | **वेणवः (स्वराः)** |
|---|---|
| १.प्रथमः | मध्यमः। मा |
| २.द्वितीयः | गान्धारः। गा |
| ३.तृतीयः | ऋषभः। रे |
| ४.चतुर्थः | षड्जः। सा |
| ५.पञ्चमः | निषादः। नि |
| ६.षष्ठः | धैवतः। धा |
| ७.सप्तमः | पञ्चमः। पा |

सामगानेषु एते एव सप्ताङ्काः तत्तत्स्वराणां स्वरूपं सूचयन्ति। सामगानेषु सामयोनिमन्त्राणाम् परिवर्तने कृते सति अनेकविधानि सङ्गीतानुकूलपरिवर्त्तनानि भवन्ति। एतानि परिवर्त्तनानि च सामविकाराः कथ्यन्ते। सामविकारास्तु षट्संख्यकाः भवन्ति।

**१.विकारः**- शब्दस्य परिवर्त्तनम्। 'अग्नेः' इत्येतत्पदस्थाने 'आग्नायि' इति पदम्।

**२.विश्लेषणम्**- एकपदस्य पृथक्करणम्। यथा 'तये' इत्येतत्पदस्थाने 'तोयितीया २यि' इति।

**३.विकर्षणम्**- एकस्वरस्य दीर्घकालपर्यन्तं विभिन्नोच्चारणम्। यथा 'ये' इति पदस्य 'या २ ३ यि' इति उच्चारणम्।

**४.अभ्यासः**- कस्यापि पदस्य भृशम् उच्चारणम् (पौनःपुन्येन)। यथा- 'तोयायि' पदस्य वारद्वयमुच्चारणम्।

**५.विरामः**- सौकर्य्याय कस्यापि पदस्य मध्ये विरामः। यथा- 'गृणानि हव्यदातये' इत्यत्र हकारोपरि विरामः।



**६.स्तोमः**- 'औहोवा' 'हाउवा' इत्यादिगानानुकूलपदानि। एते विकाराः भाषाशास्त्रस्य दृष्ट्याऽपि नितान्तं मननीयाः सन्ति।

## ३.१०) सामविभागः

सामगानस्य पद्धतिः अतीव कठिना। तस्य यथार्थज्ञानाय सूक्ष्माध्ययनम् अपेक्षितम् अस्ति। सामान्यतया सामगानस्य पञ्च विभागाः भवन्ति।

**१) प्रस्तावः**- मन्त्रस्य प्रारम्भिकभागोऽयं भवति। 'हुँ'-शब्दात् अस्य प्रारम्भो भवति। प्रस्तोता (ऋत्विक्) अस्य गानं करोति।

**२) उद्गीथः**- साम्नः प्रधानः (ऋत्विक्) उद्गाता एनं गायति। अस्यारम्भः 'ऊँ'-शब्दात् भवति।

**३) प्रतीहारः**- प्रतीहारशब्दस्य अर्थः सङ्कलनकर्त्ता, प्रतिहर्त्तानामकः ऋत्विक् एनं गायति।

**४) उपद्रवः**- यत् उद्गाता गायति तदेव उपद्रवः।

**५) निधनः**- प्रस्तोता-उद्गाता-प्रतिहर्त्ता इत्येते त्रयो मिलित्वैव अस्य गानं कुर्वन्ति। उदाहरणार्थम् सामवेदस्य प्रथमोऽयं मन्त्रः-

'अग्न आयाहि वीतये गृणानो हव्यदातये। निहोता सत्सि वर्हिषि।' इति।

अस्य मन्त्रस्योपरि यस्य साम्नः गानं भविष्यति तस्य निम्नलिखितानि पञ्च अङ्गानि भवन्ति-

१) हुँ ओग्नाई (प्रस्तावः)।

२) ओम् आयाहि वीतये गृणानो हव्यदातये (उद्गीथः)।

३) नि होता सत्सि वर्हिषि ओम् (प्रतिहारः)। अस्य प्रतिहारस्याऽपि द्वौ भेदौ स्तः।

४) नि होता सत्सिव (उपद्रवः)।

५) र्हिषि ओम् (निधनः)।

अस्य साम्नः यदा त्रिवारम् गानं भवति तदा स स्तोमः कथ्यते। सामगायनाय कस्यचित् स्वरस्य विकारः परिवर्तनम् च करणीयम् भवति। यथा पूर्वमन्त्रस्य 'अग्न' इति पदस्य गायने परिवर्त्तितरूपं- 'ओग्नाई' इति भवति। गायने स्वरपूर्त्यर्थं यदा कदापि निरर्थकं पदं सङ्कलितं भवति। यथा- औ, हौ, वा, हा इत्यादि। एतेः स्तोमाः भवन्ति। छान्दोग्योपनिषदनुसारेण सप्तविधं साम भवति। यथा- १) हिङ्कारः, २) प्रस्तावः, ३) आदिः, ३) उद्गीथः, ४) प्रतिहारः, ६) उपद्रवः, ७) निधनः चेति। उपरि निर्दिष्टानां पञ्चविधसाम्नाम् अवान्तरभेदकरणेन सप्तविधसाम्नामुत्पत्तिर्भवति।





## पाठगतप्रश्नाः-५

२९. चतुर्विधं गानं किं किं।
३०. कः विकारः।
३१. किं विश्लेषणम्।
३२. किं विकर्षणम्।
३३. कः अभ्यासः।
३४. कः स्तोमः।
३५. कः प्रस्तावः।
३६. कः उपद्रवः।



## पाठसारः

अस्मिन् पाठे यजुर्वेदसामवेदसंहितासाहित्यम् आलोचितम्। शुक्लकृष्णभेदेन द्विविधोऽपि यजुर्वेदः अत्र आलोचितः। तयोः पुनः संहिताभेदोऽपि प्रदर्शितः। अत्र तावत् आदौ यजुर्वेदसंहितायाः सामान्येन परिचयं कारयित्वा काण्वसंहिता तैत्तिरीयसंहिता मैत्रायणीसंहिता कठसंहिता कापिष्ठलसंहिता च इत्येताः मुख्याः संहिताः अत्र विस्तरशः आलोचिताः। अनन्तरम् सामवेदसंहिता व्याख्याता। किञ्च सामशब्दार्थोऽपि प्रतिपादितः। तदनन्तरम् कौथुमीयशाखा राणायनीयशाखा जैमिनीयशाखा चेति तिस्रः सामवेदीयशाखाः व्याख्याताः। अन्ते च सामगानसामान्यपरिचयः सामविभागः च प्रदर्शितः।



## पाठान्तप्रश्नाः

१. काण्वसंहिताविषये टिप्पणी लेख्या।
२. तैत्तिरीयसंहिताविषये लघुप्रबन्धो लेख्यः।
३. मैत्रायणीसंहिताविषये टिप्पणी लेख्या।
४. कापिष्ठलसंहिताविषये लघुप्रबन्धो लेख्यः।
५. सामशब्दार्थः विस्तरशः लेख्यः।
६. कौथुमीयशाखाविषये टिप्पणी लेख्या।
७. राणायनीयशाखाविषये लघुप्रबन्धो लेख्यः।
८. जैमिनीयशाखाविषये टिप्पणी लेख्या।





## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. यजुः।

२. द्विविधः।

३. १) ब्रह्मसम्प्रदायः, २) आदित्यसम्प्रदायः चेति द्वौ सम्प्रदायौ।

४. मन्त्रब्राह्मणयोर्भागस्य एकत्र मिश्रणमेव कृष्णयजुर्वेदस्य कृष्णत्वस्य कारणमस्ति।

५. चत्वारिंशत्।

६. द्वाविंशत्यध्यायाद् आरभ्य पञ्चविंशत्यध्यायपर्यन्तम् अश्वमेधयज्ञस्य विशिष्टमन्त्राणां निर्देशोऽस्ति।

### उत्तराणि-२

७. शुक्लयजुर्वेदस्य माध्यन्दिनशाखा, काण्वशाखा चेति द्वे शाखे।

८. उत्तरभारते प्राप्यते।

९. काण्वशाखा महाराष्ट्रे।

१०. कृष्णयजुर्वेदस्य सम्प्रति चतस्रः शाखाः प्राप्यन्ते।

११. चत्वारः काण्डाः सन्ति।

### उत्तराणि-३

१२. "सामानि यो वेत्ति स वेद तत्त्वम्" इति।

१३. "वेदानां सामवेदोऽस्मि" इति।

१४. गानपूर्वम् परमात्मोपासनम्।

१५. तिस्रः। कौथुमीया,

१६. राणायनीया, जैमिनीया च।

१७. "ऋचं साम यजामहे याभ्यां कर्माणि कृण्वते" इति (अथर्ववेदः ७/५४/१)।

१८. ऋग्वेदे वैरूप-बृहत्-रैवत-गायत्र-भद्रादीनां साम्नानाम् अभिधानं लभ्यते।

१९. सामरूपोऽहं पतिरस्मि त्वञ्च ऋग्रूपा पत्नी असि।

२०. यासामृचामुपरि सामगानं भवति ता ऋचः वेदज्ञाः 'सामयोनिः' नाम्ना अभिधीयते

२१. ऋक्समूहः।

२२. छन्दः, छन्दसी, छन्दसिका चेति।

२३. सोमविषयकम्।



**उत्तराणि-४**

२४. वेदव्यासमहोदयः स्वशिष्याय जैमिनये।

२५. सुमन्तुः।

२६. हिरण्यनाभः।

२७. २४।

२८. सात्यमुग्रिः।

२९. सात्यमुग्रिजनाः।

**उत्तराणि-५**

३०. १) गेयगानम् (प्रकृतिगानम्), २) आरण्यकगानम् ३) ऊहगानम्, ४) ऊह्यगानं (रहस्यगानम्)।

३१. शब्दस्य परिवर्त्तनम्। 'अग्नेः' इत्येतत्पदस्थाने 'आग्नायि' इति पदम्।

३२. एकपदस्य पृथक्करणम्। यथा 'तये' इत्येतत्पदस्थाने 'तोयितीया २यि' इति।

३३. एकस्वरस्य दीर्घकालपर्यन्तं विभिन्नोच्चारणम्। यथा 'ये' इति पदस्य 'या २ ३ यि' इत्युच्चारणम्।

३४. कस्यापि पदस्य भृशमुच्चारणम् (पौनःपुन्येन)। यथा- 'तोयारि' पदस्य द्विवारम् उच्चारणम्।

३५. सौकर्य्याय कस्यापि पदस्य मध्ये विरामः। यथा- 'गृणानि हव्यदातये' इत्यस्मिन् पदे हकारस्योपरि विरामः।

३६. मन्त्रस्य प्रारम्भिकभागः प्रस्तावः।

३७. यत् उद्गाता गायति तदेव उपद्रवः।

।।इति तृतीयः पाठः।।



४

# अथर्ववेदसंहितासाहित्यम्

## प्रस्तावना

भारतीयज्ञानगङ्गायाः स्रोतांसि वेदा एव सन्ति। एवंविधः अन्यो न कोऽपि दीप्ततुल्यः ग्रन्थः अस्ति यः स्वप्रभया न केवलं स्वयं भासितः अपि तु स्वस्य प्रभया समस्तभारतीयवाङ्मयम् एव प्रभासितवान्। 'विद्यन्ते धर्मादयः पुरुषार्था यैस्ते वेदाः' इति बह्वृक्प्रातिशाख्यम्। चतर्षु वेदेषु अथर्ववेदः अतीव अर्वाचीनः। ऋग्वेदस्य बहवः विषयाः अत्र पुनः आलोचिताः। ऋग्वेदादेव बहवः मन्त्राः अत्र यथास्वरूपम् अनुकृताः। अथर्ववेदे केवलं स्वस्य मन्त्राः यदन्येषु वेदेषु नोपलब्धाः-एतादृशाः मन्त्राः अतीव स्वल्पाः सन्ति। तत्र अथर्ववेदस्य संहितासाहित्यम् अतीव महत्त्वपूर्णं वर्तते। पूर्वस्मिन् पाठे ऋगादिवेदत्रयस्य संहिताविषये पूर्वपूर्वाध्याये भवन्तः भवत्यो वा ज्ञातवन्तः ज्ञातवत्यो वा। अस्मिन् अध्याये अथर्ववेदस्य संहिताविषये आलोचना प्रस्तूयते।



## उद्देश्यानि

इमं पाठं पठित्वा भवन्तः-

- अथर्ववेदस्य साहित्यविषये ज्ञास्यन्ति।
- अथर्ववेदरूपवृक्षस्य विविधासु दिक्षु प्रसृतानां शाखानां विषये ज्ञातुं शक्ष्यन्ति।
- अथर्ववेदस्य मूलप्रतिपाद्यविषयान् ज्ञास्यन्ति।
- स्त्री-राजादीनां वैदिककर्मविषये ज्ञास्यन्ति।

## ४.१) भूमिका

वेदेष्वथर्ववेदः महत् स्थानम् अधिकरोति। ऋद्वेदादित्रयो वेदाः आमुष्मिकफलदातारः सन्ति। किम्बहुना वेदेषु अथर्ववेदो बहुलविशिष्टतां निदधाति। यदा हि ऋग्वेदादयः त्रयो वेदा आमुष्मिकं फलं प्रददति तदाऽयं अथर्ववेद ऐहिकम् अपि फलं प्रयच्छति। जीवनं सुखसमन्वितं कर्त्तुं येषां साधनानाम् अपेक्षा भवति, तेषां सिद्ध्यर्थम् इह वेदे विविधानाम् अनुष्ठानानां विधानम् अस्ति। पतञ्जलिः यद्यपि अस्य वेदस्य नवशाखाः इति समुल्लिखति, तथापि इदानीं तु पैप्पलाद-शौनकसंज्ञके द्वे एव शाखे लभ्येते। अथर्वसंहितायाः शौनकशाखा पैप्पलादशाखा च अचिरेणैव मुद्रिते स्तः।



कस्यापि यज्ञस्य सम्पूर्णरूपेण निष्पादनार्थं चत्वारः ऋत्विजो भवन्ति। तेषु ब्रह्मा इति नामकः ऋत्विग् यज्ञस्य अध्यक्षो भवति। अस्य प्रधानकार्यं सर्वत्र कार्येषु सम्यक्तया निरीक्षणं तथा सम्भावितायाः त्रुट्याः मार्जनम् इति। एतदर्थं ब्रह्मणा सर्ववेदविदा भवितव्यम्। तेन मनसा बलेनाऽपि सम्पन्नेन भवितव्यम्। किञ्च तस्य ब्रह्मणः प्रधानभेदः अथर्ववेद एव भवति। ब्राह्मणग्रन्थेषु ब्रह्मणः महान् गौरवः अनेकत्र वर्णितः अस्ति। गोपथब्राह्मणस्य (३/२) कथनम् अस्ति यत् त्रिभिः वेदैः यज्ञस्यान्तरः पक्ष एव संस्क्रियते। ब्रह्मा मनसाऽन्यतरस्य पक्षस्य संस्कारं करोति। यथा-

**'स वा एष त्रिभिर्वेदैर्यज्ञस्यान्यन्तरः पक्षः संस्क्रियते।**

**मनसैव ब्रह्मा यज्ञस्यान्यतरं पक्षं संस्करोति।।' (गोप. ब्रा. ३/२)**

पुरोहितस्य अथर्ववेदस्य ज्ञानम् अपि आवश्यकं भवति, यदसौ राज्ञः शान्त्यास्तथा पौष्टककार्यस्य च सम्पादनं अथर्ववेदेन एव करोति। अथर्ववेदस्य परिशिष्टे लिखितम् अस्ति- यस्य राज्ञः जनपदे अथर्ववेदस्य ज्ञाता निवसति तस्य राष्ट्रे उपद्रवादिकं न तिष्ठति अपि च तद्राष्टं शीघ्रमेव वृद्धिम् अभिगच्छति इति।एवम् ऐहिक-आमुष्मिक-लौकिकानां पारलौकिकानां च विषयाणां प्रतिपादकत्वेन अथर्ववेदः वैदिकसंहितायां स्ववैशिष्ट्यं स्थापयति।

अथर्ववेदस्य उपलब्धेषु अनेकेषु अभिधानेषु अथर्ववेद-ब्रह्मवेद-अङ्गिरोवेद-अथर्वाङ्गिरसवेदादिनामानि मुख्यानि सन्ति। 'अथर्व'-शब्दस्य व्याख्या तथा तस्य निर्वचनं निरुक्ते तथा गोपथब्राह्मणे च प्राप्यते। 'र्थव'-धातुः कौटिल्यार्थकः तथा हिंसावाचकः अस्ति। अत एवाथर्वशब्दस्यार्थो भवति- अकुटिलवृत्त्या, अहिंसावृत्त्या च मनसः स्थैर्यस्य प्रापकः इति। अस्याः व्युत्पत्त्याः सम्पुष्टौ योगस्य प्रतिपादकाः अनेके प्रसङ्गाः अस्मिन्वेदे सन्ति। ब्रह्मकर्मणः प्रतिपादकत्वेन अथर्ववेदः 'ब्रह्मवेदः' इति कथ्यते। अथर्ववेदस्य ब्रह्मवेदनाम्नः इदम् एव मुख्यकारणम् अस्ति।

'अथर्वाङ्गिरस'-इति पदस्य व्याख्यया प्रतीतो भवति यद्वेदोऽयं ऋषिद्वयेन द्रष्टानां मन्त्राणां समूहं प्रस्तौति। अथर्वनामकेन ऋषिणा दृष्टाः मन्त्राः शान्ति-पुष्टिकर्मयुक्ताः सन्ति। अङ्गिरसेन च दृष्टाः मन्त्रास्तु आभिचारिका (मारण-मोहन-वशीकरणादि-सम्पादकाः) भवन्ति। एवं द्विविधमन्त्राणां सत्त्वाद् वायुपुराणे(६५।२७) तथा ब्रह्माण्डपुराणे(२।१।३६) अथर्ववेदः 'द्विशरीरशिराः' इति कथ्यते। अनेन अभिधानेन स्पष्टो भवति यद् अथर्ववेदे द्विविधा मन्त्राः सङ्गृहीताः सन्ति। शान्तिपौष्टककर्मप्रतिपादकाः मन्त्राः तथा आभिचारिककर्मप्रतिपादकाः मन्त्रः च। आङ्गिरसेन मारण-मोहन-स्तम्भन-विद्वेषण-वशीकरण-उच्चाटनानां प्रख्यातानां षट्कर्मणां विधानं विशदेन दर्शितम्, तथाहि नारदीयपुराणे उक्तम्-

**'तत्र चाङ्गिरसे कल्पे षट्कर्माणि सविस्तरम्।**

**अभिचारविधानेन निर्दिष्टानि स्वयम्भुवा।।'**

तैत्तिरीयब्राह्मणे (३/१२/९/१) 'अथर्वणामङ्गिरसां प्रतीची' इत्यस्मिन् पदे अथर्वाङ्गिरसोः मिलितस्वरूपं वर्णितम् अस्ति। सम्भवतः आभ्याम् ऋषिभ्यां दृष्टानां मन्त्रानां समूहः पृथक् सत्ताम् अपि धत्ते। अनया दृष्ट्या गोपथब्राह्मणस्य एकस्मिन्नेव प्रकरणे 'आथर्वणो वेदः सिद्ध्यति' इति 'आङ्गिरसो वेदोऽभवच्चे'ति च वाक्यं प्राप्यते (११/५ ११/१८)। शतपथब्राह्मणे अपि एतयोरुभयोरुल्लेखः प्राप्यते



(१३/४/३/२)। सर्वत्र बाहुल्येन अङ्गिरसाभिधानम् एव उपलभ्यते. तेन अस्यैव ऋषेः अभ्यर्हितत्वं अवगम्यते। एतस्माद् ज्ञायते यदस्मिन् वेदे प्रथमतः शान्तिपौष्टिक-मन्त्राणां सत्ता आसीत् तदनन्तरम् आभिचारिकमन्त्राणां सन्निवेशः अभवत्।

अथर्ववेदस्य बहुविधविचारेण ज्ञायते - यद् द्वयोः धारयोः मिश्रणस्य परिणतफलम् इदम् अस्ति। अनयोः एका धारा अस्ति अथर्वधारा अपरा च अस्ति अङ्गिरोधारा। अथर्व-ऋषिणा दृष्टाः मन्त्राः शान्तिपुष्टिकर्मभिः सह सम्बद्धाः सन्ति। अस्य सङ्केतः भागवतपुराणे अपि प्राप्यते - 'अथर्वणेऽदात् शान्तिं यया यज्ञो वितन्यते' इति (३/२४/२४)। अङ्गिरोधारा आभिचारिकैः कर्मभिः सह सम्बद्धाऽस्ति। येन जनेषु अयं वेदः प्रियः अभवत्। शान्तिकर्मणा सम्बद्धत्वेन अथर्वस्य सम्बन्धः श्रौतयागस्य प्रारम्भादेव अस्ति, पश्चाद् आभिचारिककर्मणा सह तस्य सम्बन्धवशात् राज्ञः पुरोहितवर्गेभ्यो वेदः अयम् अतीव उपयोगी अभवत्। ऋग्यजुस्सामभ्यः अथर्वस्य पार्थक्यं स्पष्टतः ग्रन्थेषु प्राप्यते।

वेदत्रयी यत्र अलौकिकफलदाता अस्ति तत्र अथर्ववेदः लौकिकफलदाता अस्ति। अस्मिन् सन्दर्भे ध्यातव्यम् इदम् अस्ति यत्- जयन्तभट्टेण न्यायमञ्जर्याम् अथर्ववेदस्य एव प्राथमिकत्वम् उद्घोषितम् - "तत्र वेदाश्चत्वारः, प्रथमोऽथर्ववेदः" इति। नागरखण्डः अपि इमम् आद्यवेद इति वदति किञ्च प्रमापयति अपि यद् अथर्ववेद एव सार्वेषां लौकिकानां कार्याणां सिद्ध्यर्थं मुख्यरूपेण प्रयुक्तो भवति। अत एव अयं आद्यवेदः इति प्रथितः, जयन्तभट्टस्तु न्यायमञ्जर्याम् अस्मिन् विषये सविस्तरं विचारं कृतवान्।

राजकार्येषु अपि अथर्ववेदस्य सविशेषमहत्त्वम् अस्ति। राज्ञः कृते शान्तिकपौष्टककर्मणः तुलापुरुषादिदानस्य च महती आवश्यकता भवति। एवंविधानां कर्मणां विधानं प्राधान्येन अथर्ववेदे एव प्राप्यते। अस्मिन् विषये पुराण-स्मृत्यादिग्रन्थेषु बहूनि प्रमाणानि समुपलब्धानि भवन्ति। विष्णुपुराणस्य स्पष्टकथनम् अस्ति यत्- "पौरहित्य-शान्तिक-पौष्टिकादिकर्म इति अथर्ववेदाद् एव ज्ञायते" इति। मत्स्यपुराणस्य कथनम् अस्ति- पुरोहितः अथर्वमन्त्रे ब्राह्मणे च पारङ्गतः स्यात् इति। तथाहि "पुरोहितं तथा अथर्वमन्त्र-ब्राह्मण-पारगम्" इति। कालिदासस्य कथनेन अपि अस्य कथनस्य पुष्टिः भवति। कालिदासेन वशिष्ठमुनेः कृते 'अथर्वनिधिः' इत्येवं विशेषणं दत्तम्, यस्य इदं तात्पर्यम् अस्ति - रघुवंशोद्भवानां कुलपुरोहितः मुनिः वशिष्ठः अथर्वमन्त्राणां तथा तेषां क्रियाकलापानां च भाण्डारः आसीत् (रघु. १/५९)। नृपः अजः अथर्ववेदमन्त्रैः गुरुवशिष्ठेन अभिषिक्तो भूत्वा शत्रुभिः दुर्धर्षः अभवत्। अत्र कालिदासः वशिष्ठं 'अथर्ववेत्ता' इति कथयति। तथाहि रघुवंशे- 'स बभूव दुरासदः परैर्गुरुणाऽथर्वविदा कृतक्रियः'। इति। (८/४)। अथर्ववेदभाष्यभूमिकायां लिखितम् यत् अथर्ववेदस्य ज्ञाता शान्तिकर्मपारगः यस्मिन् राष्ट्रे निवसति तद्राष्ट्रं निरूपद्रवं भूत्वा सततं वर्द्धते इति। तथाहि-

**"यस्य राज्ञो जनपदे ह्यथर्वाशान्तिपारगाः।**
**निवसत्यपि तद्राष्ट्रं वर्धते निरुपद्रवम्।।**
**तस्माद्राजा विशेषेण ह्यथर्वाणं जितेन्द्रियम्।**
**दान-सम्मानसत्कारैर्नित्यं समभिपूजयेत्।।" इति।**



अतः एतत् कथयितुं शक्यते यद् राजपुरोहितानाम् अथर्ववेदस्य मन्त्राणां तथा तैः सम्बद्धानाम् अनुष्ठानानां ज्ञानम् अवश्यम् एव स्यात् इति। अनेन एव कारणेन अथर्ववेदः ऐहिलौकिकः इति कथ्यते, तथाऽन्ये त्रयो वेदाः पारलौकिकाः इति कथ्यन्ते।

## ४.२) अथर्ववेदस्य शाखा

पस्पशाह्निके "नवधाऽऽथर्वणो मतः" इति लिखित्वा पतञ्जलिना अथर्ववेदस्य नव शाखाः कथिताः। पुराणानुसारेण वेदव्यासमहोदयः यं शिष्यम् अथर्ववेदम् अध्यापितवान् तस्य नाम सुमन्तुः आसीत् (श्रीमद्भागवते १२/७/१-३, वायुपुराणे ६१/४९-५३, विष्णुपुराणे ३/६/९-१३)। भागवते अस्य महति चर्चा अस्ति यत् सुमन्तुः अभिचारप्रधानस्य अस्य वेदस्य मुख्यप्रचारकः आसीत्। तेन असौ 'दारुणमुनिः' इति उपाधिना विभूषितः आसीत्। अथर्ववेदस्य शाखानां विस्तारः पुराणेषु वर्णितः अस्ति। किञ्च भागवते (१२/७/१) स्कन्धस्य नाम निर्दिष्टं नास्ति। अस्मिन् पुराणे सुमन्तोः एव द्वौ शिष्यौ कथितौ पथ्यः देवदर्शः च। उभयोः मध्ये देवदर्श- इति नाम एव प्रामाणिकम् इति प्रतीतः भवति। यतः आथर्वण - महानारायणोपनिषद् स्वात्मानं देवदर्शी इति नाम्ना अथर्वशाखया सह सम्बन्धं स्वीकरोति। तस्मात् देवदर्शः उत देवदर्शी इति नाम एव उपयुक्तं भवति इति प्रतीयते। विष्णुपुराणानुसारेण पथ्यस्य त्रयाणां शिष्याणां नामानि क्रमशः जाबालिः कुमुदादिः तथा शौनकः इति आसीत्। प्रमाणान्तरानुसारेण पथ्यस्य त्रयः शिष्याः आसन् - जाजलिः कुमुदः शौनकः च। देवदर्शस्य चत्वारः शिष्याः आसन् - ब्रह्मवलिः पिप्पलादः शौष्कायणिः अथवा शौक्लायनिः च। एषु शिष्येषु शौनकस्य शिष्यः बभ्रुः तथा सैन्धवायनः इति कथितम्। एभिः मुनिभिः अथर्ववेदस्य विशेषप्रचारः सम्पन्नः अभवत्। प्रपञ्चहृदय-चरणव्यूह-सायणभाष्यादीनाम् उपोद्घातेषु यद्यपि शाखानां सङ्ख्या अभिन्ना तथापि एतेषु नामसु महती भिन्नता दृश्यते। एतेषां तुलनां कृते सति निम्नलिखितानि अभिधानानि भवन्ति - (१) पिप्पलादः, (२) स्तौदः, (३) मोदः, (४) शौनकीयः, (५) जाजलः, (६) जलदः, (७) ब्रह्मवदः, (८) देवदर्शः, (९) चारणवैद्यः च। आसु अथर्ववेदस्य नवशाखासु सम्प्रति शौनकप्पिलादसमाख्ये द्वे एव शाखे प्राप्येते।

### ४.२.१) पिप्पलादशाखा

पिप्पलादमुनिः एकः महान् अध्यात्मवेत्ता इति प्रतीतः भवति। स्वाध्यात्मविषयकानां संशयानां निवारणाय सुकेशा-भारद्वाजादीनां षण्णां मुनीनां तस्य पार्श्वे आगमनस्य उल्लेखः प्राप्यते। तेन दत्तानि उत्तराणि अपि प्रश्नोपनिषदि सुरक्षितानि सन्ति। पुरा अस्याः संहितायाः विशिष्टा ख्यातिः आसीत्। अस्याः द्वौ ग्रन्थौ आस्ताम्। प्रपञ्चहृदयस्य कथनम् अस्ति यत् - पिप्पलादशाखायाः मन्त्रसंहिता विंशतिकाण्डेषु विभक्ताः सन्ति, तथा तस्याः ब्राह्मणे अष्टौ अध्यायाः सन्ति। पिप्पलादसंहितायाः एका प्रतिलिपिः शारदालिप्यां कश्मीरे उपलब्धा अभवत्। सा पाण्डुलिपिः कश्मीरनृपतिना जर्मनविदुषे राथमहोदयाय उपहाररूपेण प्रेषिता आसीत्। एकाधिकोनविंशतितमे ख्रीष्टाब्दे तस्याः आलोकलेख्यम् अमेरिकातः प्रकाशितः अभवत्। महाभाष्यानुसारेण - 'शन्नो देवीरभीष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः' अथर्ववेदस्य प्रथमः अयं मन्त्रः अस्ति, किञ्च सम्प्रति प्रचलितायां शौनकसंहितायां



षष्ठसूक्तस्य अयं प्रथमः मन्त्रः अस्ति। गुणविष्णुना ज्ञातो भवति यद् अयं मन्त्रः पिप्पलादशाखायाः आदिमो मन्त्रः आसीत् ('शन्नो देवी............अथर्ववेदादिमन्त्रोऽयं पिप्पलाददृष्टः'- छान्दोग्यमन्त्रभाष्ये)। अनेन एव ज्ञातो भवति यद् महाभाष्यकाले अस्याः संहितायाः विशिष्टा ख्यातिः आसीद् इति।

### ४.२.२) मौदशाखा

महाभाष्ये (४/१/८६), शाबरभाष्ये (१/१/३०) अस्य मौदमुनेः उल्लखः प्राप्यते। मौद-शाखा-विशेषज्ञः अथवा जलदशाखाविशेषज्ञः पुरोहितः यस्मिन् राष्ट्रे निवसति, तस्य राष्ट्रस्य विनाशः भवति -

**'पुरोधा जलदो यस्य मौदो वा स्यात् कदाचन।**

**अब्दाद् दशभ्यो मामेभ्यो राष्ट्रभ्रष्टं भविष्यति।।'**

अनेन इयं शाखा अल्पप्रचलिता आसीद् इति बोधः भवति।

### ४.२.३) शौनकशाखा

सम्प्रति प्रचलिता अथर्वसंहिता गोपथब्राह्मणं च अस्या एव शाखायाः वर्त्तेते। तौद-जालज-ब्रह्मवद-देवदर्शादि-संहिताः तु नाममात्रेण एव ख्याताः सन्ति। अथर्वस्य अन्तिमा शाखा चारणवैद्यानां विषये इति कौशिकसूत्रे व्याख्यातम् अस्ति। वायुपुराणाद् ज्ञातः भवति यत् अस्यां शाखायां षड्विंशत्यधिकषट्सहस्रं (६०२६) मन्त्राः आसन्, किञ्च अद्यावधि इयं संहिता समुपलब्धा नास्ति इति।



## पाठगतप्रश्नाः-१

१. अथर्ववेदः आमुष्मिकेण सह अपरं किं फलं प्रयच्छति।
२. महर्षिपतञ्जलेः मते अथर्ववेदस्य कति शाखाः।
३. कस्यापि यज्ञस्य सम्पूर्णरूपेण निष्पादनार्थं कति ऋत्विजः भवन्ति।
४. ब्रह्मा- नामकस्य ऋत्विजः प्रधानकार्यं किम् अस्ति।
५. अथर्ववेदस्य विविधेषु अभिधानेषु कानि मुख्यानि।
६. सम्प्रति अथर्ववदेस्य कति शाखाः लभ्यन्ते।
७. ब्रह्मवेदः कः, कथञ्चोच्यते।
८. अथर्वशब्दस्य अर्थः कः।
९. पथ्यस्य त्रयः शिष्याः के आसन्।
१०. शौनकस्य शिष्याः के आसन्।



## ४.२.४) अथर्ववेदस्य विषयविवेचनम्

अथर्ववेदस्य विषयविवेचनम् अन्यवेदानाम् अपेक्षया नितान्तं निगूढं विलक्षणञ्च अस्ति। अस्मिन् वेदे वर्णितानां विषयाणां विभाजनं त्रिधा कर्तुं शक्यते- (१) आध्यात्मिकम्, (२) आधिभौतिकम्, (३) आधिदैविकञ्चेति। अध्यात्मप्रकरणे-मुख्यतः ब्रह्मजीवविषयकम्, परमात्मविषयकं च वर्णनम् अस्ति। तदनन्तरम् आश्रमाणाम् अपि पर्याप्तनिर्देशः प्राप्यते। आधिभूतप्रकरणे- राज-राज्यशासन-सङ्ग्रामादीनां च वर्णनम् अस्ति। आधिदैवतप्रकरणे- नानादेवतानां, विविधानां यज्ञानां, कालादीनां च विषये सङ्कलनम् अस्ति। एवंविधस्य स्थूलविवेचनस्य पश्चात् विस्तृतविवरणम् अस्ति। तद्यथा-

## ४.२.५) भैषज्यसूक्तानि

अस्मिन् प्रकरणे रोगाणां चिकित्सासम्बन्धिनां मन्त्राणां तथा विधिविशेषाणाम् अन्तर्भावो भवति। रोगाणाम् उत्पत्तिः अनेककष्टप्रदानां रक्षोभूतपिशाचादीनां उपद्रवेणैव भवति। अतः अस्य प्रकरणस्य अनेकमन्त्रेषु पूर्ववर्णितानाम् उपद्रवाणां शमनोपायः वर्णितः अस्ति। एतेषां मन्त्राणां साहाय्येन कृतानाम् अभिचाराणां विशेषवर्णनं कौशिकसूत्रेऽस्ति। विविधरोगाणां लक्षणं तथा तद्रोगेण समुत्पन्नानां शारीरिकविकाराणाम् आयुर्वैदिकदृष्ट्या विशदवर्णनञ्च अस्ति। अथर्ववेदे-'तक्माः' इति तु ज्वरस्य एव नाम अस्ति। अस्मिन् सन्दर्भेऽथर्ववेदस्य कथनम् अस्ति यद् ज्वरपीडिताः जनाः पीताः सन्तप्ताश्च भवन्ति। अतः कतिपयेषु मन्त्रेषु ज्वरनिमित्तकप्रार्थना वर्त्तते। यथा- हे ज्वर ! त्वं तिरोहितो भव, अथवा रोगार्त्तजनं विहाय मूजवत-वह्निक-महावृषादि-सुदूरस्थप्रान्ते गच्छ (५/२५/७/८)। बलासः(क्षयादिः) रोगः (६/१४), गण्डमाला (६/८३), यक्ष्मा (६/८५) प्रभृतीनां रोगाणां दूरीकरणाय वरुणनामकस्य ओषधेः सेवनस्य उपयोगः प्राप्यते। कासः (६/१०५) तथा दन्तपीडादिरोगाणां तथा तेषाम् ओषधीनां वर्णनम् अतीव उत्तमरीत्या अथर्ववेदेऽस्ति। सर्पविषनाशाय नानाविधाः उपायाः वर्णिताः सन्ति। एकस्मिन् सूक्ते (५/१३) असित-तैमात-आलिङ्गी-विलिङ्गी-उरु-गूलादिसर्पाणां नाम उल्लिखितम् अस्ति। बहुविधानाम् औषधीनां तथा नानावृक्षाणां प्रशंसायाम् अपि अनेके मन्त्राः अत्र सन्ति।

## ४.२.६) आयुष्यसूक्तानि

दीर्घायुषः कृते बहुविधाः प्रार्थनापरकमन्त्राः अस्मिन् विभागे सन्ति। एतेषां मन्त्राणां विशेषप्रयोगः पारिवारिकमहोत्सवानाम् अवसरे अभवत्। बालकानां मुण्डने, किशोराणां गोदाने (प्रथमक्षौरकर्मणि) तथा उपनयनसंस्कारे अस्य मन्त्रस्य उपयोगो भवति। अस्मिन् सूक्ते शतशरत्पर्यन्तं तथा शतहेमन्तपर्यन्तं जीवनाय, बहुविधमृत्युभ्यः त्राणाय, विविधरोगेभ्यः रक्षणाय च प्रार्थना समुपलब्धा भवति। अथर्ववेदे जीवनकालस्य वर्द्धनाय करे रक्षासूत्रधारणस्य विशेषविधानं प्राप्यते। अनेन रक्षासूत्रधारणेन प्राणिनः पूर्णस्वास्थ्यं लभन्ते इति ज्ञायते। सप्तदशकाण्डस्य एकमात्रं सूक्तम् अत्र अन्तर्भवति।



## ४.२.७) पौष्टिकसूक्तानि

अत्र गृहनिर्माणाय, सीरकर्षणाय, बीजवपनाय, अन्नोत्पादनाय, पुष्ट्यर्थाय, व्यापारहेतवे विदेशगमनाय नानाविधाशीर्वादाय च प्रार्थना कृताऽस्ति। अस्मिन् विषये सुष्ठुसूक्तम् (अथर्व. ४/१५) एकम् उदाहरणम्। अस्मिन् सूक्ते वृष्ट्याः अतीव रमणीयं, साहित्यिकं तथा समुज्ज्वलं वर्णनम् अस्ति।

## ४.२.८) प्रायश्चित्तसूक्तानि

एतेषु सूक्तेषु प्रायश्चित्तस्य विधानम् उपलब्धम् अस्ति। चारित्रिकत्रुटेः धार्मिकविरोधस्य तथा अन्यविधिहीनानाम् आचाराणां विधानम्- यथा- ज्ञातस्य अज्ञातस्य वा अपराधस्य हेतुना, धर्मशास्त्रेण वर्जितस्य विवाहस्य कारणेन, ऋणप्रतिशोधाभावहेतुना, ज्येष्ठं विना विवाहहेतुना च ये अपराधाः भवन्ति तेषां दूरीकरणाय अत्र प्रायश्चित्तस्य विधानम् अस्ति। एतत्सम्बन्धिनः एवंविधाः मन्त्राः सन्ति यैः शारीरिकदुर्बलता-मानसिकत्रुटि-दुःस्वप्न-अपशकुनादीनां निराकरणम् अपसरणञ्च भवति। वर्तमानयुगे इव तस्मिन्नपि युगे अशुभस्वप्ने मानवानां विश्वासः आसीत्। तद्दूरीकरणाय बहुविधाः उपायाः मन्त्रेषु वर्णिताः सन्ति।

## ४.२.९) स्त्रीकर्मविषयकसूक्तानि

विवाहविषयकाणि प्रेमविषयकाणि च बहूनि सूक्तानि अस्मिन् वेदे सन्ति। एतानि सूक्तानि तत्कालिकसमाजस्य स्वरूपज्ञाने विशेषरूपेण सहायकानि भवन्ति। एतेषु सूक्तेषु पुत्रोत्पादनाय सद्योजातशिशोः रक्षणाय च भव्यप्रार्थनाऽपि प्राप्यते। अस्मिन् प्रसङ्गे चतुर्दशकाण्डः विशेषरूपेण सम्बद्धः अस्ति। अनेन एव क्रमेण अथर्ववेदस्य मारण-मोहन-उच्चाटन-वशीकरणादीनां क्रियाणां बहुलप्रयोगाः वर्णिताः सन्ति। कौशिकसूक्ते नारीप्रेमसम्पादनाय बहुविधायाः आभिचारिकक्रियायाः वर्णनम् अस्ति।

## ४.२.१०) राजकर्मविषयकसूक्तानि

राजभिः सम्बद्धानि बहूनि सूक्तानि अथर्ववेदे समुपलब्धानि सन्ति। एतेषां सूक्तानाम् अध्ययनेन तात्कालिकराजनैतिक्याः स्थित्याः विशदचित्रणं समुपलब्धं भवति। शत्रूणां विनाशाय प्रार्थनया सह सङ्ग्रामस्य तथा तदुपयोगिनां साधनानां यथा- रथ-दुन्दुभि-शङ्खादीनां विशेषविविरणं साङ्ग्रामिकदृष्ट्या अपि अथर्ववेदस्य महत्तां सूचयति। अथर्ववेदस्य 'क्षत्रवेदः' इति नामकरणस्य इदम् एव कारणम् अस्ति। तस्मिन् युगे प्रजाः एव राज्ञः संवरणम् कृतवन्तः। अत्र मानवैः सह अश्विन्-मित्रावरुणादिद्वारेण राज्ञः संवरणस्य वर्णनम् अस्ति। अन्धसूक्ते (३/३) ज्ञातो भवति यद्देशात् निष्कासितो राजा पुनः राज्ये सम्मानपूर्वकेण प्रतिष्ठितः अभवत्। सङ्ग्रामभूमौ गमनाय वीरान् समुत्साहयितुं दुन्दुभेः वर्णनम् अतीव साहित्यिकं वीररसपूर्णञ्च अस्ति। पञ्चमकाण्डस्य दशमसूक्तं कवित्वदृष्ट्या, मनोहरभावानां प्रदर्शनेन च



अतीव रोचकं, सरसं तथा अभिव्यञ्जनात्मकञ्च अस्ति। दुन्दुभेः गर्जनं श्रुत्वा रिपुयुवत्याः भयानकास्त्रसङ्घर्षाणां मध्ये स्वपुत्रं नीत्वा पलायनस्य प्रार्थनाऽपि अतीव कारुणिका अस्ति। (अथर्व. ५/२०/५)।

##  पाठगतप्रश्नाः-२

११. अथर्ववेदे वर्णितानां विषयाणां के भेदाः।

१२. रोगाणाम् उत्पत्तिः कथं भवति।

१३. अथर्ववेदे तक्माः इति कस्य नाम ।

१४. जीवनकालस्य वर्धनाय कस्य विशेषविधानम् अस्ति।

१५. विवाहविषयकाणि प्रेमविषयकाणि च सूक्तानि कुत्र उपलभ्यन्ते।

१६. क्षत्रवेदः इति नाम्ना कथम् अथर्ववेदः प्रसिद्धः।

##  पाठसारः

वेदेष्वथर्ववेदः वेदान्तवत् महत् स्थानम् अधिकरोति। ऋग्वेदादित्रयो वेदाः आमुष्मिकफलदातारः सन्ति। विषेशतः अथर्ववेदे लौकिकविषयाणाम् एव चर्चा अधीकरूपेण प्राप्यते। अथर्ववेदस्य ब्रह्मवेद-अङ्गिरोवेद-अथर्वाङ्गिरसवेदादीनि नामानि अपि प्रसिद्धानि सन्ति। 'अथर्व'-शब्दस्य व्याख्या तथा तस्य निर्वचनं निरुक्ते (११/२/१७) तथा गोपथब्राह्मणे च (१/४) प्राप्यते। अस्य अथर्ववेदस्य विविधाः शाखाः उपलभ्यन्ते। तेषु प्रायेण सर्वत्र लौकिकानाम् एव विषयाणां वर्णनम् अस्ति।

अस्मिन् वेदे वर्णितानां विषयाणां विभाजनं त्रिधा कर्तुं शक्यते- (१) आध्यात्मिकम्, (२) आधिभौतिकम्, (३) आधिदैविकञ्चेति। तत्र च विविधेषु सूक्तेषु लौकिकविषयाणां राजकर्मादीनां विधानम् अस्ति। यथा- भैषज्यसूक्तेषु विविधानां रोगाणां वर्णनं तथा तेषां शमनाय विविधाः उपायाः वर्णिताः सन्ति। आयुष्यसूक्तेषु दीर्घायुषः कृते प्रार्थना विहिता। अत्र विहितानां सूक्तानां विशेषप्रयोगः पारिवारिकमहोत्सवानाम् अवसरे भवन्ति। किञ्च अत्र शतशरत्पर्यन्तं तथा शतहेमन्तपर्यन्तं जीवनाय प्रार्थनाः सन्ति। पौष्टिकसूक्तेषु गृहनिर्माणाय, सीरकर्षणाय, बीजवपनाय, अन्नोत्पादनाय किञ्च अन्यगार्हस्थ्यकर्मणां कृते प्रार्थनाः सन्ति। अत्र विविधानाम् अपराधानां प्रायश्चित्ताय प्रार्थनाः सन्ति। अपि च अत्र प्रेमविषयकाणि विवाहविषयकाणि च विविधानि सूक्तानि उपलभ्यन्ते।



विवधराजकर्मविषयकाणि अपि सूक्तानि अत्र प्राप्यन्ते। यथा- शत्रूणां विनाशाय प्रार्थनया सह सङ्ग्रामस्य तथा तदुपयोगिनां साधनानां विशेषविविरणं प्राप्यते। अस्मात् कारणात् अथर्ववेदस्य 'क्षत्रवेदः' इत्यपि अपरं नाम भवति।



## पाठान्तप्रश्नाः

१. पिप्पलादशाखा विषये लिखत।

२. भैषज्यसूक्तविषये विस्तारेण लिखत।

३. प्रायश्चित्तविषये अथर्ववेदे यद् उक्तं तद्विस्तारेण लिखत।

४. स्त्रीकर्मविषये अथर्ववेदे यद् उक्तं, तद्विस्तारेण लिखत।

५. राजकर्मविषये अथर्ववेदे यद् उक्तं तल्लिखत।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. ऐहिकमपि फलं प्रददाति।

२. नव।

३. चत्वारः।

४. ब्रह्मानामकस्य ऋत्विजः प्रधानं कार्यं सर्वत्र कार्येषु सम्यक्तया निरीक्षणं तथा सम्भाविताया: त्रुट्याः मार्जनम्।

५. अथर्ववेद-ब्रह्मवेद-अङ्गिरोवेद-अथर्वाङ्गिरसवेदादीनि अभिधानानि मुख्यानि।

६. द्वे, शौनकशाखा पिप्पलादशाखा चेति।

७. ब्रह्मकर्मणः प्रतिपादकत्वेनाथर्ववेदः 'ब्रह्मवेदः' कथ्यते।

८. अकुटिलतावृत्त्या, अहिंसावृत्त्या च मनसः स्थैर्यप्राप्तिकर्त्री व्यक्तिः।

९. पथ्यस्य त्रयः शिष्याः आसन्- जाजलिः, कुमुदः, शौनकश्च।

१०. शौनकस्य द्वै शिष्यौ स्तः, बभ्रुः सैन्धवायनश्चेति।

### उत्तराणि-२

११. (१) आध्यात्मिकम्, (२) आधिभौतिकम्, (३) आधिदैविकञ्चेति।

१२. रोगाणाम् उत्पत्तिः अनेककष्टप्रदानां रक्षोभूतपिशाचादीनां उपद्रवेणैव भवति।



१३. ज्वरस्य नाम।

१४. रक्षासूत्रधारणस्य।

१५. स्त्रीकर्मविषयकसूक्तेषु।

१६. शत्रूणां विनाशाय प्रार्थनया सह सङ्ग्रामस्य तथा तदुपयोगिनां साधनानां वर्णनात् अथर्ववेदः 'क्षत्रवेदः' इति नाम्ना प्रसिद्धः।

## ।।इति चतुर्थः पाठः।।



# ५

# ब्राह्मणसाहित्यम्

## प्रस्तावना

पूर्वेषु पाठेषु भवन्तः वेदानां संहिताविषये अधिकतया ज्ञातवन्तः। अस्मिन् पाठे संहिताविषये ब्राह्मणविषये च सामान्यतया आलोचितम्। संहिताब्राह्मणयोः च महान् भेदः वर्तते। यथा- बहुसंख्यकाः संहिताः छन्दोबद्धाः सन्ति। तेषां कतिपयांशा एव गद्यात्मकाः सन्ति, किन्तु ब्राह्मणग्रन्थाः सर्वथा गद्यात्मका एव भवन्ति। अनयोः विविच्यविषये अपि भेदः अस्ति। एतयोः संहिताब्राह्मणयोः विषये अत्र अधिकतया ज्ञास्यति। किञ्च ब्राह्मणेषु प्रतिपादितानां विषये अपि सामान्यं ज्ञानं प्राप्स्यति।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- ब्राह्मणग्रन्थानां महत्त्वविषये अधिकतया ज्ञास्यति।
- मुख्यानि आख्यानानि कानि भवन्ति किञ्च तेषां प्रतिपाद्यमानानां विषायाणां विषये अपि अधिकतया ज्ञास्यति।
- संहिताब्राह्मणयोः पार्थक्यं ज्ञास्यति।
- देवाः कथं अमरा अभवन् इति ज्ञास्यति।
- प्रधानानां ब्राह्मणग्रन्थानां विषये अपि विस्तारेण ज्ञास्यति।

## ५.१) सामान्यपरिचयः

ग्रन्थवाची ब्राह्मणशब्दः विशेषतः नपुंसकलिङ्गे एव प्रयुक्तो भवति। मेदिनीकोशानुसारेण वेदभागस्य सूचकः ब्राह्मणशब्दः क्लीबलिङ्गी एव भवति। यथा- ब्राह्मणं ब्रह्मसङ्घाते वेदभागे नपुंसकम्। ग्रन्थार्थे ब्राह्मणशब्दस्य प्रयोगः पाणिनीयव्याकरणे (सू.३/४/३६), निरुक्ते(४/२७), ब्राह्मणे (शतप.४/६/९/२०), ऐतरेयब्राह्मणे (६/२५/८/२) च न केवलं समुपलब्धो भवति, अपि तु ब्राह्मणविषये तैत्तिरीयसंहितायाम् उक्तम् अस्ति- एतद् ब्राह्मणान्येव पञ्च हवींषि (तै. सं. ३/७/१/१)। अस्यार्थस्य विषये नास्ति किमपि भिन्नं मतम्। ब्राह्मण इति ब्रह्मणः व्याख्यापरकानां ग्रन्थानां नाम अस्ति। ब्रह्मशब्दः स्वयमनेकेषु अर्थेषु प्रयुक्तो भवति, यथा मन्त्रार्थे- ब्रह्म वै मन्त्रः...(शत. ब्रा.७/१/१/५)। अनेन प्रकारेण



वैदिकमन्त्राणां व्याख्यानस्य उपस्थापकत्वात् ब्राह्मणस्येदं नामकरणमभवत्। ब्राह्मणशब्दस्य अपरः अपि अर्थो भवति- यज्ञः। यज्ञीयकर्मकाण्डस्य व्याख्या-विवरणयोः सम्पादनं ब्राह्मणग्रन्थानां मुख्यविषयः अस्ति। ब्राह्मणेषु मन्त्र-कर्म-विनियोगानां व्याख्या अस्ति। ब्राह्मणानाम् अन्तरङ्गपरीक्षणेन ज्ञातो भवति यदेते ग्रन्थाः यज्ञानां वैज्ञानिकान्, आधिभौतिकान् तथा अध्यात्मिकान् च विषयान् प्रतिपादयन्ति इति। ब्राह्मणशब्दस्य विषये च उच्यते यथा-

ब्राह्मणं नाम कर्मणस्तन्मन्त्राणां च व्याख्यानग्रन्थः।

(भट्टभास्करः- वै. सं. १/५/१ भाष्यम्)

**नैरुक्तं यस्य मन्त्रस्य विनियोगः प्रयोजनम्।**

**प्रतिष्ठानं विधिश्चैव ब्राह्मणं तदिहोच्यते।।** (वाचस्पतिमिश्रः)

अनेन कथनेन सिद्धो भवति यद् वेदो द्विविधो- मन्त्ररूपो ब्राह्मणरूपश्च। अयं च ब्राह्मणभागः अपि वेदः एव। वेदशेषभूताः इमे ब्राह्मणग्रन्थाः यज्ञानुष्ठानस्य विस्तृतं वर्णनं कुर्वन्ति। काश्चन कथाः अपि ब्राह्मणग्रन्थेषु प्राप्यन्ते। प्रत्येकं वेदशाखानुसारेण ब्राह्मणाग्रन्थाः आरण्यकग्रन्थाः च भिन्नाः भवन्ति।

ब्राह्मणसाहित्यमिदं नितराम् एव विशालं व्यापकञ्च वर्तते। साहित्यमिदं गद्यात्मकं विद्यते। यज्ञस्य विधानं कदा कृतं भवेत्। कानि च साधनानि तदर्थम् अपेक्ष्यन्ते। के च तेषां यज्ञानाम् अधिकारिणः। इत्येषां विषयाणाम् उपपादनं ब्राह्मणसाहित्ये कृतम् अस्ति। सम्प्रति सम्प्राप्तानां प्रमुखब्राह्मणानां वेदान् अनुसरन्ती सङ्ख्या अनेन प्रकारेण अस्ति- (१)ऐतरेयब्राह्मणम्, (२) शाङ्खायनब्राह्मणम् (ऋग्वेदीयम्), (३) शतपथब्राह्मणम् (शुक्लयजुर्वेदीयम्), (३) तैत्तिरीयब्राह्मणम् (कृष्णयजुर्वेदीयम्), (५) ताण्ड्यम्, (६) षड्विंशम्, (७) सामविधानम्, (८) आर्षेयम्, (९) दैवतम्, (१०) उपनिषद्-ब्राह्मणम्, (११) संहितोपनिषद्ब्राह्मणम्, (१२) वंशब्राह्मणम्, (१३) जैमिनीयब्राह्मणम् (सामवेदीयम्), (१४) गोपथब्राह्मणं (अथर्ववेदीयम्) चेति।

ब्राह्मणग्रन्थेषु शतपथब्राह्मणं गुरुतमं महत्त्वं भजते। अस्ति च तस्य विशालकायम्। तत्र एव यागानुष्ठानानां प्रतिपादनं सर्वोत्तमरीत्या क्रियते। तत्र यागविषयकं साङ्गोपाङ्गम् अपि प्रस्तूयते।

निरुक्तादिग्रन्थेषु 'इति विज्ञायते' इति कथयित्वा ब्राह्मणग्रन्थानाम् एव प्रमाणरूपेण निर्देशः कृतः। अस्य शब्दस्य व्याख्यायां दुर्गाचार्येण लिखितम्- 'एवं ब्राह्मणेऽपि विचार्यमाणे ज्ञायते' इति (निरु. टी. ३/११, २/१७)। पाणिनेः अष्टाध्यायीसूत्रे अनुब्राह्मणशब्दस्य प्रयोगः प्राप्यते - अनुब्राह्मणादिनिः (पा. सू. ४/२/६२) इति। ब्राह्मणसदृशो ग्रन्थः अनुब्राह्मणम्, तदधीते अनुब्राह्मणी इति। अस्य शब्दस्य प्रयोगः भट्टभास्करेण तैत्तिरीयसंहितायाः भाष्यभूमिकायां कृतः। अनेन प्रतीतो भवति यत् ब्राह्मणस्य एव अन्तरभागम् अनुब्राह्मणपदेन व्यपदिश्यते।

पूर्वम् एव कथितं यद् ब्राह्मणग्रन्थानां विस्तारः अतीव विशालः व्यापकः च आसीत् इति। आश्वलायनगृह्यसूत्रे (३अ. ३ख.) ऋषितर्पणेन सह आचार्यतर्पणः अपि समुपलब्धो भवति। आश्वलायनमतानुसारेण मन्त्रद्रष्टारः ऋषयो भवन्ति, ब्राह्मणद्रष्टारः आचार्याश्च। एवंविधानाम् आचार्याणाम् अत्र त्रयो गणाः समुपलब्धा भवन्ति- (१) माण्डुकेयगणः, (२) शाङ्खायनगणः, (३) आश्वलायणगणः चेति।



एतेषाम् आचार्याणां क्रमशः नामानि सन्ति- कहोलः, कौषीतकः, महाकौषीतकः, भरद्वाजः, पैङ्ग्यः, महापैङ्ग्यः, सुयज्ञः, शाङ्खायनः, ऐतरेयः, वाष्कलः, शाकलः, गार्ग्यः, सुजातवक्रः, औदवाहिः, सौजामिः, शौनकस्तथा आश्वलायनः चेति। पैङ्ग्यः महापैङ्ग्य इति नामभ्यां प्रतीतो भवति यत् महाभारत इव भारत इत्यपि एकः भिन्नग्रन्थः आसीत् इति। एकः लघुस्तथा अपरो बृहद् च आसीत् इति। अपि च शाङ्खायनब्राह्मणम् एव कौषीतकीब्राह्मणनाम्ना ख्यातम् अस्ति, किञ्च अस्यां सूच्यां पृथक् पृथक् नामत्वेन ज्ञातो भवति यद् इमौ द्वौ आचार्यौ स्तः। अत्र निश्चयपूर्वकं किमपि वक्तुं न शक्यते, यद् एतैः आचार्यैः ब्राह्मणग्रन्थानां निर्माणं कृतम् इति। किन्तु ऐतरेयस्तथा शाङ्खायनः च निश्चयेन एव ब्राह्मणद्रष्टारौ ऋषी स्तः। अनयोः ब्राह्मणग्रन्थौ अद्यापि समुपलब्धौ स्तः।



## पाठगतप्रश्नाः-१

१. वेदभागस्य सूचकः ब्राह्मणशब्दः कस्मिन् लिङ्गे भवति।

२. ब्राह्मणग्रन्थविषये भट्टभास्करस्य मतं किम्।

३. वेदः कतिविधः।

४. पाणिनेः कस्मिन् सूत्रे ब्राह्मणशब्दस्य प्रयोगः दृश्यते।

५. आचार्याणां त्रयो गणाः के।

६. ब्राह्मणद्रष्ट्रोः द्वयोराचार्ययोर्नाम लिखत।

७. शाङ्खायनब्राह्मणस्य अपरं नाम किम्।

## ५.२) संहिताब्राह्मणयोः विषयस्य पार्थक्यम्

संहिताया ब्राह्मणस्य च स्वरूपविषये महत् पार्थक्यं परिलक्ष्यते। बहुसंख्यकाः संहिताः छन्दोबद्धाः सन्ति, तेषां कतिपयांशाः च गद्यात्मकाः सन्ति। किन्तु ब्राह्मणग्रन्थाः सर्वे गद्यात्मका एव भवन्ति। अनयोः प्रतिपाद्ये विषये अपि अन्तरम् अस्ति। यथा- ऋङ्मन्त्रेषु देव-स्तुतीनां प्राध्यान्यम् अस्ति। अथर्वमन्त्रेषु ऐहिकपारलौकिकफलदायकानां विषयाणां विवेचनं तथा गृहनिर्माणाय, हलकर्षणाय, बीजवपनाय उपयोगिनां विषयाणां तथा गार्हस्थ्यजीवनस्य अपि विविधविषयाणां वर्णनम् अस्ति। राजकीयविषयेऽपि- शत्रूणां संहाराय, सैन्यसञ्चालनाय तथा तदुपयोगिनां साधनानां सविस्तरेण विवरणम् अस्ति। यजुर्वेदसंहितायां विविच्यविषयः पूर्ववर्णितेभ्यो विषयेभ्यः नितान्तं भिन्नः एवास्ति। ब्राह्मणानां मुख्यविषयः अस्ति विधिः- कस्य विधानं कदा भवितव्यम्। केन प्रकारेण तत्कर्म कर्त्तव्यम्। तेषु किमाकाराणां साधनानाम् आवश्यकता भवति। के च तेषां यज्ञानाम् अधिकारिणो भवन्ति। एवंविधानां याज्ञिकविधीनां प्रतिपादनाय एव ब्राह्मणसाहित्यस्य उद्भवः अभवत्। याज्ञिकविषयेषु क्वचिद्विरोधः अपि



प्रतीतो भवति, तत्र परिष्कारः अपि ब्राह्मणस्य उद्देश्यम् अस्ति। शबरस्वामिनः मतानुसारेण ब्राह्मणविधीनां संख्या दशधा भवति। तस्य तात्पर्यमिदम् अस्ति यत् संहितायां स्तुतीनां प्राधान्यम् अस्ति, ब्राह्मणग्रन्थे तद्विधीनाम् एव प्राधान्यम् अस्ति।

फलतः विविधाः विधयः एव ब्राह्मणग्रन्थानां मुख्यविषयाः सन्ति। यत्र समुपलब्धाः अवान्तरविषयाः तु तेषाम् एव विधीनां पोषकाः निर्वाहकाश्च भवन्ति। एवंविधानां विषयाणां मीमांसकैः कृतम् अभिधानम् अर्थवादो भवति। अर्थवादे निन्दा अस्ति तथा यागोपयोगिनां द्रव्याणां प्रशंसा वर्त्तते। तत्र विधिविधानञ्च सयुक्तिकं भवति। निरुक्तजन्येन अर्थेन अपि ब्राह्मणवाक्यानां समर्थनं भवति। ब्राह्मणग्रन्थेषु विधिः एव तत्केन्द्रबिन्दुः अस्ति, यं परितः निरुक्त-स्तुति-आख्यान-हेतु-वचनादयः विविधाः विषयाः स्वं स्वम् आवर्त्तनं सम्पूरयन्ति।

जैमिनिमहोदयेनापि पूर्वपक्षरूपेण उच्यते यत् वेदे न केवलं विधिवाक्यानाम् अस्तित्वम् अस्ति, अपि तु तद्भिन्नषयाणां प्रतिपादकानां वाक्यानाम् अपि सत्ता वर्त्तते। फलतः एतानि वाक्यानि अनर्थकानि सन्ति एव। एवं यतः तानि वाक्यानि विधीन् न प्रतिपादयन्ति तस्मात् तेषां वाक्यानां नितान्ता व्यर्थता। अत एव उच्यते- 'आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानाम्।' एवं शङ्कायां सत्यां सिद्धान्तपक्षस्य कथनम् अस्ति यद् एतेषां वाक्यनाम् अपि उपादेयता वर्त्तते। एतेषां वाक्यानां यद्यपि स्वतः कापि उपयोगिता नास्ति तथापि एतानि विधिप्रशंसायां प्रयुक्तानि सन्ति। अतः एतानि विधिप्रतिपादितस्य अर्थस्य एव अवान्तरवाक्यानि सन्ति। अतः परम्परया एतेषाम् उपयोगो विधौ अवश्यमेवास्ति- 'विधिना तु एकवाक्यात् स्तुत्यर्थेन विधीनां स्युः' (जैमि. सू. १/२/२७)। विश्लेषणमिदं ब्राह्मण-विषयान् एव लक्ष्यीकरोति।



## पाठगतप्रश्नाः-२

८. ऋङ्मन्त्रेषु कस्य प्राधान्यम्।

९. ब्राह्मणविधीनां संख्या दशधा इति कस्य मतम्।

१०. संहिताब्राह्मणयोः प्रधानं पार्थक्यं किम्।

## ५.३) विषयविवेचनम्

विधि-शब्दस्य अर्थो भवति- यज्ञः, किञ्च तस्य अङ्गानां तथा उपाङ्गानाम् अनुष्ठानस्य उपदेशः च। ताण्ड्यब्राह्मणे अस्य अनेकभेदाः लभ्यन्ते। उदाहरणार्थं वहिष्पवमान-स्तोत्रे अध्वर्यु-उद्गातादीनां पञ्चानामृत्विजाम् प्रसर्पणस्य विधानम् अस्ति। तत्र च यज्ञादिषु नियमद्वयस्य पालनं नितान्तम् आवश्यकं भवति। तत्र प्रसर्पणं कुर्वताम् ऋत्विजां शनैः शनैः पदक्षेपस्य विधानम् अस्ति। तत्र तुष्णीभावस्य अपि विधानम् अस्ति। पञ्चसु ऋत्विक्षु अध्वर्यु-प्रस्तोता-उद्गाता-प्रतिहर्ता-ब्रह्मादीनां गमनस्य व्यवस्था वर्तते।



अनेनैव क्रमेण पङ्क्तिबद्धो भूत्वा तैः गमनं कर्तव्यम्। तत्र पङ्क्तिभङ्गे सति पापं भवति, अनर्थस्य अपि सम्भावना वर्द्धते। अस्मिन् प्रदक्षिणकाले ते स्वहस्ते किञ्चिद् धृत्वा एव चलन्ति।

शतपथब्राह्मणः तु विधिविधानानाम् एकं विशालं समूहम् उपस्थापयति। प्रथमे काण्डे दर्शपौर्णमासादीनां मुख्यस्य अवान्तरस्य च अनुष्ठानानां वर्णनं यागक्रमेण अस्ति। द्वितीये काण्डे आधान-पुनराधान-अग्निहोत्र-उपस्थापन-आग्रायण-दाक्षायणादियज्ञानां वर्णनं सविस्तारेण पुङ्खानुपुङ्खक्रमेण च अस्ति। विधिना सहैव हेतोः अपि सयुक्तिकं वर्णनं कृतम् अस्ति। शतपथब्राह्मणस्य प्रारम्भे एव सहेतुकविधेः निर्देशः समुपलब्धो भवति। पौर्णमासयागे दीक्षितो जनः पूर्वस्यां दिशि आहवनीय-गार्हपत्याग्नयोः मध्ये स्थित्वा जलस्य स्पर्शं करोति। अस्य जलस्पर्शस्य किं कारणम् इति प्रश्ने सति उच्यते जलं मेध्यं भवति इति। तत्र मिथ्यावादी जनः यज्ञाय न उपयुक्तो भवति। अस्मात् कारणात् जलस्पर्शेन असौ पापं त्यक्त्वा मेध्यो भवति। ततश्च जलस्पर्शेन जनः पवित्रो भूत्वा दीक्षितो भवति। अतः असौ जलस्पर्शं करोति। अत एव उच्यते- **अमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतः। मेध्या वा आपः। मेध्यो भूत्वा व्रतमुपायानीति। पवित्रं वा आपः। पवित्रपूतो व्रतम् उपयानीति तस्माद्वा अप उपस्पृशति (**शत. ब्रा. १/१/१/१ः) इति।



## पाठगतप्रश्नाः-३

११. विधिशब्दस्य अर्थः कः।

१२. केषाञ्चन यज्ञानां नाम लिखत।

१३. यज्ञाय अनुपयुक्तो जनः कः।

## ५.४) विनियोगः

ब्राह्मणग्रन्थेषु मन्त्राणां विनियोगस्य सविस्तृतं वर्णनम् अस्ति। कस्य मन्त्रस्य प्रयोगः किमुद्दिश्य भवति, अस्य सयुक्ति व्यवस्था ब्राह्मणग्रन्थे सर्वत्र उपलब्धा भवति। ब्राह्मणग्रन्थाः मन्त्राणां व्यख्यया एव तेषां विनियोगस्य युक्तिमत्तां सिद्ध्यन्ति। आपाततः मन्त्राणां तात्पर्यस्य यो बोधो भवति स तु ब्राह्मणानाम् अन्तरङ्गाध्यात्मिकव्याख्यानाद् अनन्तरम् एव जायते। ताण्ड्यब्राह्मणस्य द्वित्रा एव दृष्टान्ताः पर्याप्ताः भवन्ति।

**स नः पवस्व शंगवे** (ऋ. १/११/३) अस्या ऋचः गायनं पशूनां रोगनिवृत्त्यर्थं भवति। अस्य विनियोगस्य विशिष्टविवेचनस्य आवश्यकता नास्ति, यतः इयं वार्ता तु मन्त्रपदादेव सिध्यति (६/१/६-९)। किञ्च – **आ नो मित्रावरुणा** (ऋ. ३/६२/१६) अस्य मन्त्रगायनस्य विनियोगः दीर्घरोगनिवृत्त्यर्थम् एव अस्ति। इदमपि कथनम् किञ्चित् आश्चर्यजनकम् इति प्रतीयते। अस्मिन् विषये ब्राह्मणस्य कथनम्



अस्ति यत् मित्रावरुणस्य सम्बन्धः प्राणेन अपानेन च सह अस्ति। दिवसानां देवता मित्रः अस्ति, तेन असौ प्राणानां प्रतिनिधिः अस्ति। अनेन एव क्रमेण निशानां देवता वरुणः अस्ति, अतः असौ अपानस्य प्रतीकः अस्ति। फलतः दीर्घरोगनिवारणार्थम् अस्य मन्त्रस्य पूर्वोक्तः विनियोगः नितान्तं सयुक्तिकः अस्ति। बहुत्र विनियोगस्य प्रसङ्गे कल्पनाया एव विशेषरूपेण प्रभावः परिलक्षितो भवति, किन्तु ब्राह्मणस्य व्याख्या रीत्या, अनुगमनेन च एवंविधेषु कल्पनाम् आश्रितेषु कतिपयस्थलेषु अपि युक्तिमत्तां प्रतिपादयति। तत्र उदाहरणरूपेण दविद्युत्या रुचा (ऋ. ९/६४-२८) इति मन्त्रो द्रष्टव्यः।



## पाठगतप्रश्नाः-४

१४. मित्रावरुणस्य सम्बन्धः केन सह वर्तते।

१५. दिवसानां देवता का।

१६. निशानां देवता का।

## ५.५) हेतुः

हेतुपदेन तेषां कारणानां निर्देशो भवति यैः कर्मकाण्डविधयः विशेषरूपेण सम्पन्ना भवन्ति। ब्राह्मणग्रन्थेषु यज्ञीयविधि-विधाननिमित्तकस्य समुचितकारणस्य अपि निर्देशः विस्तारेण प्राप्यते। अग्निष्टोमयागे उद्गाता मण्डपे औदुम्बरस्य शाखाया उच्छ्रयणं करोति। अस्य विधानस्य कारणस्य निर्देशं कुर्वन् ताण्ड्यब्राह्मणस्य (६/४/१) कथनमिदम् अस्ति यत् प्रजापतिः ऊर्जस्य (बलस्य) विभाजनं कृतवान्। तत एव औदुम्बरवृक्षस्य उत्पत्तिः अभवत्। अनेन प्रकारेण औदुम्बरवृक्षस्य देवता प्रजापतिः अभवत्। उद्गातुरपि सम्बन्धः प्रजापतिना सह एव अस्ति। अतः उद्गाता उदुम्बरशाखायाः उच्छ्रयणकार्यं स्वस्य प्रथमकर्मणा करोति। अस्मिन् अवसरे प्रयुक्तस्य उच्छ्रयणस्य अपि व्याख्या अस्ति। अनेन प्रकारेण द्रोणकलशे सोमरसं स्रावयित्वा अग्निष्टोमे स्थापनस्य व्यवस्था वर्तते। अस्य द्रोणकलशस्य स्थापनं रथस्य अधोभागे भवति। अस्य विधानकारणस्य पूर्णनिर्देशः ताण्ड्यब्राह्मणे (६/५/१) प्राप्यते।

प्रजापतिना कामना कृता 'प्रजानां सृष्टिरहं करोमि' इति, प्रजापतेरेवं मनसा चिन्तनेन एव तस्य मूर्ध्नः आदित्यस्य सृष्टिरभवत्। तेन प्रजापतेः शिरश्छेदनं कृतम्। तस्माद् एव द्रोणकलशस्य सृष्टिरभवत्। तस्माद् एव द्रोणकलशात् सोमरसं पीत्वा देवा अमरा बभूवुः। अनेन रूपेण प्रस्तरोपरि द्रोणकलशस्य स्थापनस्य (अध्यूहनस्य) विषये अपि विधि-विधानानां कारणस्य निर्देशः अस्ति। वहिष्पवमान-स्तोत्रे पञ्चानामृत्विजाम् अग्रे गमनकर्ता अध्वर्युः स्वहस्ते दर्भस्य मुष्टिं नीत्वा गच्छति। कथम्, अस्य कारणस्य निर्देशनकाले ताण्ड्यब्राह्मणे (६/७/१६/२०) अश्वरूपं धृत्वा यज्ञात् पलायमानस्य तथा दर्भमुष्टिं दृष्ट्वा तस्य परावर्तनस्य च आख्यानं हेतुरूपेण उपस्थापितम्। अनेन प्रकारेण हेतुवचनेन पाठकानुष्ठानानां कारणस्य स्वतः परिचयो प्राप्यते तथा समधिकायाः श्रद्धाया उदयोऽपि भवति।





## पाठगतप्रश्नाः-५

१७. उर्जशब्दस्य कः अर्थः।

१८. औदुम्बरवृक्षस्य देवता का।

## ५.६) अर्थवादः

यज्ञे निषिद्धपदार्थानां निन्दाः ब्राह्मणग्रन्थानाम् अनेकस्थलेषु समुपलब्धाः भवन्ति। यज्ञे माषस्य विधानं निषिद्धम् अस्ति। अतः अस्य निन्दा अस्मिन् वाक्ये अस्ति - अमेध्या वै माषा (तै. सं. ५/१/८/१)। अनुष्ठानस्य हवनीयद्रव्यस्य च देवतानां भूयसीप्रशंसातः ब्राह्मणानां शरीरं वृद्धिं गतम्। अग्निष्टोमयागस्य विशिष्टप्रशंसा ताण्ड्यब्राह्मणे (६/३) प्राप्यते। सर्वेभ्यः कामेभ्यः उपादेयत्वेन अयम् एव यथार्थयज्ञरूपेण कल्पितः। यागानां समधिकमहत्त्वशालित्वेन अयम् एव ज्येष्ठयज्ञाभिधानेन मण्डितः अस्ति (ताण्ड्य. ६/३/८-९)। अनेन प्रकारेण वहिष्पवमान- स्तोत्रस्य स्तुतिरत्र उपलब्धा भवति (ता.६/८/५)। उपयोगविधेः आस्थापूर्वकपुष्ट्यर्थम् एव अर्थवादाः भवन्ति। एतैः अर्थवादैः प्रशंसावचनैः च आद्यन्तब्राह्मणग्रन्थाः सम्पूरिताः सन्ति।



## पाठगतप्रश्नाः-६

१९. यज्ञे कस्य विधानं निषिद्धम्।

२०. कः अर्थवादः।

## ५.७) निरुक्तिः

ब्राह्मणग्रन्थेषु स्थाने स्थाने शब्दानां निर्वचनस्य अपि निर्देशः प्राप्यते। एष निर्देशः एतावान् मार्मिकः वैज्ञानिकः च अस्ति यत् भाषाशास्त्रदृष्ट्या अपि अयम् अतीव महत्त्वपूर्णः प्रतीतो भवति। निरूक्ते येषां शब्दानां व्युत्पत्तयो लभ्यन्ते तेषां मूलम् एतेषु ब्राह्मणग्रन्थेषु उपलब्धम् अस्ति। निर्वचनमिदं नास्ति काल्पनिकम्। भाषाविज्ञानदृष्ट्या अपि अस्य वैज्ञानिकता अक्षुण्णा एव अस्ति। एतादृशी निरुक्तिः स्वयं संहिताभागे अपि उपलब्धा भवति। यस्या आश्रयं गृहीत्वा ब्राह्मणग्रन्थस्य व्युत्पत्तिः निर्मिता। यथा दधि उदकशब्दस्य च व्याख्या संहिताग्रन्थेषु अनेन प्रकारेण अस्ति- तद्दध्नोदधित्वम् (तै. सं. २/५/३/३/), उदानिषुर्महीः इति तस्मादुदकमुच्यते(अर्थ. ३/१/३/१)। शतपथब्राह्मणे ताण्ड्यब्राह्मणे च उपादेयानां



निरुक्तीनां भाण्डारः अस्ति। नानाविधानां स्तोत्राणां सामाभिधानानां च सुष्ठु निरुक्तिः ताण्ड्यब्राह्मणे समुपलब्धा अस्ति। आज्यस्तोत्रस्य व्याख्या अजिशब्दात् कथयित्वा सुष्ठु व्याख्यानस्य अपि उपक्रमः प्राप्यते, यथा - 'यदाजिमायन् तदा आज्यानाम् आजत्वम्' (ता. ७/२/१)। रथन्तरस्य निरुक्तिः इदृशी भवति- 'रथं मर्या क्षेप्लातारीत् इति तद्रथन्तरस्य रथन्तरत्वम्' (ताण्ड्य. ७/६/४)। अनेन एव प्रकारेण बृहत्साम्नः निरुक्तिः - 'ततो बृहदनु प्राजायत। बृहन्मर्या इदं स ज्योगन्तरभूदिति तद्बृहतो बृहत्त्वम्' (ताण्ड्य. ७/६/५) इति। अस्यायमाशयः- प्रजापतेः मनसि इदं साम बृहत्कालपर्यन्तं निवसितम्। अतः अस्य साम्नः बृहत्साम इति विशिष्टं नामकरणम् अस्ति।

## ५.८) आख्यानम्

ब्राह्मणग्रन्थेषु अर्थवादस्य विस्तृतं वर्णनं प्राप्यते। इदं वर्णनं पठित्वा साधारणपाठकः समुद्वेलितो भवति, किन्त्वैतेषु उद्वेजकविषयसमूहेषु यत्र तत्र अत्यन्तरोचकम् आकर्षकं महत्त्वपूर्णं च आख्यानम् अपि प्राप्यते। तमसि प्रकाशकिरण इव, एतानि आख्यानानि पाठकहृदयस्य उद्विग्नचित्ते शान्तिदायकानि शीतलानि च भवन्ति। विधिविधानानां स्वस्वरूपस्य व्याख्या एवास्य आख्यानस्य जननी अस्ति। किं च यदा आख्यानमिदं यज्ञस्य सङ्कीर्णप्रान्तं परित्यज्य साहित्यस्य सार्वभौमक्षेत्रे विचरति तदा वैदिककर्मकाण्डस्य कर्कशता तं रोद्धुं न शक्नोति। आख्यानमिदं द्विविधं भवति-स्वकल्पकायमाख्यानम्, दीर्घकायमाख्यानञ्चेति। स्वल्पकायिकेषु आख्यानेषु तासां कथानां गणना भवति यासु कथासु सयुक्ति प्रदर्शनं भवति। एतेषु आख्यानेषु कतिपयानि मुख्याख्यानि सन्ति- 'वाचः देवान् परित्यज्य सलिले तदनु वनस्पतौ च प्रवेशः (ताण्ड्य.६/५/१०-१२); यज्ञस्वरूपे देवताभिः अनाक्रमणं तथा दर्भमुष्ट्या तस्य प्रत्यावर्त्तनं (ता. ६/७/१८), अग्निमन्थनकाले घोटकस्य अग्रे स्थापनम् (शत. १/६/४/१५), देवासुराणां मध्ये बहुविधसङ्ग्रामः' (शत. २/१/६/८-१८, ऐत. १/४/२३, ६/२/१)।

एतेषु लघ्वाख्यानेषु क्वचित् स्थलेषु अतीव गम्भीरतात्त्विक-तथ्यानाम् अपि सङ्केतः प्राप्यते, यद् ब्राह्मणस्य कर्मकाण्डात्मकवर्णनाद् नितान्तं भिन्नं भवति, तथा गूढ-गम्भीरार्थप्रतिपादकम् अपि भवति। प्रजापतेः उपांशुरूपेण प्रार्थनायै शतपथब्राह्मणे यस्य कथानकस्य उपक्रमं प्राप्यते तत्तु नितान्तं रहस्यमयम् अस्ति। श्रेष्ठतां प्राप्तुं वाङ्-मनसोः कलहः समुत्पन्नोऽभवत्। मनसः कथनम् आसीत् यन्मयाऽनभिगतवार्त्ता अर्थात् वाणी न उच्यते। वाण्याः कथनम् आसीत्- यत्त्वं जानासि तस्य विज्ञापनाम् अहम् एव करोमि। मनसा ज्ञातानां चिन्तिततथ्यानां प्रकटीकरणं वाण्येव करोति। अतः अहम् एव श्रेष्ठाऽस्मि। उभौ प्रजापतिसन्निधौ गतवन्तौ। प्रजापतिना स्वनिर्णयः मनसः पक्षे एव प्रदत्तः। अस्य कथानकस्य अभ्यन्तरे मनोवैज्ञानिकतथ्यस्य विशदः सङ्केतः प्राप्यते (शत.१/४/५/८-२)। वाचा सम्बद्धाः बहुविधाख्याः रुचिराः शिक्षाप्रदाश्च सन्ति। गायत्रीच्छन्दः सोमं देवताभ्यः नीत्वा गच्छति स्म, मार्गे गन्धर्वाः तम् अपहृतवन्तः। तदा देवाः वाचं तस्य पार्श्वे प्रेषितवन्तः, वाक् तं सोमं नीत्वा परावर्तिता। वाचं स्वपक्षे आनेतुं गन्धर्वाः प्रयत्नशीलाः बभूव। ते स्तुतिप्रशंसावचनैः वाचं सन्तोष्य स्वपक्षे कर्तुमैच्छन्। अपरपक्षे देवा अपि गायनैर्वादनैश्च तां सन्तोषयितुम् ऐच्छन्। वाणी देवतानां कार्यैः प्रसन्ना भूत्वा तेषां



पार्श्वेऽगमत्। अस्याः कथायाः प्रतीयमानस्य उपदेशस्य उपरि ब्राह्मणस्य मतमस्ति यद् अद्यापि स्त्रियः स्तुतेरपेक्षया गायनं प्रति अधिकाकृष्टा भवन्ति इति। स्त्रियः स्वभावः एवायं भवति (शत. ३/२/४/२/६)।

सृष्टि-विषयेऽपि अनेकानि आख्यानानि ब्राह्मणग्रन्थे समुपलब्धानि सन्ति। परमपुरुषेण चतुर्णां वर्णानामुत्पेत्तेरुल्लेखः तु पुरुषसूक्ते एवोपलब्धो भवति। ब्राह्मणेषु अपि अस्य प्रसङ्गस्य सुष्ठु वर्णनं प्राप्यते। ताण्ड्यब्राह्मणे (६/१) प्रजापतेरङ्गविशेषेण वर्णनां तथा तत्तद्देवतानाम् उत्पत्तिः वर्णिताऽस्ति। अस्मिन् वर्णने शूद्रवर्णनां यज्ञाधिकारात् निष्क्रमणस्य अपि सुष्ठु उपपत्तिः प्रयुक्ताऽस्ति। प्रजापतिमुखाद् ब्राह्मणस्य, अग्नेश्च बाहोः क्षत्रियस्य, इन्द्रस्य च मध्यदेशात् वैश्यस्य, विश्वेदेवायाश्च पादेन केवलं शूद्रस्यैवोत्पत्तिं दर्शयित्वा शूद्रस्य कर्त्तव्यम् अपि निर्देशितम्- 'तस्मात् शूद्र उत बहुपशुरयज्ञियो विदेवो हि। नहि तं काचन देवसान्वसृज्यत। तस्मात्पादावनेज्यं नातिवर्धते। पत्तोहि सृष्टः' (ताण्ड्य. ६/१/११)।



## पाठगतप्रश्नाः-७

२१. वाचं स्वपक्षे आनेतुं के प्रयत्नं कृतवन्तः।

२२. स्त्रियः स्वभावः कीदृशः।

२३. केन चत्वारः वर्णाः सृष्टाः।

२४. कुत्र वर्णचतुष्टयस्य उत्पत्तिः लिखिता।



## पाठसारः-

ब्राह्मणशब्दः नपुंसकलिङ्गी क्लीबलिङ्गी चास्ति। ब्राह्मणशब्दस्य यज्ञः इत्यपि अर्थः अस्ति। यज्ञीयकर्मकाण्डस्य व्याख्या-विवरणयोः सम्पादनं ब्राह्मणग्रन्थानां मुख्यविषयः अस्ति। ब्राह्मणेषु मन्त्र-कर्म-विनियोगानां व्याख्या अस्ति। संहिताब्राह्मणयोर्मध्ये वर्तते महान् भेदः। बहुसंख्यकाः संहिताः छन्दोबद्धाः सन्ति, तेषां कतिपयांशा एव गद्यात्मकाः सन्ति।. किं च ब्राह्मणग्रन्थाः सर्वथा गद्यात्मका एव भवन्ति। विविच्यविषयेऽप्यन्तरं दृश्यते। ब्राह्मणग्रन्थेषु च विविधानां विधीनां विषये आलोचितम्। ते च विधयः यथा विनियोगः, हेतुः, निरुक्तिः, आख्यानम् इत्यादयः। ब्राह्मणेषु यज्ञस्य तत्सम्बद्धानां विविधानाम् उपदेशानां च वर्णनम् अस्ति। तेषु मन्त्राणां विनियोगविषये च सविस्तीर्णं वर्णनं प्राप्यते। कस्य मन्त्रस्य कस्मिन् समये प्रयोगः स्यात् इत्यादयः विधयः अत्रोपदिश्यन्ते। एतेषां च विनियोगानां वैज्ञानिकदृष्ट्या सम्मतत्वमपि तत्र प्रदर्श्यते। हेतुपदेन च तेषां कारणानां निर्देशः भवति यैः कर्मकाण्डविधयः सुष्ठु सम्पद्यन्ते। यज्ञे निषिद्धपदानां निन्दाः यत्र विधीयन्ते स भवति अर्थवादः, उपयोगविधेः आस्थापूर्वकपुष्ट्यर्थम् एव एते अर्थवादाः भवन्ति। ब्राह्मणेषु शब्दानां निर्वचनस्य मार्मिकः



वैज्ञानिकश्च निर्देशः निरुक्तिः इत्युच्यते। तत्र अर्थवादस्य विस्तृतं वर्णनं प्राप्यते, येन पाठकाः समुद्वेलिताः भवन्ति। अत्र विभिन्नेषु च स्थलेषु अत्याकर्षकाणि आख्यानकानि अपि प्राप्यन्ते। एतानि आख्यानानि पाठकहृदयस्य उद्विग्नचित्ते शान्तिदायकानि शीतलानि च भवन्ति। विधिविधानानां स्वस्वरूपस्य व्याख्या एतेषाम् आख्यानानां जननी अस्ति।



## पाठान्तप्रश्नाः

१. ब्राह्मणग्रन्थानां महत्त्वं वर्णयत।
२. प्रधानानां ब्राह्मणग्रन्थानां वेदनिर्देशपुरःसरं नामानि लिखत।
३. वाङ्मनसोः आख्यानं प्रतिपादयत।
४. कानिचन मुख्यानि आख्यानानि उदाहरत।
५. संहिताब्राह्मणयोः पार्थक्यं लिखत।
६. केषां प्रतिपादनाय ब्राह्मणसाहित्यस्योद्भवः।
७. देवाः कथं अमरा बभूवुः।
८. निरुक्ते कानिचन निर्वचनानामुदाहरणानि लिखत।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. नपुंसके।
२. ब्राह्मणं नाम कर्मणस्तन्मन्त्राणां च व्याख्यानग्रन्थः।
३. द्विविधः, मन्त्ररूपो ब्राह्मणरूपश्चेति।
४. अनुब्राह्मणादिनिः (पा. सू. ४/२/६२) इति सूत्रे।
५. माण्डुकेयगणः, शाङ्खायनगणः, आश्वलायणगणः चेति।
६. एतरेयः शाङ्खायनः च।
७. कौषीतकीब्राह्मणम्।

### उत्तराणि-२

८. देवस्तुतेः।
९. शबरस्वामिनः।
१०. संहितायां स्तुतीनां प्राधान्यम् अस्ति, ब्राह्मणग्रन्थे तद्विधीनाम् एव प्राधान्यम् अस्ति।



### उत्तराणि-३

११. यज्ञः।

१२. आधान-पुनराधान-अग्निहोत्र-उपस्थापन-आग्रायण-दाक्षायणादीनि केषाञ्चन यज्ञानां नामानि।

१३. मिथ्यावादी।

### उत्तराणि-४

१४. प्राणेन अपानेन च सह।

१५. मित्रः।

१६. वरुणः।

### उत्तराणि-५

१७. बलम् इति।

१८. प्रजापतिः।

### उत्तराणि-६

१९. माषस्य ।

२०. प्रशंसावचनम्।

### उत्तराणि-७

२१. गन्धर्वाः।

२२. स्तुतेरपेक्षया गायनं प्रति अधिकाकृष्टाः भवन्ति।

२३. परमपुरुषेण।

२४. पुरुषसूक्ते।

---

।।इति पञ्चमः पाठः।।

---

६

# आरण्यकम् उपनिषच्च

## प्रस्तावना

मन्त्रब्राह्मणयोर्वेदनामधेयम् इति श्रुत्यनुसारेण मन्त्रब्राह्मणौ वेदस्य द्वौ भागौ। तत्र ब्राह्मणस्य अपि भागत्रयमस्ति। ते च ब्राह्मणम् आरण्यकम् उपनिषच्चेति। ब्राह्मणग्रन्थानां विस्तृतपरिचयः पूर्वमेव अभवत्। अधुना आरण्यकानां परिचयः प्रस्तूयते। ऋग्वेदादिभागानुसारेण आरण्यकानि अपि बहूनि सन्ति। तेषु कानिचित् विशिष्टानि आरण्यकानि यथा ऐतरेयारण्यकं, बृहदारण्यकं , शांख्यायनारण्यकं तैत्तिरीयारण्यकं चेति अत्र प्रस्तूयन्ते। आरण्यकानि प्रपाठकेषु विभज्यन्ते। ते च अनुवाकेषु विभज्यन्ते। महाव्रतस्य अनुष्ठानवर्णनं-निष्कैवल्यशास्त्र – प्राणविद्या - पुरुषप्रभृतीनाम् वर्णनं केषुचित् स्थलेषु ब्रह्मविद्यायाः गूढतया विस्तारेण च वर्णनमपि वर्तते। एतानि कस्मिन् वेदे प्रपाठके अनुवाके च सन्ति, तदपि अत्र उपस्थाप्यते।

अस्य अध्यायस्य द्वितीये भागे उपनिषदां वर्णनं विद्यते। उपनिषदो भारतीयायाः अध्यात्मविद्याया ज्वलन्ति रत्नानि सन्ति। महर्षयो यानि आध्यात्मिकतत्त्वानि ध्यानमाध्यमेन साक्षाद् अकुर्वन् तानि सर्वाणि तत्त्वानि अत्र वर्णितानि सन्ति। उपनिषत् परा विद्येति कथ्यते। वेदान्ताः एव उपनिषदः। उपनिषद्-शब्दस्य रहस्यम् इत्यर्थः। अध्यात्मविद्यायाः रहस्यप्रतिपादका वेदभागा उपनिषदः इति कथ्यन्ते। महर्षय आध्यात्मिक्या विद्यया तेषां गूढतमानां रहस्याणां विशदतया विचारं कुर्वाणाः प्राप्यन्ते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान्

- विविधानाम् आरण्यकानां विषये ज्ञातुं प्रभवेत्।
- उपनिषदां सामान्यरूपेण परिचयं प्राप्तुं शक्नुयात्।
- आरण्यकानां नामकरणस्य सार्थकतां जानीयात्।
- केनोपनिषदः छान्दोग्योपनिषदः च विशेषतया परिचयं प्राप्स्यति।



## ६.१) आरण्यकस्य सामान्यपरिचयः

आरण्यकोपनिषदौ ब्राह्मणानां परिशिष्टग्रन्थसमानौ भवतः। यथा ब्राह्मणग्रन्थेषु सामान्यप्रतिपाद्यविषयेभ्यो भिन्नविषयाणां प्रतिपादनं विद्यते तथा एतेषु अपि वर्तते। सायणाचार्यस्य मते अस्य ग्रन्थस्य अरण्ये पाठ्यत्वात् 'आरण्यकम्' इति नामकरणं सार्थकम् एव इति। यथा-

**'अरण्याध्ययनादेतद् आरण्यकमितीर्यते।**

**अरण्ये तदधीयीतेत्येवं वाक्यं प्रवक्ष्यते।।'** -(तै० आ० भा०, श्लो० ६)

एतेषां ग्रन्थानां मननस्थानम् अरण्यस्य एकान्तशान्तं वातावरणम्। ग्रामाभ्यन्तरे अस्य अध्ययनं कदापि लाभप्रदम् उचितम् उपादेयं च नासीत्। आरण्यकस्य मुख्यप्रतिपाद्यविषयः न केवलं यज्ञः, अपि तु यज्ञ-यागाद्यभ्यन्तरे विद्यमानस्य आध्यात्मिकतथ्यस्य मीमांसापि अस्ति। यज्ञीयानुष्ठानेन सह तदन्तर्गतः दार्शनिकविचारः अपि अस्य मुख्यविषयोऽस्ति। संहितामन्त्रेषु यस्या विद्यायाः सङ्केतमात्रम् एव उपलब्धं भवति अत्र तस्या विश्लेषणम् अपि वर्तते।

आरण्यकस्य महत्त्वं सर्वत्र स्वीकृतमस्ति। महाभारतस्य कथनमस्ति यद् औषधीभ्यो यथा अमृतम् उद्धृतं तथैव वेदेभ्यः सारं समुद्धृत्य आरण्यकं प्रणीतम्। यथा-

**'आरण्यकञ्च वेदेभ्य ओषधिभ्योमृतं यथा।'** -(महाभा० १।२६५)

मन्त्रब्राह्मणात्मकस्य वेदस्य यस्मिन् अंशे प्राणविद्यायाः प्रतीकोपासनायाश्च विषये वर्णनमस्ति स एव अंशः आरण्यकमिति कथ्यते। आरण्यकमपि ब्राह्मणस्य एव अंशः अस्ति। तस्य विशिष्टताप्रदर्शनाय 'रहस्यब्राह्मणम्' इति नाम अपि प्रसृतम् अस्ति। निरुक्तस्य टीकायां (१।४) दुर्गाचार्येण 'ऐतरेयके रहस्यब्राह्मणम्' इति कथयित्वा ऐतरेयारण्यकस्य उद्धरणं दत्तम् (२।२।१)। अनेन रहस्यब्राह्मण-आरण्यकयोः एकतायाः सिद्धिर्भवति, आरण्यकस्य नामान्तरं रहस्यमपि अस्ति (गोपथ० ब्रा० १०)। यतो हि यथा आरण्यकं यज्ञीयगूढरहस्यस्य प्रतिपादनं करोति तथा कर्मकाण्डस्य दार्शनिकव्याख्याम् अपि प्रस्तौति। मुख्यतः ब्रह्मविद्या रहस्यशब्देन ज्ञायते। विषयविवेचनस्य दृष्ट्या आरण्यकेन साकम् उपनिषदः साम्यमस्ति। अतो बृहदारण्यकादिग्रन्थाः उपनिषदिति शब्देन अपि व्यवह्रियन्ते। किञ्च वर्णनीयविषयस्य साम्यत्वेन अपि तयोः मध्ये किञ्चित् पार्थक्यं परिलक्ष्यते। आरण्यकस्य मुख्यविषयः प्राणविद्या तथा प्रतीकोपासना अस्ति। उपनिषत्सु वर्णितो विषयः निर्गुणब्रह्मप्राप्तेः उपायः अस्ति। यद्यपि अत्र भेदः वर्तते तथापि द्वौ अपि ग्रन्थौ रहस्यग्रन्थौ स्तः।



## पाठगतप्रश्नाः-१

१. आरणयकं केषां ग्रन्थानां परिशिष्टभागः।

२. सायणाचार्यमतेन आरण्यकनामकरणस्य सार्थकश्लोकं लिखत?

३. आरण्यकस्य मननाय उपयुक्तस्थानं किम्।



४. यज्ञानुष्ठानं दार्शनिकविचारश्च कस्य ग्रन्थस्य मुख्यविषयः।

५. आरण्यकं कस्य सारभूतम्।

६. आरण्यकं वेदेभ्य ओषधिभ्यः सारभूतमित्यत्र किं प्रमाणम्।

७. रहस्यब्राह्मणं किम्।

८. आरण्यकं कस्य गूढरहस्यं प्रतिपादयति।

९. रहस्यशब्देन कस्याः विद्यायाः मुख्यतया प्रतिपादनं क्रियते।

१०. आरण्यकोपनिषदोः कः भेदः।

## ६.२) ऐतरेयारण्यकम्

ऋग्वेदस्य द्वयोः आरणयकयोः मध्ये अन्यतमम् इदम् आरण्यकमस्ति। इदमारण्यकम् ऐतरेयब्राह्मणस्यैव परिशिष्टभागोऽस्ति। अस्मिन् पञ्च आरण्यकानि सन्ति। एतानि आरण्यकानि भिन्नग्रन्थरूपेण मन्यन्ते।

प्रथमारण्यके महाव्रतस्य वर्णनमस्ति। महाव्रतमिदम् ऐतरेयब्राह्मणस्य प्रपाठकत्रयस्य गवामयनस्य एव एकांशोऽस्ति। द्वितीयप्रपाठकस्य प्रथमेषु त्रिषु अध्यायेषु उक्थ-निष्कैवल्य-शस्त्र-प्राणविद्या-पुरुषप्रभृतीनां विवेचनमस्ति। चतुर्थ-पञ्चम-षष्ठाध्यायेषु ऐतरेयोपनिषद् अस्ति। तृतीयारण्यकस्य अपरं नाम अस्ति संहितोपनिषद्। अस्याम् उपनिषदि संहिता-पदक्रमपाठानां वर्णनं तथा स्वरव्यञ्जनादिस्वरूपस्य च विवेचनमस्ति। अस्मिन् खण्डे शाकल्यस्य माण्डुकेयस्य च मतानाम् उल्लेखोऽस्ति। अयम् अंशः असन्दिग्धरूपेण प्रातिशाख्यनिरुक्ताभ्यां प्राचीनतरः अस्ति। व्याकरणविषयस्य अपि अयमंशः नितान्तं प्राचीनः अस्ति। एतेन अस्य आरण्यकस्य समयस्य पूर्वसीमा विक्रमपूर्वसहस्रशतकम् इति मन्तव्यं भवति। तेन आरण्यकमिदं यास्कपूर्ववर्ति इति मन्यन्ते नैके। यतः अस्मिन् अंशे निर्भुज-प्रतृण्ण-सन्धिसंहितादयः पारिभाषिकशब्दाः प्रयुक्ताः सन्ति। चतुर्थारण्यकम् अतीव लघु अस्ति। अस्मिन् आरण्यके महाव्रतस्य पञ्चमे दिने प्रयोक्तव्या महानाम्न्यः ऋचः सन्ति। अन्तिमारण्यके निष्कैवल्यशस्त्रस्य वर्णनमस्ति। एतेषु आरण्यकेषु प्रथमत्रयस्य रचयिता ऐतरेयः, चतुर्थस्य आश्वलायनः तथा पञ्चमस्य शौनक इति मन्यते। अयं शौनको बृहद्देवतायाः निर्माताऽस्ति। डा० कीथमहोदयः आरण्यकमिदं निरुक्तात् परं प्रणीतम् इति मत्वा अस्य समयं विक्रमपूर्वं षष्ठशतकं मन्यते। किञ्च यथार्थत आरण्यकमिदं निरुक्तात् प्राचीनतरमस्ति। आरण्यकमिदं महिदास-ऐतरेयस्य प्रथमत्रयाणाम् आरण्यकानां कर्त्तृत्वेन ऐतरेयब्राह्मणस्य एव समकालिकम् इति सिद्धं भवति।



## पाठगतप्रश्नाः-२

११. ऐतरेयारण्यकं कस्मिन् वेदे अन्तर्गतम्।



१२. ऐतरेयारण्यकं कस्य परिशिष्टग्रन्थः।

१३. ऐतरेयस्य प्रथमारण्यके कस्य वर्णनम् अस्ति।

१४. द्वितीयप्रपाठकस्य आदिमेषु त्रिषु अध्यायेषु कस्य वर्णनम् अस्ति।

१५. अन्तिमारण्यके कस्य वर्णनम् अस्ति।

१६. तृतीयारण्यकस्य अपरं नाम किम्।

१७. संहितोपनिषदि कस्य वर्णनम् अस्ति।

१८. द्वितीयचतुर्थारण्यकयोः रचयितारौ कौ।

१९. बृहद्देवतायाः निर्माता कः।

२०. अर्वाचीनमित्यस्य कः अर्थः।

## ६.३) शाङ्ख्यायनारण्यकम्

ऋग्वेदस्येदं द्वितीयमारण्यकमस्ति। अस्मिन् पञ्चदश आध्यायाः सन्ति। आतृतीयाध्यायात् षष्ठ्याध्यायपर्यन्तं कौषीतकि-उपनिषदिति कथ्यते, तथा सप्तमाष्टमौ अध्यायौ संहितोपनिषदिति कथ्येते। एतद्भिन्नेषु अध्यायेषु आरण्यकस्य मुख्यविषयाणां प्रतिपादनमस्ति। प्रथम-द्वितीयाध्याययोः महाव्रतस्य वर्णनम् उपलब्धमस्ति। अत्र एकः यज्ञः अस्ति, गवामयन-नामकयज्ञः इति तस्य नाम। तस्य यज्ञस्य यः अन्तिमदिवसः ततः पूर्वस्मिन् दिवसे महाव्रतस्य अनुष्ठानं भवति। अस्मिन् एव दिने सवनत्रयमपि भवति। अस्मिन् आरण्यके होतृनामकः यः ऋत्विक् अस्ति तेन प्रयुक्तानां शास्त्राणां वर्णनमस्ति। महाव्रतस्य सर्वाणि आनुष्ठानिकानि विधानानि शाङ्खायनश्रौतसूत्रे विद्यते। अस्य अनुष्ठानस्य सर्वतः महत्त्वपूर्णम् अङ्गं महदुक्थम् अथवा निष्कैवल्यशस्त्रम्। अस्य सविस्तृतं वर्णनं तत्र एव अन्येषु अध्यायेषु (१।४।५,२=१-१७) उपलभ्यते।

कौषीतकिब्राह्मणोपनिषद् चतुर्षु अध्यायेषु विभक्ता अस्ति। एषा उपनिषत् शाङ्खायनारण्यकस्य एव अंशो वर्तते। एषा कौषीतकिब्राह्मणोपनिषत् तथा संहितोपनिषत् च अध्यायस्य पुरोभागे वर्तेते। इमे द्वे उपनिषदौ शाङ्खायनारण्यकस्य अविभाज्यम् अङ्गमस्ति। अस्य वर्णनमुपनिषदां वर्णनप्रसङ्गे अग्रे भविष्यति। नवमाध्याये प्राणस्य श्रेष्ठताया वर्णनमस्ति। दशमाध्याये आन्तराग्निहोत्रस्य साङ्गम् उपाङ्गम् इत्यादिकं वर्णितमस्ति। अस्य अध्यायस्य कथनमस्ति यद् अग्निहोत्रेण यस्य देवस्य सन्तृप्तिः विधीयते, यस्य वा देवस्य आप्यायनं क्रियते, स देवः जीवस्य अभ्यन्तरे एव विद्यमानः अस्ति। बाह्याग्निहोत्रेण अस्य तृप्तिर्भवति। यो हि साधकः तत्त्वमिदम् अज्ञात्वा केवलं बाह्यहवने एव आसक्तो भवति, सः भस्मचये एव जुहोति। मृत्योः अपसारणाय एकस्य विशिष्टयागस्य एकादशतमाध्याये विस्तृतं विवरणं प्रदत्तमस्ति। द्वादशतमाध्याये बिल्वफलेन मणिनिर्माणस्य प्रक्रियायाः, कालस्य तथा स्वरूपस्य च वर्णनमस्ति। यं धृत्वा साधकः शत्रूणामुपरि विजयं लभते। त्रयोदश-चतुर्दशयोः अध्याययोः अतिसंक्षेपेण आत्मनः ब्रह्मणा

सह एकत्वप्राप्तिः जीवस्य सर्वोत्तमोपलब्धिः इति कथ्यते। 'आत्मावगम्योऽहं ब्रह्मास्मीति' इयम् एव उक्तिः अस्यारण्यकस्य सर्वोत्तमः उपदेशः अस्ति-

**'ऋचां मूर्धानं यजुषामुत्तमाङ्गं**
**साम्नां शिरोऽथर्वणां मुण्डमुण्डम्।**
**नाधीतेऽधीत वेदमाहुस्तमज्ञं**
**शिरस् छित्वासौ कुरुते कबन्धम्।।'**

पञ्चदशतमाध्याये आचार्यस्य वंशवर्णनमस्ति। अनेन अध्यायेन स्पष्टरूपेण प्रतीतो भवति यद् अस्य आरण्यकस्य द्रष्टुः ऋषेर्नाम गुणाख्यशाङ्ख्यायनः आसीत्। तस्य गुरोर्नाम कहोलः कौषीतकिः इति आसीत्। उभौ एतौ अन्तिमाचार्यौ स्तः। अनेन एव कारणेन अस्य शाङ्ख्यायनारण्यकस्य अन्तर्गता उपनिषद् कौषीतकि-नाम्ना ख्याता अस्ति।



## पाठगतप्रश्नाः-३

२१. ऋग्वेदस्य द्वितीयम् आरण्यकं केन नाम्ना कथ्यते।
२२. कौषितकी उपनिषद् कस्यारण्यकस्य कं कम् अध्यायं अभिव्याप्य आख्यायते।
२३. शांख्यायनारण्यकस्य सप्तमाष्टमाध्यायौ अभिव्याप्य का उपनिषद् तिष्ठति।
२४. महाव्रतानुष्ठानं कदा भवति।
२५. महाव्रतानुष्ठानेन विहितानां विधानानां वर्णनं कुत्र अस्ति।
२६. मृत्योः अपसारणाय विशिष्टयागस्य वर्णनं कुत्र अस्ति।
२७. द्वादशाध्याये कस्य वर्णनम् अस्ति।
२८. जीवब्रह्मणोः ऐक्यं शांख्यायनारण्यके कस्मिन् अध्याये वर्णितमस्ति।
२९. पञ्चदशाध्याये किं वर्णितमस्ति।
३०. शांख्यायनारण्यकस्य द्रष्टा कः।
३१. शाङ्यायनारण्यकस्य द्रष्टुः गुरोः नाम किम्।

## ६.४) बृहदारण्यकम्

आरण्यकमिदं यजुर्वेदेन सह सम्बद्धः अस्ति। किञ्च आत्मतत्त्वस्य विशेषविवेचकत्वेन इयम् उपनिषदपि कथ्यते। इदमपि आरण्यकं प्राचीनतमं मान्यतमं च अस्ति। कृष्णयजुर्वेदीयायाः मैत्रायणीयशाखाया अपि एकम् आरण्यकमस्ति, यत् मैत्रायणीयोपनिषद्-इति नाम्ना ख्यातमस्ति।





## पाठगतप्रश्नाः-४

३२. बृहदारण्यकं केन वेदेन सम्बद्धः अस्ति।

३३. बृहदारण्यकस्य उपनिषदिति कथनस्य किं कारणम्।

३४. कृष्णयजुर्वेदीयायां मैत्रायणीशाखायाम् अन्तर्गतायाः उपनिषदः नाम किम्।

## ६.५) तैत्तिरीयारण्यकम्

अस्मिन् आरण्यके दश परिच्छेदाः अथवा प्रपाठकाः सन्ति। प्रपाठकोऽयं सामान्यतः 'अरण' इति पदेन ज्ञायते। अस्य नामकरणम् अपि तेनैव भवति। यथा प्रथमस्य प्रपाठकस्य नाम अस्ति- 'भद्रः', द्वितीयस्य- 'सहैव', तृतीयस्य- 'चितिः', चतुर्थस्य- 'युञ्जते', पञ्चमस्य- 'देव वै', षष्ठस्य- 'परे', सप्तमस्य- 'शिक्षा', अष्टमस्य- 'ब्रह्मविद्या', नवमस्य- 'भृगुः', दशमस्य- 'नारायणीयः' इति। अस्मिन् सप्तम-अष्टम-नवम-प्रपाठकाः मिलित्वा 'तैत्तिरीयोपनिषदि'ति कथ्यते। दशमप्रपाठकोऽपि महानारायणीयोपनिषदिति कथ्यते। अयं प्रपाठकः आरण्यकस्य परिशिष्टभागः वर्तते। प्रपाठकानां विभाजनम् अनुवाकेषु अस्ति। नवमप्रपाठकपर्यन्तम् अनुवाकसंख्या १०७ अस्ति। तैत्तिरीयब्राह्मणमिव अत्रापि प्रत्येकस्मिन् अनुवाके दशानां वाक्यानाम् एकः अङ्कः भवति। प्रत्येकं दशकस्य अन्तिमं पदम् अनुवाकस्य अन्तिमे परिगणितं भवति। अस्मिन् आरण्यके ऋङ्मन्त्राः उद्धृताः।

प्रथमः प्रपाठकः आरुण-केतुनामकस्य अग्नेः उपासनायाः तथा तदर्थम् इष्टिकाचयनस्य वर्णनं करोति। द्वितीयप्रपाठके स्वाध्यायस्य तथा पञ्चमहायज्ञानां वर्णनमस्ति। अत्र गङ्गा-यमुनयोः मध्यदेशः पवित्रः, तथा मुनीनां निवासाय उत्कृष्टभूमिः वर्णिता अस्ति। तृतीयप्रपाठकः चातुर्होत्रचितेः उपयोगिनां मन्त्राणां सङ्ग्रहोऽस्ति। चतुर्थाध्याये प्रवर्ग्यस्य उपयोगिनां मन्त्राणां सङ्ग्रहोऽस्ति। अत्र कुरुक्षेत्रस्य खाण्डवस्य च वर्णनं भौगोलिकस्थितेः अनुसारेण एवाऽस्ति। अस्मिन् प्रपाठके अभिचारमन्त्राणामपि सत्ता वर्तते। आभिचारिकमन्त्राणां प्रयोगः शत्रूणां नाशाय भवति। ४।२७ मन्त्रे तथा ४।३७ मन्त्रे 'छिन्धी भिन्धी हन्धी कट' एवंविधानां मन्त्राणां स्पष्टरूपेणात्र संकेतो वर्तते। ४।३८ मन्त्रे अथर्ववेदीयम् आभिचारिकमन्त्रं प्रति स्फुटरूपेण सङ्केतः प्राप्यते। पञ्चमे प्रपाठके यज्ञीयानां सङ्केतानाम् उपलब्धिः भवति। षष्ठे प्रपाठके पितृमेधसम्बन्धिनां मन्त्राणाम् उल्लेखोऽस्ति। सप्तम-अष्टम-नवमप्रपाठकेषु तैत्तिरीयोपनिषदस्ति। दशमे प्रपाठके नारायणीयोपनिषदस्ति। अस्य प्रपाठकसंख्याऽपि निर्दिष्टा नास्ति।

अस्मिन् आरण्यके स्थाने स्थाने कतिपयाः विशिष्टाः वार्ताः अपि प्राप्यन्ते। यथा (१) कश्यपस्यार्थो भवति सूर्यः। अस्य व्युत्पत्तिः पर्याप्तरूपेण वैज्ञानिकी वर्तते। ('कश्यपः पश्यको भवति। यत् सर्वं परिपश्यति सौक्ष्म्यात्' १।८।८) अर्थात् पश्यकशब्दात् वर्णव्यत्ययस्य नियमेन कश्यपशब्दः निष्पन्नो भवति। अनेन प्रकारेण वर्णव्यत्ययेन निष्पन्नस्य शब्दस्य सुष्ठु उदाहरणमिदम् अस्ति। (२)

पाराशर्यव्यासस्यापि अत्र उल्लेखः प्राप्यते (१।९।२)। (३) द्वितीयप्रपाठकस्यारम्भे एव सन्ध्यायां प्रयुक्तस्य सूर्यस्य अर्घजलस्य महिमा वर्ण्यते। तेन जलप्रभावेण मन्देहनामकस्य दैत्यस्य सर्वथा विनाशो भवति (२।२)।

सामवेदेन सम्बद्धम् अप्येकम् आरण्यकमस्ति। आरण्यकमिदं तवलकारारण्यकमिति नाम्ना प्रसिद्धमस्ति। इदमेव आरण्यकं 'जैमिनीयोपनिषद्ब्राह्मणमि'ति कथ्यते। अस्य चत्वारोऽध्यायाः सन्ति। प्रत्येकस्मिन् अध्याये अनुवाकाः सन्ति। चतुर्थाध्यायस्य दशमानुवाके प्रसिद्धः तवलकारः किंवा केनोपनिषदस्ति। अथर्ववेदस्य न किमपि आरण्यकम् उपलब्धमस्ति। अनेन वेदेन सम्बद्धाः या उपनिषदः सन्ति, ताः कस्यापि आरण्यकस्यांशो न भूत्वा प्रारम्भादेव स्वतन्त्रग्रन्थरूपेण विद्यमानाः सन्ति।

पुराणेषु आरण्यकस्य आचार्यरूपेण शौनकस्य नाम उल्लिखितमस्ति- 'शौनको नाम मेधावी विज्ञानारण्यके गुरुः' (पद्मपुरा० ५।१।१८) पुराणस्य वाक्यमिदं यथार्थमस्ति। यतः आचार्यशौनकः एको ब्रह्मवेत्ता ऋषिः आसीत्। अनेन वेदानाम् अध्यात्मपरका व्याख्या कृतास्ति। यतः अस्य वामीयभाष्ये आत्मानन्देन लिखितम्- 'अध्यात्मविषयां शौनकादिरीतिम्'। पद्मपुराणस्य विज्ञानारण्यकशब्दोऽपि आरण्यकस्वरूपस्य परिचायकोऽस्ति। आरण्यकं विज्ञानस्य, विशिष्टज्ञानस्य, अध्यात्मज्ञानस्य वा बोधको ग्रन्थोऽस्ति, इत्यपि अनेन ज्ञायते।



## पाठगतप्रश्नाः-५

३५. प्रपाठकः सामान्यतया केन नाम्ना ज्ञायते।

३६. तृतीय-सप्तम-अष्टमप्रपाठकानां नामानि लिखत ।

३७. अन्तिमप्रपाठकस्य नाम किम्।

३८. तैत्तिरीयारण्यकस्य के अध्यायाः तैत्तिरियोपनिषद् इति कथ्यन्ते।

३९. तैत्तिरीयारण्यके कस्मिन् प्रपाठके गङ्गायमुनयोः कथा वर्णिता अस्ति।

४०. पञ्चमप्रपाठके कस्य वर्णनमस्ति।

४१. परे इति कस्य प्रपाठकस्य नाम ।

४२. काश्यपस्य कः अर्थः।

४३. द्वितीयप्रपाठकस्य आरम्भे किं किं वर्णितमस्ति।

४४. प्रपाठकानां विभाजनं कथं भवति।

४५. सामवेदसम्बन्धिनः आरण्यकस्य नाम किम्।

४६. तवलकारारण्यकं केन नाम्ना कथ्यते।

४७. केनोपनिषद् कस्मिन् अनुवाके अस्ति।

४८. आरण्याचार्यः कः।

४९. वेदानाम् अध्यात्मिकपरका व्याख्या केना कृता अस्ति।



## ६.६) अथ उपनिषदां सामान्यपरिचयः

भारतीयदर्शनसाहित्ये सन्ति त्रीणि श्रुतिस्मृतिन्यायाख्यानि प्रस्थानानि। तानि वेदान् एव अवलम्ब्य स्थितानि। तानि मानवजीवनस्य चरमं लक्ष्यं तत्प्राप्तिसाधनम् च उपदिशन्ति। उपनिषत् प्रस्थानत्रय्यां प्रथमप्रस्थानम् आवहति यतो हि एषा एव भारतीयविचारशास्त्रस्य श्रेष्ठः उपजीव्यग्रन्थः। श्रीमद्भगवद्गीता द्वितीयं प्रस्थानमिति कथ्यते। कथं गीता द्वितीयप्रस्थानम् इति अधःस्थितेन श्लोकेन स्पष्टं भवति-

**'सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।**

**पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्।।'**

बादरायणव्यासप्रणीतं ब्रह्मसूत्रं तृतीयप्रस्थानमस्ति। तत्र आपाततो विरोधिनाम् उपनिषद्वाक्यानां समन्वयः सम्यक् प्रदर्शितः। तेन सर्वेषामपि वाक्यानां ब्रह्मनिष्ठत्वं सिध्यति। अपि च तार्किकाणां युक्तयोऽपि अत्र निराकृताः सन्ति। भारतीया वैदिकधर्मग्रन्था दर्शनानि च इदमेव प्रस्थानत्रयम् अवलम्बन्ते।

उप-नि-पूर्वकात् विशरणगत्यवसादनार्थकात् 'षद्लृ'-धातोः क्विप्प्रत्यये रूपम् उपनिषदिति। उपनिषदाम् अध्ययनेन ऐहिकविषयेषु तथा आमुष्मिकविषयेषु च वैराग्यं स्वीकृतवतां मुमुक्षूणां संसारस्य बीजभूता विद्या नश्यति। तदा मुमुक्षुः पुरुषः ब्रह्म प्राप्नोति, दुःखानि च दूरीभवन्ति। ब्रह्मणः स्वरूपस्य तत्प्राप्त्युपायस्य जीवस्य जगतश्च तथा आत्मादिविषयाणां सविस्तरं वर्णनम् उपनिषदि अस्ति। अतः अस्य 'उपनिषद्' इत्येषा संज्ञा युक्ता एव।

'सर्वोपनिषदां मध्ये सारमष्टोत्तरं शतम्' इत्येतद् मुक्तिकोपनिषद्वाक्यम्। एतेन ज्ञायते यद् उपनिषदः अष्टोत्तरशततः अपि अधिका आसन्। किन्तु अष्टोत्तरशतसंख्याकाः उपनिषदः एव प्राप्ताः। एतासु उपनिषत्सु प्रायेण द्वादश उपनिषदः प्राचीनाः विशदतया च विषयं प्रतिपादयन्ति। अतः एताः प्रामाणिकाः भवन्ति। तत्र १० उपनिषदः ऋग्वेदसम्बद्धाः, १९ उपनिषदः शुक्लयजुर्वेदसम्बद्धाः, ३२ कृष्णयजुर्वेदसम्बद्धाः, १६ सामवेदसम्बद्धाः, ३१ अथर्ववेदसम्बद्धाः। वेदान्ताचार्याः एतासाम् उपनिषदां व्याख्यानानि विरचितवान्। तासु अपि दश उपनिषदः प्रसिद्धाः।

ऋग्वेदीयोपनिषत्सु एतरेय-कौषीतकी, सामपरकोपनिषत्सु छान्दोग्य-केनोपनिषदौ, कृष्णयजुर्विषयकासु उपनिषत्सु तैत्तिरीय-महानारायण-कठ-श्वेताश्वेतर-मैत्रायण्युपनिषदः, शुक्लयजुरित्यधिकृत्य लिखिता ईशावास्योपनिषद् बृहदारण्यकं किञ्च अथर्ववेदीयासु मुण्डक-माण्डुक्य-प्रश्नोपनिषदः नितरां प्रथिताः प्राचीनाः सर्वत्र लभ्यमानाश्च सन्ति। मुण्डकोपनिषदि उपनिषदां संख्या निम्नरूपेण वर्णितास्ति-

**'ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तित्तिरिः।**



**ऐतरेयं च छान्दोग्यं बृहदारण्यकं दश।।'**

एतासु दश उपनिषदः प्रसिद्धाः- ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तैत्तिरीय-ऐतरेय-छान्दोग्य-बृहदारण्यकोपनिषदः। किञ्च श्वेताश्वेतरोपनिषद् अपि प्रसिद्धा।

कतिचन उपनिषदो गद्यात्मिकाः, कतिचन पद्यात्मिकाः कतिचन गद्यपद्योभयात्मिकाश्च। आसामुपनिषदां कालो विभिन्नः, परस्मिन् काले प्रसिद्धाः कतिचन उपनिषदो बुद्धकालात् प्राचीनाः इति संस्कृतसाहित्यस्य इतिहासविदो वदन्ति।

सप्तदशशतके दाराशिकोहनामा शाहजहॉन-नामकस्य सम्राजः पुत्रः ५० संख्यकाः उपनिषदः पारसीभाषायां ब्राह्मणपण्डितानां साहाय्येन अनूदितवान्। शोपेन हावेर (Shopen Howers) -नाम्ना प्रसिद्धो वैदेशिको दार्शनिकः उपनिषदः स्वगुरुषु गणयति स्म। सम्प्रति अपि पाश्चात्येषु उपनिषदां महान् प्रभावो विद्यते, प्रायः सर्वासु एव सभ्यभाषासु आसाम् उपनिषदाम् अनुवादो जातः।

उपनिषद् अतिसरलशैल्या तत्त्वं कथयति, तेन तासां महत्त्वं लोकप्रियत्वं च प्रतिदिनं वर्धते। यथा कठोपनिषदि-

**'आत्मानं रथिनं विद्धि शरीरं रथमेव तु।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च।।**
**इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।**
**आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः।।'**

भगवद्गीतापि उपनिषदेव इति बोध्यम्।

पूर्वमेवोक्तं मया इमाः उपनिषद एकस्मिन् काले न प्रणीता अपि तु काले काले ताः रचिता अभूवन्। प्रधानाः उपनिषदो बुद्धात् प्राक् एव प्रणीताः। आसामुपनिषदां कः कालः कः वा एतेषां मध्ये पारस्परिकसम्बन्धः इति ज्ञातुम् प्राचीनविद्वांसः अतीव उद्योगं कृतवन्तः। जर्मनविद्वान् डायसनमहोदयः तु उपनिषदं चतुर्षु स्तरेषु विभक्तां कृतवान्।

**(क) प्राचीनगद्योपनिषदः**- यासां गद्यं ब्राह्मण-गद्यमिव प्राचीनं, लघुकायं सरलं च अस्ति। यथा- (१) बृहदारण्यकोपनिषद्, (२) छान्दोग्योपनिषद्, (३) तैत्तिरीयोपनिषद्, (४) ऐतरेयोपनिषद्, (५) कौषीतकि-उपनिषद् (६) केनोपनिषच्चेति।

**(ख) प्राचीनपद्योपनिषदः**- यासां पद्यं प्राचीनं, सरलं तथा वैदिकपद्यम् इव अस्ति। यथा- (७) कठोपनिषद्, (८) ईशोपनिषद्, (९) श्वेताश्वेतरोपनिषद् (१०) महानारायणोपनिषच्चेति।

**(ग) उत्तरकालिकगद्योपनिषदः**- (११) प्रश्नोपनिषद्, (१२) मैत्रायणीयोपनिषद् (१३) माण्डूक्योपनिषच्चेति।

**(घ) आथर्वणोपनिषदः**- यासामुपयोगः तान्त्रिकोपासनायां विशिष्टरूपेण स्वीकृतमस्ति- (१) सामान्योपनिषद्, (२) योगोपनिषद्, (३) सांख्यवेदान्तोपनिषद्, (४) शैवोपनिषद्, (५) वैष्णवोपनिषद्, (६) शाक्तोपनिषच्चेति।



## वेदाध्ययनम्

अस्मिन् क्रमसाधने बहून् दोषान् दर्शयित्वा डॉ० बेल-वेलकर-राणाडेमहोदयाभ्याम् एकाम् अभिनवयोजनां प्रस्तुतवान्। Belvelkar and Ranade- History of Indian Philosophy. Vol २ p.p. अस्मिन् ग्रन्थे ८७-९० पृष्ठे उपनिषदां रचनाकालः प्रदर्शितः किन्तु स एतावान् काल्पनिकः अप्रामाणिकः च वर्तते यत् विश्वासयोग्यः न भवति। ईशावास्योपनिषदः द्वितीयस्तरे स्थापनं कदापि न्यायसङ्गतं न भवति। यतो ह्यस्मिन् यज्ञस्य महत्त्वं ब्राह्मणकाले एव स्वीकृतमस्ति ('कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः') तथा बृहदारण्यके कर्मसंन्यासभावनायाः घोषणा नास्ति एव इति ('पुत्रैषणायाश्च लोकैषणायाश्च ह्युत्थाय भिक्षाचर्यं चरन्ति'- बृहदारण्य०)। अन्यासाम् उपनिषदाम् इव ईशोपनिषद् आरण्यकस्य अंशो न भूत्वा माध्यन्दिनसंहितायाः भागः अस्ति। मुक्तिकोपनिषदः मान्यपरम्परानुसारेण इयं समस्तानाम् उपनिषदां गणनायां प्रथमस्तरीया एव अस्ति। अतो बेलवेलकर-महोदयस्य कथनं कस्यापि तत्त्वजिज्ञासोः जनस्य हृदये विश्वासं नोत्पादयति।

श्रीचिन्तामणिविनायकवैद्योऽपि स्वग्रन्थे उपनिषदां प्राचीनतां प्रमाणयितुं साधनद्वयं समुपस्थापयति। विष्णोः शिवस्य च परदेवस्वरूपे वर्णनं, प्रकृति-पुरुषस्य तथा सत्त्व-रजस्तमसां त्रिविधगुणानां साङ्ख्यसिद्धान्तस्य प्रतिपादनं च। अयं सम्यक् सिद्धान्तः इति प्रतिभाति। तिलकमहोदयानुसारेण उपनिषत्कालः १९०० वि० पूर्वं शतकेन भवितव्यम्। अनेन प्रकारेण उपनिषत्कालस्य समारम्भः २५०० वि० पूर्वं शतकं कथयितुं शक्यते।

वस्तुतः आरण्यकस्य परिशिष्टभूता उपनिषत्। आरण्यके आरब्धा अध्यात्मतत्त्वालोचना उपनिषत्सु एव परां स्फूर्तिं लभमाना परिसमाप्ता। वेदस्य अन्तिमत्वात् लक्ष्यत्वात् च वेदशिरोभूता उपनिषद् एव वेदान्ता इत्युच्यन्ते। उपनिषच्छब्दस्यार्थो ब्रह्मविद्या। ब्रह्मविद्या संसाररिणः सादयति विशादयति शिथिलयति। ब्रह्मविद्यैव उपनिषत् तथापि यथा आयुर्वर्द्धके घृते आयुर्वै घृतम् इति आयुश्शब्दस्य औपचारिकः प्रयोगो भवति तद्वत् ब्रह्मविद्यायाः प्रकाशके ग्रन्थेऽपि उपनिषच्छब्दस्य औपचारिकः प्रयोगो भवति। ब्रह्मैव एकं सद् अन्यत् सर्वं रज्जौ सर्प इव ब्रह्मणि अविद्यया आच्छादितम् असदेव। जीवा हि अविद्यायाः प्रभावात् असद् वस्तु सद्रूपेण पश्यन्ति। स्वरूपतो निष्कामा ब्रह्मभूता अपि स्वस्वरूपं विस्मृत्य अभिन्नमपि भिन्नं मत्वा कामयन्तः द्विषन्तो वा कर्माणि अनुतिष्ठन्ति। तेन च ते तेषां कर्मणां शुभाशुभं फलम् उपभुञ्जते। यावत् मायाया अपाकृतिः न भवति तावत् इयम् अविरामा संसारावृत्तिः चलति। अतः निष्कामकर्मद्वारा यदा चित्तशुद्धिः भवति तदा इहामुत्रफलभोगविरागवान् शमदमादिषट्सम्पत्तिम् अर्जयित्वा संसारतापदाहम् असहमानो मुमुक्षुः यदि ब्रह्मज्ञं गुरुमुपसद्य तन्मुखाद् वेदान्तवाक्यं श्रुत्वा मननं निदिध्यासनं च आचरति तदा समाधौ ब्रह्मणि लीनस्य तस्य माया विध्वस्ता भवति। सर्वत्र आत्मानम् आत्मनि च सर्वम् अवलोकयति सः। तस्य किमपि द्वेष्यं काम्यं वा न तिष्ठति। तदर्था चेष्टापि न भवति। कर्माभावात् फलमपि न फलति। फलाभावात् फलोपभागाय शरीरपरिग्रहोऽपि नावश्यकः। स ब्रह्मवित् पुनर्न जायते। यावत् प्रारब्धक्षयो न जायते तावत् स शरीरधारणाय आवश्यककर्ममात्रम् अनुतिष्ठति कर्तव्यमात्रबुद्धया। यथा पुरुषः सिक्थमूर्तिं पश्यन् तस्याः सिक्थपिण्डमात्रस्वरूपतामपि पश्यति, तद्वत् ब्रह्मविदपि जगत् सर्वं पश्यन्नपि ब्रह्मस्वरूपतामपि पश्यति। क्षीणे च प्रारब्धे सर्पवत् शरीरं त्यक्त्वा ब्रह्मणि लीयते। ब्रह्मैव सद् ब्रह्म अप्येति इति वेदान्तसारः।



**क) ऋग्वेदे मुख्या उपनिषदः - ऐतरेयोपनिषत्, बह्वृचोपनिषत्, निर्वाणोपनिषत् चेति।**

**ख) सामवेदे मुख्या उपनिषदः - छान्दोग्योपनिषत्, केनोपनिषत्, सन्न्यासोपनिषत् चेति।**

**ग) कृष्णयजुर्वेदे मुख्या उपनिषदः - तैत्तिरीयोपनिषत्, कठोपनिषत्, श्वेताश्वेतरोपनिषत् चेति।**

**घ) शुक्लयजुर्वेदे मुख्या उपनिषदः - बृहदारण्यकोपनिषत्, ईशोपनिषत्, भिक्षुकोपनिषत् चेति।**

**ङ) अथर्ववेदे मुख्या उपनिषदः - प्रश्नोपनिषत्, मुण्डकोपनिषत्, माण्डूक्योपनिषत्, नृसिंहतापनीयोपनिषत् चेति।**

एता विहाय अन्या अपि काश्चन उपनिषदः वर्तन्ते। श्रीमद्भगवच्छङ्कराचार्यपादैः यासाम् एकादशोपनिषदां भाष्याणि विरचितानि ताः सन्ति - 'ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-ऐतरेय-तैत्तिरीय-छान्दोग्य-बृहदारण्यक-श्वेताश्वतरोपनिषद' इति।

अधुना केनोपनिषदं तथा छान्दोग्योपनिषदं संक्षेपेण अवगच्छामः।

## ६.७) केनोपनिषद्

उपनिषीदति प्राप्नोति ब्रह्मत्यभावम् अनया इति उपनिषत्। उपनिषच्छब्देन प्राध्यान्यतो वेदान्त उच्यते। तदुच्यते वेदान्तो नाम उपनिषत्प्रमाणमिति। ईशादीनां दशानाम् उपनिषदां मध्ये केनोपनिषदः स्थानं द्वितीयम् आमनन्ति वेदान्तविदः। इयम् उपनिषद् सामवेदीयतलवकारशाखान्तर्गता। शङ्करभगवत्पादानां नये यद्यपि उपनिषच्छब्देन ब्रह्मविद्यैव उच्यते, तथापि ग्रन्थे उपनिषच्छब्दव्यवहारः सम्भवति। ब्रह्मविद्यायामुपनिषच्छब्दो मुख्यया वृत्त्या वर्तते, ग्रन्थबोधस्तु लक्षणया।

इयम् उपनिषद् केनेषितं पतति प्रेषितं मनः इत्यादिकात् मन्त्रादारभ्यते। तत्र मन्त्रादौ केनेति पाठात् केनोपनिषदिति अन्वयसंज्ञा। एवम् ईशावास्यमिदं सर्वम् इति मन्त्रांशमादाय ईशावास्योपनिषदिति नामापि श्रूयते। सर्वासामुपनिषदाम् अखण्डे ब्रह्मणि पर्यवसानाद् निर्विशेषमात्मतत्त्वम् उपनिषत्सु मुख्यतया प्रतिपाद्यम्। एवञ्च अस्या उपनिषदोऽपि तदेव प्रतिपाद्यं तत्त्वम्। शङ्करभगवत्पादानामस्यां महती रुचिः परिलक्ष्यते। एनां व्याख्यातुकामो भगवान् भाष्यकारः भाष्यद्वयं विरचितवान्। अस्या उपनिषद आरम्भः प्रश्नप्रतिवचनाभ्यां दृश्यते। रथादयः चेतनावद् अधिष्ठिताः प्रवृत्तिमर्हन्ति न अनधिष्ठिताः। मन-आदीनां च अचेतनानां लोके प्रवृत्तिर्दृश्यते। चेतनावतः अधिष्ठातुः अस्तित्वे तदेव लिङ्गम्। अतः करणानाम् अधिष्ठाता यश्चेतनावान् स किं विशेषणम् इति जिज्ञासोः प्रश्नः। तत्समाधानाय उत्तरगर्भोऽयं मन्त्र आम्नायते-

**श्रोत्रस्य श्रोत्रं मनसो मनो यद् वाचो ह वाचं स उ प्राणस्य प्राणः।**
**चक्षुषश्चक्षुः अतिमुच्य धीरा प्रेत्यास्माल्लोकादमृता भवन्ति।।** इति।

विक्रियादिविशेषरहितस्य आत्मनो मनआदिप्रवृत्तौ निमित्तत्वम् इति उत्तरार्थः। अत एव श्रीमदानन्दगिरिणा कृतायां टीकायां 'मन आदीनां यः प्रवर्तकः स किं विशेष इति प्रश्नस्य निर्विशेषता एव विशेष इति उत्तरम्' इति उक्तम्। एवञ्च सर्वोपाधिविनिर्मुक्तं तद् ब्रह्मतत्त्वं रूपरहितत्वात् चक्षुषा न गृह्यते। अशब्दत्वाद् वाचा न उच्यते। अतीन्द्रियत्वेन मनसा न मन्यते। अत्र एव 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते



तदेव ब्रह्म तं भेदं यदिदमुपासते' इत्यादयो मन्त्राः द्रष्टव्याः। इदमेव आत्मतत्त्वं सर्वैः अवश्यं साक्षात् करणीयम्। अन्यथा महती विनष्टिः स्यादेव। विज्ञाते तु तस्मिन् परे तत्त्वे, मृत्युमतिक्रम्य अमृतत्वम् अधिगच्छन्ति साधकाः। अत एव भूयो भूयो वार्तेयं वेदानां -'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति शम्।

## ६.८) छान्दोग्योपनिषत्

अत्र एका उपनिषत् संक्षेपेण उच्यते। सा च छान्दोग्योपनिषत्। सामवेदीयोपनिषत्सु अन्यतमा हि छान्दोग्योपनिषत्। उपनिषदियं सामवेदस्य छान्दोग्यब्राह्मणस्य अंशविशेषा। अष्टाध्यायसमन्विता इयमुपनिषत्। प्रत्येकम् अध्याये पुनः केचन खण्डाः सन्ति। साकल्येनात्र चतुःपञ्चाशदधिक-एकशतखण्डास्तथा अष्टाविंशत्यधिक-षट्शतमन्त्राः सन्ति। प्रथमाध्यायस्य प्रारम्भे ओङ्कारोपासना दृश्यते। एषा उपासना उद्गीतसङ्गीतस्य अङ्गभूता। तदुक्तम्

**'ओमित्येतदक्षरमुद्गीतमुपासीत'** इति।

तत्र कानिचन उपाख्यानानि सन्ति। तेष्वन्यतमं हि सत्यकामजावालयोः उपाख्यानम् , उपकोसलस्य उपाख्यानं चेति।कर्मोपासनाब्रह्मविद्यानां समन्वयोऽत्र आलोचितः। कर्मवदुपासनापि सकामनिष्कामभेदेन द्विविधा। ये जनाः शास्त्रीयाचारं न पालयन्ति तैः अधोगतिः प्राप्यते। तदुक्तम् -

**अथैतयोः पथोर्न कतरेणचन तानीमानि।**

**क्षुद्रान्यसकृदावर्तीनि भूतानि भवन्ति।।** इति।

ये जना उपासनात् इष्टापूर्तकर्मभ्यश्च विरमन्ते ते भूयो भूयः संसारचक्रे जीवरूपेण आविर्भवन्ति। कर्मणा चित्तशुद्धिर्जायते, उपासनया भक्तिभावो जागृतो भवति, तेनैव भवति ब्रह्मोपलब्धिः। गुरूपदेशोऽत्र मुख्यं प्रयोजनम् आवहति। इन्द्रवद् देवश्रेष्ठोऽपि ब्रह्मज्ञानलाभाय शतानि वत्सराणि गुरुगृहे यापितवान्।

षष्ठाध्याये आरुणि-श्वेतकेतोः उपाख्यानेन आत्मतत्त्वं विवृतम्। तत्र उद्दालकेन उक्तं ' स आत्मा तत्त्वमसि श्वेतकेतो' इति। आरुणिः श्वेतकेतुम् उपदिष्टवान् यत् सच्चिदानन्द आत्मैव ब्रह्मस्वरूपः। तेनैव जगत्सर्वं परिव्याप्तम्। स एव परमसत्यरूपः। सप्तमाध्याये नामब्रह्म-वाग्ब्रह्मादेः रूपमालोचितम्। अष्टमाध्याये वर्णितो ब्रह्मोपलब्धेरुपदेशः। उपनिषदः अन्तिमांशे वर्तते ब्रह्मोपासनाया वर्णनम्। तत्राम्नातं यो जनो ब्रह्मचर्य-गार्हस्थादीन् धर्मान् परिपाल्य इन्द्रियाणि संयम्य शास्त्रानुमोदितविषयं विहाय सर्वेषु विषयेषु हिंसां विजहाति, स एव ब्रह्मलोकं प्राप्नोति।



## पाठगतप्रश्नाः-६

५०. कः प्रस्थानत्रयस्य उपजीवी।

५१. प्रस्थानत्रयस्य नामानि लिखत ।

५२. गीतायाः द्वितीयप्रस्थानत्वेन किं प्रमाणम्।

५३. तृतीयप्रस्थानं केन प्रणीतम्।

५४. षद्लृधातोः कः अर्थः।

५५. उपनिषद्-शब्दस्य व्युत्पत्तिं लिखत?

५६. कतिविधा उपनिषदः आसन्।

५७. काः उपनिषदः अधुना लभ्यन्ते।

५८. ईशकेनकठ - इत्यादि श्लोकं पूरयत?

५९. ऋग्वेदीयोपनिषदां नामानि लिखत ।

६०. यजुर्वेदीयोपनिषदां नामानि लिखत ।

६१. कथम् उपनिषदः लोकप्रियाः।

६२. आत्मानं रथिनं विद्धि -- इत्यादिं श्लोकं पूरयत ।

६३. डयसनमहोदयानुसारेण उपनिषदः कतिविधाः भेदाः। के च ते।

६४. प्राचीनगद्योपनिषदि काः उपनिषदः अन्तर्गताः।

६५. उत्तरकालिकोपनिषदि काः उपनिषदः अन्तर्गताः।

६६. ईशावास्योपनिषदः प्राचीनपद्योपनिषदि स्थापनं न युक्तम्, तत्प्रमाणवाक्यं लिखत ।

६७. तिलकमहोदयानुसारेण उपनिषत्कालः कदा आरभ्यते।



## पाठसारः

अस्मिन् पाठे वयम् आदिमे भागे आरण्यकानां विषये विस्तरेण ज्ञातवन्तः। नगरे स्थित्वा वेदस्य तत्त्वज्ञानं सुदुष्करमासीत्। अतः पारमार्थिकस्वरूपस्य ज्ञानाय मुनयः अरण्ये एव स्वाश्रमादिकं निर्माय शिष्येभ्यः तत्त्वज्ञानम् उपदिष्टवन्तः। अतस्तस्मादेव आरण्यकग्रन्थानाम् उत्पत्तिः जाता। उच्यते च अरण्याध्ययनादेतद् आरण्यकमितीर्यते इति। ऐतरेयारण्यक - शाङ्खायनारण्यक -बृहदारण्यक-तैत्तिरीयारण्यकानां विषये भवन्तः सामान्यज्ञानं प्राप्तवन्तः। पाठस्य परस्मिन् भागे च उपनिषदां विषये उक्तम्। भारतीयविचारशास्त्रस्य सर्वश्रेष्ठः उपजीव्यग्रन्थः उपनिषदेव। आ बहोः कालाद् अस्माभिः



उपनिषदः पूज्यन्ते। उपनिषदि रस-गुण-अलङ्कारादिभिः गुम्फितैः शब्दराशिभिः ब्रह्मतत्त्वं प्रतिपादितम्। न केवलं सन्न्यासिनः, अपि तु संसारे स्तिताः सनातनजनाः तासाम् उपनिषदां श्रद्धया अध्ययनं कृत्वा तत्त्वज्ञानं लब्धुम् इच्छन्ति। अत्र मुख्यतया द्वे केनोपनिषत्-छान्दोग्योपनिषदौ संक्षेपेण व्याख्याते।



## पाठान्तप्रश्नाः

१. आरण्यकस्य सामान्यपिरचयं लिखत।
२. शाङ्ख्यायनारण्यकस्य सारं लिखत।
३. आरण्यकस्य भागानि तेषां नामनि प्रपाठकादीनि च चित्ररुपेण प्रकटयत।
४. ऐतरेयाण्यकविषये लिखत।
५. उपनिषदः सामान्यपरिचयं लिखत।
६. छान्दोग्योपनिषदं व्याख्यात।
७. केनोपनिषदं व्याख्यात।
८. तैत्तिरीयोपनिषदं व्याख्यात।
९. उपनिषदां सामान्यपरिचयं लिखत।



## प्रश्नानामुत्तराणि

### उत्तराणि-१

१. ब्राह्मणानाम्।
२. 'अरण्याध्यनादेतद् आरण्यकमितीर्यते।
अरण्ये तदधीयीतेत्येवं वाक्यं प्रवक्ष्यते।।'
३. अरण्यस्य एकान्तशान्तवातावरणम्।
४. आरण्यकस्य।
५. वेदेभ्यः ओषधिभ्यः।
६. 'आरण्यकञ्च वेदेभ्य ओषधिभ्योमृतं यथा।'
७. आरण्यकम्।
८. यज्ञस्य गूढरहस्यस्य।
९. ब्रह्मविद्यायाः।
१०. आरण्यकस्य प्रतिपाद्यविषयः प्राणविद्या, उपनिषदः प्रतिपाद्यविषयः निर्गुणब्रह्मणः प्राप्तिः इति तयोः प्रतिपाद्यविषये भेदः।



### उत्तराणि-२

११. ऋग्वेदे।

१२. ऐतरेयब्राह्मणस्य।

१३. महाव्रतस्य।

१४. निष्कैवल्यशस्त्र -प्राणविद्या-पुरुषप्रभृतीनाम्।

१५. निष्कैवल्यशस्त्रस्य वर्णनमस्ति।

१६. संहितोपनिषत्।

१७. पदक्रमपाठादीनां वर्णनम् अस्ति।

१८. यथाक्रमेण ऐतरेयः, आश्वलायनः।

१९. शौनकः।

२०. पुरातनम्।

### उत्तराणि-३

२१. शाङ्ख्यायनारण्यकम्।

२२. शाङ्ख्यायनारण्यकस्य आतृतीयाध्यायात् षष्ठ्याध्याय़पर्यन्तम्।

२३. संहितोपनिषत्।

२४. वर्षावधौ सम्पाद्यमानस्य गवामयननामकयज्ञस्य यः अन्तिमदिवसः तस्य समीपदिवसे पूर्वदिवसे वा।

२५. शाङ्ख्यायनश्रौतसूत्रे।

२६. एकादशतमे।

२७. बिल्वफलेन मणिनिर्माणस्य प्रक्रियायाः, कालस्य तथा स्वरूपस्य च।

२८. त्रयोदशचतुर्दशतमाध्याये।

२९. आचार्यस्य वंशवर्णनम् अस्ति।

३०. गुणाख्यशाङ्ख्यायनः।

३१. कौहलः कौषीतकि इति।

### उत्तराणि-४

३२. यजुर्वेदेन।

३३. अत्र आत्मतत्त्वस्य विशेषविवेचकत्वात्।

३४. मैत्रायणीयोपनिषत्।

### उत्तराणि -५

३५. अरण इति।

३६. यथाक्रमेण चितिः, शिक्षा, ब्रह्मविद्या।



३७. नारायणीयः।

३८. सप्तम -अष्टम-नवमप्रपाठकाः।

३९. द्वितीयप्रपाठके।

४०. यज्ञीयसंकेतानामुपलब्धिः।

४१. षष्ठ।

४२. सूर्यः।

४३. संध्यायां प्रयुक्तस्य सूर्यार्घस्य जलस्य महिमा वर्णिता अस्ति।

४४. अनुवाकेषु।

४५. तवलकारारण्यकम्।

४६. जैमिनीयोपनिषद्ब्राह्मणम्।

४७. चतुर्थाध्यायस्य दशमानुवाके।

४८. शौनकः।

४९. शौनकेन।

**उत्तराणि-६**

५०. वेदः।

५१. उपनिषत्,गीता,ब्रह्मसूत्रम्।

५२. 'सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्।।'

५३. बादरायणेन।

५४. विशरमगत्यवसादनार्थः।

५५. उपपूर्वकात् निपूर्वकात् षद्धातोः क्विपि उपनिषच्छब्दस्य निष्पत्तिः।

५६. अष्टोत्तरशततोऽप्यधिका।

५७. दश।

५८. 'ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तित्तिरिः।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं दश।।'

५९. एतरेय-कौषीतकी।

६०. तैत्तिरीय-महानारायण-कठ-श्वेताश्वतर-मैत्रायण्युपनिषद् ईशावास्योपनिषद् बृहदारण्यकम्।

६१. उपनिषद् अतिसरलशैल्यां तत्त्वं ग्राहयन्ति।

६२. **'आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च।।**



**इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।**
**आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः।।'**

६३. चतस्रः। प्राचीनगद्योपनिषत्, प्राचीनपद्योपनिषत्, उत्तरकालिकगद्योपनिषत्, अथर्वाणोपनिषत्।

६४. कठोपनिषद्, ईशोपनिषद्, श्वेताश्वतरोपनिषद् महानारायणोपनिषच्चेति।

६५. प्रश्नोपनिषद्, मैत्रायणीयोपनिषद् माण्डूक्योपनिषच्चेति।

६६. कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः'।

६७. २५०० वि पूर्वशतकम्।

## ।।इति षष्ठः पाठः।।



# ७

# वेदाङ्गसाहित्यम्

## प्रस्तावना

अङ्गशब्दस्य व्युत्पत्तिलभ्यः अर्थः अस्ति - 'उपकारकः' इति। 'अङ्ग्यन्ते ज्ञायन्ते अमीभिरिति अङ्गानि' अर्थाद् येन कस्य अपि वस्तुनः स्वरूपज्ञाने साहाय्यं प्राप्यते तद् अङ्गम् इति कथ्यते। वेदः स्वयम् एव एकः दुरूहो विषयः अस्ति। तदर्थज्ञाने तस्य कर्मकाण्डस्य प्रतिपादने यानि उपयोगीनि शास्त्राणि सन्ति तानि एव वेदाङ्गानि भवन्ति। वेदाङ्गानां ज्ञानं निखिलवेदज्ञानाय अत्यावश्यकम् एव। तेषां च विवरणम् अस्मिन् अध्याये क्रियते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- शिक्षाग्रन्थानां विषये विस्तारेण ज्ञास्यति।
- निघण्टुग्रन्थानां विषये अधिकतया ज्ञास्यति।
- अन्येषां वेदस्य अङ्गानां विषये ज्ञास्यति।
- यास्कस्य निरुक्तविषयकं ज्ञानं प्राप्स्यति।

## ७.१) भूमिका

**'अङ्ग्यन्ते ज्ञायन्ते अमीभिरिति अङ्गानि' इति व्युत्पत्तिवशात्** अङ्गशब्दस्य अर्थः भवति 'उपकारकः' इति। अर्थात् यत् कस्य अपि वस्तुनः स्वरूपज्ञाने साहाय्यं करोति तत् अङ्गम् इति कथ्यते। वेदः स्वयम् एव एकः दुरूहो विषयः वर्तते। वेदार्थस्य ज्ञानार्थं तस्य कर्मकाण्डस्य प्रतिपादनार्थं च यानि उपयोगीनि शास्त्राणि सन्ति तानि एव वेदाङ्गानि भवन्ति। वेदस्य यथार्थज्ञानलाभाय षण्णां विषयाणां ज्ञानम् अपेक्षितं भवति। वेदमन्त्राणाम् अवितथोच्चारणम् एव प्रथमम् आवश्यकं वस्तु अस्ति। शब्दमयमन्त्राणां यथार्थोच्चारणाय प्रवर्तमानं वेदाङ्गं शिक्षा इति अभिधीयते। वेदस्य मुख्यप्रयोजनं हि वैदिककर्मकाण्डस्य यागस्य च यथार्थानुष्ठाम्। अस्मिन् अर्थे प्रवृत्तम् अङ्गं कल्पः इति कथ्यते। कल्पस्य व्युत्पत्तिलभ्यः अर्थः भवति- **'कल्प्यते समर्थ्यते यागप्रयोगोऽत्र'** इति। व्याकरणं हि वेदानां रक्षकम्, वेदार्थस्य अवबोधने सहायकम्, अपि च प्रकृतिप्रत्ययोपदेशपुरःसरं पदस्वरूपस्य प्रतिपादकं वर्तते,



तस्मात् अर्थनिर्णायकसाधनेषु अन्यतमसाधनत्वेन तस्य प्रयोगः भवति, अस्मात् एव कारणात् व्याकरणं नाम वेदाङ्गं नितान्तम् एव प्रसिद्धं वर्तते, तत् च वेदाङ्गेषु श्रेष्ठस्थानम् अलङ्करोति। वैदिकपदानां व्युत्पादनं हि निरुक्तस्य विषयः अस्ति। निरुच्यते निश्शेषेण उपदिश्यते तत् तदर्थावबोधनाय पदजातं यत्र तन्निरुक्तम् इति कथ्यते। वेदाः छन्दोबद्धाः भवन्ति। अतः तेषाम् उच्चारणाय छन्दोज्ञानम् अत्यन्तम् आवश्यकम्। वरुणस्य विषये शुनःशेप-ऋषेः अयं प्रख्यातः मन्त्रः वर्तते -

**'निषाद धृतव्रतो वरुणः पस्त्यास्वा।**

**साम्राज्याय सुक्रतुः।।'**

यज्ञभागाः बहुविधाः सन्ति। केचन यज्ञाः संवत्सरसम्बन्धिनः सन्ति। केचन क्रतुसम्बन्धिनः च वर्तन्ते। केचन च तिथि-मास-पक्ष-नक्षत्रपरकाः सन्ति। तस्मात् ज्योतिष-नामकस्य वेदाङ्गस्य अपि स्वकीयं वैशिष्ट्यं विद्यते।

संक्षेपेण वैदिकमन्त्राणां यथार्थोच्चारणाय शिक्षायाः, कर्मकाण्डस्य यज्ञीयानुष्ठानस्य च निमित्ताय कल्पस्य, शब्दानां रूपज्ञानाय व्याकरणस्य, अर्थज्ञानाय निर्वचनाय च निरुक्तस्य, वैदिकच्छन्दसां ज्ञानलाभाय छन्दसः तथा अनुष्ठानस्य उचितकालनिर्णयार्थं ज्योतिषशास्त्रस्य च प्रयोजनम् अस्ति।

आधुनिकानाम् इतिहासकाराणां कथनम् इदं यत् षण्णाम् अपि वेदाङ्गानां निर्माणं वैदिकयुगस्य उत्तरार्द्धभागे अभवत्। शिक्षा, व्याकरणम्, कल्पः, निरुक्तम्, छन्दः, ज्योतिषञ्च इत्येतानि वेदाङ्गानां नामानि। पाणिनीयशिक्षायाम् उक्तम् -

**शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः।**

**ज्योतिषामयनं चैव वेदाङ्गानि षडेव तु।।**

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**

**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।**

**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**

**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते।।**

(पा. शि. ४१/४२)

पतञ्जलिना अपि उक्तम् - 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति।

षण्णाम् अपि एतेषां वेदाङ्गानाम् उल्लेखः गोपथब्राह्मण-बौधायनधर्मसूत्र-गौतमधर्मसूत्र-रामायणसदृशेषु प्राचीनग्रन्थेषु उपलभ्यते। एतेन तेषां पुरातनतरत्वं सिद्ध्यति। बुद्धावतारात् प्राक्तनकालः उत्तरवैदिककालत्वेन निर्धार्यते पण्डितैः। वेदानां भाषा भावश्च उभौ अपि दुरूहौ स्तः। तस्माद् वेदार्थस्य अवगमनाय वेदाङ्गानाम् अपेक्षा भवति। वेदार्थबोधाय सहायकत्वात् तेषाम् उपकारकत्वं स्पष्टम् एव।





## पाठगतप्रश्नाः-१

१. अङ्गशब्दस्य व्युत्पत्तिलभ्यः अर्थः कः।

२. अङ्गशब्दस्य विग्रहं लिखत?

३. **कल्पस्य व्युत्पत्तिलभ्यः अर्थः कः।**

४. षडङ्गानि कानि।

५. पतञ्जलिना वेदाङ्गविषये किमुक्तम्।

## ७.२) शिक्षा

येन वेदमन्त्राणाम् उच्चारणं शुद्धं सम्पाद्यते तच्छास्त्रं शिक्षा इत्युच्यते। वेदे स्वरस्य प्राधान्यं सर्वैः विदितम्, स्वरज्ञानं च शिक्षातः एव भवति। अत एव इदं शिक्षाशास्त्रं वेदाङ्गम्। तैत्तिरीयोपनिषदः आरम्भे शिक्षाशास्त्रस्य प्रयोजनम् उक्तं यत् - 'अथ शिक्षां व्याख्यास्यामः- वर्णः, स्वरः, मात्रा, बलम्, साम, सन्तान इत्युक्तः शिक्षाध्यायः' इति। तत्र अकारादिः हि वर्णः, उदात्तादिः हि स्वरः, ह्रस्वादिः हि मात्रा, स्थानप्रयत्नौ च बलं, निषादादिः साम, विकर्षणादिश्च सन्तानः। अस्य अवबोधनम् एव शिक्षायाः प्रयोजनम्।

यथा वैदिकविधीनां सम्पादनार्थं ब्राह्मणग्रन्थाः उपयुज्यन्ते, तथैव उच्चारणप्रयोजनाय शिक्षाया अपि उपयोगो भवति। वेदानां वैदिकसाहित्यस्य वा अध्ययन-अध्यापनविषयक-विधीनां निर्देशः शिक्षाशास्त्रे कृतः। स्वरवर्णादीनाम् उच्चारणानि केन प्रकारेण कर्तव्यानि इति अस्मिन् विषये उपदिशति शिक्षा। सायणस्य ऋग्वेदभाष्यभूमिकायाम् उक्तम् - '**स्वरवर्णाद्युच्चारणप्रकारो यत्र शिक्ष्यते उपदिश्यते सा शिक्षेति।**'

वेदपाठावसरे शुद्धम् उच्चारणं स्वरविधिः च भवेताम्। अशुद्धोच्चारणयुक्तः भ्रष्टस्वरश्च वेदपाठः महद् दुष्फलं जनयति। स परमहानिकरः अपि भवति। इष्टलाभाय यज्ञयागोपासनादिकं यत्कार्यं क्रियते, अशुद्धेन उच्चारणेन तस्मात् कार्यात् विशिष्टलाभो न कदापि सञ्जायते। तादृशम् अशुद्धोच्चारणयुक्तं कार्यं तु महतीम् विपदम् एव उत्पादयति। श्रूयते यत् पुरा 'इन्द्रशत्रुर्वर्धस्व' इति मन्त्रस्य अशुद्धोच्चारणं कृतम्, तेन यजमानं प्रति तत् अनिष्टकारकम् एव सञ्जातम्। पाणिनीयशिक्षायाम् उक्तम् -

**"मन्त्रो हीनः स्वरतो वर्णतो वा, मिथ्याप्रयुक्तो न तमर्थमाह।**

**स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात्।।"**

वेदोच्चारणस्य यथार्थत्वं यथा स्यात्, तस्मात् समीचीनं स्वरज्ञानम् अपेक्ष्यते। उदात्तानुदात्तस्वरितभेदेन स्वरः त्रिविधः वर्तते। 'उच्चैरुदात्तः', 'नीचैरनुदात्तः', 'समाहारः स्वरितः', इत्येतानि पाणिनिना तेषां त्रयाणां स्वराणां लक्षणानि प्रोक्तानि। 'अनुदात्तपदमेकवर्ज्यम्' इति एतस्मिन्



पाणिनीये सूत्रे उक्तं यद् वेदस्य प्रत्येकस्मिन् पदे अवश्यम् एव कश्चित् उदात्तस्वरः भवति, अवशिष्टाः च स्वराः अनुदात्ताः भवन्ति। तेषु एव अनुदात्तेषु स्वरेषु परिस्थितिविशेषे स्वरितः इति अन्यतमः स्वरः जायते। स्वरप्रधानतायाः कारणं वेदेषु अस्ति, तेषां स्वराणाम् अर्थनियन्त्रणत्वम्। केन प्रकारेण स्वराणाम् अर्थनियन्त्रणकारित्वं भवति इति उपरिष्टाद् उदाहरणं निधाय उक्तम् एव। वेदेषु शुद्धोच्चारणं सर्वप्रथमम् इष्टं भवति। तच्च शुद्धोच्चारणं शिक्षाशास्त्रं समुपदिशति। एतस्माद् एव कारणात् षट्सु वेदाङ्गेषु शिक्षानामकस्य अङ्गस्य मूर्धन्यत्वम् आम्नातम्। शिक्षायाः अभिमतः विषयः प्रातिशाख्येषु दृश्यते। प्रातिशाख्यग्रन्थाः शिक्षाशास्त्रस्य च प्राचीनतमाः प्रतिनिधयः इव सन्ति। संहितापाठसम्बन्धिनः सर्वे अपि विषयाः तत्र साङ्गोपाङ्गतया प्रतिपादिताः।

शिक्षाशास्त्रस्य इतिहासः पुरातनतरः। परं तद्विषयकाः प्राचीनतराः ग्रन्था न उपलभ्यन्ते। श्रीवाचस्पतिगैरोला स्वकीये इतिहासे लिखति यत् - सत्यकेतुविद्यालङ्कारस्य मतमिदं यत् जैगीषव्यस्य शिष्यो बाभ्रव्यः शिक्षाशास्त्रं प्रणिनाय इति। महाभारते शान्तिपर्वणि आचार्यगालवकृतस्य शिक्षाग्रन्थस्य उल्लेखः लभ्यते। पूनायां भण्डारकरशोधसंस्थानतः भरद्वाजशिक्षायाः प्रकाशनं जातम् अस्ति। तत्र नागेश्वरभट्टस्य टीका च वर्तते। नागेश्वरमतेन स ग्रन्थः भारद्वाजेन प्रणीतः। शिक्षासङ्ग्रहनामके ग्रन्थे द्वात्रिंशत्-शिक्षापुस्तकानां सङ्ग्रहः प्राप्यते। चतुर्णाम् अपि वेदानां भिन्नभिन्नशाखासु शिक्षायाः सम्बन्धः वर्तते। श्रीबलदेव-उपाध्यायः स्वकीये 'वैदिक साहित्य और संस्कृति'-इत्यभिधेये ग्रन्थे याज्ञवल्क्यशिक्षा-वासिष्ठीशिक्षादीनां विंशतेः ग्रन्थानाम् उल्लेखं विदधाति। साम्प्रतं समवाप्ता पाणिनीयशिक्षा प्राचीनशिक्षासूत्राणां साहाय्येन प्रणीता अभूद् इति बुधानां विचारः। अद्यतनीये युगे स्वामिदयानन्दः पाणिनीयशिक्षायाः उद्धारं कृतवान्। इदम् अपि अत्र स्मरणीयम् यद् इदानीं शुक्लयजुर्वेदे याज्ञवल्क्यशिक्षा, सामवेदे नारदीशिक्षा, अथर्ववेदे माण्डूकीशिक्षा, किञ्च ऋग्वेदे पाणिनीयशिक्षा च प्राप्यते। एतद्भिन्ना न अन्या काऽपि शिक्षा उपलभ्यते।



## पाठगतप्रश्नाः-२

६. तैत्तिरीयोपनिषदि शिक्षाविषये किमुक्तम्।

७. सायणः ऋग्वेदभाष्यभूमिकायां किम् आह?

८. जैगीषव्यस्य शिष्यः कः।

९. उदात्त-अनुदात्त-स्वरित-बोधकं पाणिनीयसूत्रद्वयं लिखत।

१०. महाभारते शान्तिपर्वणि कः शिक्षाग्रन्थः उल्लिखितः।

११. केषाञ्चन शिक्षाग्रन्थानां नामानि लिखत।



## ७.२.१) शिक्षासाहित्यम्

'शिक्षा'-शब्दस्य अत्र अर्थो भवति वैदिकमन्त्राणाम् उच्चारणविधेः शिक्षको ग्रन्थः इति। शिक्षा-प्रातिशाख्ययोः परस्परसम्बन्धविषये मतानाम् ऐक्यं नास्ति। शिक्षायाः साहित्यं पर्याप्तरूपेण विशालम् अस्ति। प्रधानशिक्षायाः संक्षिप्तपरिचयं दातुं प्रयासः क्रियते -

## ७.२.२) व्यासशिक्षा-

अस्य ग्रन्थस्य उपरि महामहोपाध्याय-पण्डितवैङ्कटरामशर्मणा रचितो वेदतैजसनाम्ना व्याख्याग्रन्थः समुपलब्धः अस्ति।

## ७.२.३) भरद्वाजशिक्षा-

तैत्तिरीयसंहितया सह अस्य ग्रन्थस्य सम्बन्धः अस्ति। अयं ग्रन्थः संहिताशिक्षा इति नाम्ना व्यवहृतः अस्ति। अस्य ग्रन्थस्य प्रधानलक्ष्यं हि संहितापदानां शुद्धता एव। तदर्थं विशिष्टनियमानाम् अस्मिन् ग्रन्थे विवरणम् अस्ति। क्वचिद् विशिष्टशब्दानां सङ्कलनम् अपि विद्यते। तैत्तिरीयसंहितायां वृजिन् -शब्दस्य उपलब्धिः भवति। किञ्च जकारस्य उदात्तस्वरयुक्तत्वे सति अकारयुक्तः वृजन इत्येवं भवति(**वृजने 'ज' उदात्तश्चेद् अकारेण सहोच्यते**)। अनेन प्रकारेण पर्शु-शब्दः अन्तोदात्तः चेत् 'परशु' इत्यस्मिन् रूपे परिणतो भवति। अनेन एव प्रकारेण अत्र नियमाः प्रदर्शिताः। अक्षरक्रमेण ग्रन्थस्य सङ्कलनम् अस्ति। शिक्षायाः अन्येषां विषयाणाम् अभावः अत्र विद्यते। इयं शिक्षा प्राचीना इति प्रतीयते। श्रीनिवासदीक्षीतेन रचिता सिद्धान्तशिक्षा अपि अस्याः शिक्षायाः विषयप्रतिपादने अनुगमनं करोति।

## ७.२.४) पाणिनीयशिक्षा-

शिक्षा इयम् अतिप्रसिद्धा लोकप्रिया च अस्ति। लौकिकानां वैदिकानाञ्च शास्त्राणां कृते इयं शिक्षा नितान्तम् उपयोगित्वेन अधिकमहत्त्वपूर्णा अस्ति। अस्मिन् ग्रन्थे षष्टिः श्लोकाः सन्ति। एतेषु श्लोकेषु उच्चारणविधिसम्बद्धानां विषयाणां संक्षिप्तं किञ्च उपादेयं विवरणं प्रदत्तम् अस्ति। अस्य ग्रन्थस्य रचयितुः नाम अद्यापि अज्ञातम् एव अस्ति। ग्रन्थान्ते पाणिनेः उल्लेखः दाक्षीपुत्रनाम्ना कृतः वर्तते।

**'शङ्करः शाङ्करीं प्रादात् दाक्षीपुत्राय धीमते।**
**वाङ्मयेभ्यः समाहृत्य देवीं वाचम् इति स्थितिः।।'**

(पा. शि. ४६)

अनेन उल्लेखेन स्पष्टः भवति यत् पाणिनिः अस्य ग्रन्थस्य लेखको नास्ति। पाणिनिमतानुयायी कोऽपि वैयाकरणः अस्य उपयोगिनः ग्रन्थस्य निर्माणम् अकरोत्। अस्य ग्रन्थस्य उपरि बहुविधाः टीकाः अपि उपलब्धा भवन्ति। परिमाणे न्यूनत्वेन अपि सारभूतत्वाद् अस्य अनुशीलनेन संस्कृतभाषायाम् उपयोगिनः विषयस्य सुष्ठु ज्ञानं प्राप्तुं शक्यते। शिक्षासङ्ग्रहनामके ग्रन्थे एकत्र प्रकाशितानां



द्वात्रिंशच्छाखानां समुच्चयः अस्ति। एताः शिक्षाः चतुर्णां वेदानां विभिन्नशाखातः सम्बद्धाः सन्ति। आसाम् एव शिक्षाणां संक्षिप्तवर्णनम् अत्र दास्यते।

## ७.२.५) याज्ञवल्क्यशिक्षा-

परिमाणेन इयं शिक्षा बृहदाकारा अस्ति। अत्र द्वात्रिंशदधिकद्विशतं (२३२) श्लोकाः सन्ति। अस्याः सम्बन्धः शुक्लयजुर्वेदीय-वाजसनेयीशाखया सह अस्ति। अस्यां शिक्षायां वैदिकस्वराणाम् उदाहरणेन सह विशिष्टं विस्तृतं च वर्णनं वर्तते। लोप-आगम-विकार-प्रकृतिभावाख्यानां चतुर्विधसन्धीनां विवेचनम् अपि अत्र वर्तते। वर्णानां विभेद-स्वरूप-साम्य-वैषम्यादीनाम् अपि वर्णनम् अस्यां शिक्षायां विद्यते।

## ७.२.६) वासिष्ठीशिक्षा-

अस्याः अपि सम्बन्धः वाजसनेयीसंहितया सह एव अस्ति। अस्यां संहितायाम् ऋङ्मन्त्रयजुर्मन्त्रयोः पार्थक्यम् अतिविस्तरेण वर्णितम् अस्ति। अनया शिक्षया अनुसारेण समग्रायामपि शुक्लयजुर्वेदीयसंहितायाम् ऋग्वेदीयाः १२६७ मन्त्राः सन्ति। अत्र यजुषां संख्याः २८२३ सन्ति। अयं संख्याविभागः अस्य वेदस्य अध्ययनकर्तृभ्यः अतीव उपयोगी भवति।

## ७.२.७) कात्यायनीशिक्षा-

अस्यां शिक्षायां केवलं त्रयोदश श्लोकाः वर्तन्ते। जयन्तस्वामिनामा कोऽपि विद्वान् अस्याः टीकां लिखितवान्।

## ७.२.८) पाराशरीशिक्षा-

अस्यां शिक्षायां षष्ट्यधिकशतं (१६०) श्लोकाः सन्ति। अस्मिन् ग्रन्थे अपि सन्धि-स्वर-वर्णादीनां विषयाणां विवेचनम् अस्ति।

## ७.२.९) माण्डव्यशिक्षा-

इयं शिक्षा शुक्लयजुर्वेदेन सह सम्बद्धा अस्ति। अस्मिन् ग्रन्थे वाजसनेयीसंहितायां प्रयुक्तानां नामौष्ठ्यवर्णानां सङ्ग्रहो विद्यते। अतीवपरिश्रमेण समस्तसंहिताया अध्ययनं कृत्वा उपादेयः अयं ग्रन्थः लिखितः अस्ति। सामान्यशिक्षाग्रन्थेभ्यः अस्य ग्रन्थस्य विशिष्टता अपि स्पष्टा एव अस्ति। स्वरस्य वर्णस्य च विचारम् अकृत्वा एव केवलम् ओष्ठेन उच्चारितवर्णानाम् एवात्र सङ्ग्रहः कृतः वर्तते।



### ७.२.१०) अमोघानन्दिनीशिक्षा-

अस्मिन् ग्रन्थे त्रिंशदधिकशतं (१३०) श्लोकाः सन्ति। अत्र स्वरस्य वर्णस्य च सूक्ष्मविचारः कृतः अस्ति। अस्य ग्रन्थस्य संक्षिप्तसंस्करणमपि अस्ति। अस्मिन् संस्करणे केवलं सप्तदश श्लोकाः एव वर्तन्ते।

### ७.२.११) माध्यन्दिनीशिक्षा-

ग्रन्थे अस्मिन् केवलं द्वित्वनियमानां विवेचनम् अस्ति। द्विविधः अयं ग्रन्थः, एकः बृहदाकारः, द्वितीयस्तु लघ्वाकारः एव। प्रथमो गद्यात्मकः द्वितीयः पद्यात्मकः चेति।

### ७.२.१२) वर्णरत्नप्रदीपिका-

अस्य ग्रन्थस्य रचयिता भारद्वाजवंशीयः कोऽपि अमरेशनामकः विद्वान् अस्ति। अस्य अपि समयः अज्ञातः एव। अस्मिन् ग्रन्थे सप्तविंशत्यधिकशतं (२२७) श्लोकाः सन्ति। नामानुरूपेण एव अस्मिन् ग्रन्थे वर्ण-स्वर-सन्धीनां साङ्गोपाङ्गं विवेचनम् अस्ति।

### ७.२.१३) केशवीशिक्षा-

अस्याः रचयिता आस्तिकमुनेः वंशजो गोकुलदैवज्ञस्य पुत्रः केशवदैवज्ञः अस्ति। द्विविधा इयं शिक्षा समुपलब्धा भवति। प्राथमिकीशिक्षायां माध्यन्दिनशाखातः सम्बद्धपरिभाषाणां विस्तृतं विवेचनम् अस्ति। प्रतिज्ञा-समस्तानां नवसूत्राणां विस्तृतव्याख्या उदाहरणेन सह अत्र प्रदत्ता अस्ति। द्वितीया शिक्षा पद्यात्मिका वर्तते, एकविंशतौ पद्येषु अत्र स्वरस्य विस्तृतविचारः वर्तते।

### ७.२.१४) मल्लशर्मशिक्षा-

अस्य ग्रन्थस्य रचयिता उपमन्यगोत्रीयः अग्निहोत्री खगपतिमहोदयस्य पुत्रः मल्लशर्मा इति नामकः कोऽपि कान्यकुब्जब्राह्मणः। अस्यां शिक्षायां चतुःषष्टिः (६४) श्लोकाः सन्ति। लेखककथनानुसारेण अस्या रचना १७८१-विक्रमाब्दे अभवत्।

### ७.२.१५) स्वराङ्कशशिक्षा-

अस्याः शिक्षाया रचयिता जयन्तस्वामीनामकः कोऽपि विद्वान् आसीत्।

### ७.२.१६) षोडशश्लोकीशिक्षा-

श्रीरामकृष्णनामकेन विदुषा षोडशश्लोकीशिक्षा इति नामकः लघुः एकः ग्रन्थः प्रणीतः, यत्र स्वरस्य व्यञ्जनस्य च विचारः कृतः।

### ७.२.१७) अवसाननिर्णयशिक्षा-

वैदिकव्याकरणसम्बन्धिपदप्रयोगनियमानां ज्ञानाय स्वरवर्णादिज्ञानानां सौलभ्याय च इयं शिक्षा प्रणीता अनन्तदेवेन विदुषा।

### ७.२.१८) प्रातिशाख्यप्रदीपशिक्षा-

इदं पाण्डित्यपूर्णं शिक्षाशास्त्रं सदाशिवपुत्रेण बालकृष्णनाम्ना केनापि विदुषा कृतम् अस्ति। शिक्षा इयं परिमाणे गरिष्ठा। शिक्षाशास्त्रमिदं किमपि ईदृशं प्राचीनम् शास्त्रम् आलोक्य एव प्रणीतम्। अस्मिन् ग्रन्थे कतिपयानि व्याकरणप्रयोगपराणि पद्यानि ग्रन्थान्तरात् समुद्धृतानि सन्ति। स्वरवर्णादिशिक्षायाः समग्रविषयाणां सरसं सरलं साङ्गोपाङ्गं च विवेचनम् अत्र वर्तते। शिक्षाशास्त्रस्य यथार्थज्ञानलाभाय ग्रन्थोऽयम् अतीव उपादेयः अस्ति।

### ७.२.१९) नारदीयशिक्षा-

अयं शिक्षाग्रन्थः सामवेदेन सम्बद्धः अस्ति। अतिविस्तृता इयम् उपादेया च शिक्षा अस्ति। अस्य ग्रन्थस्य शोभाकरभट्टेन विस्तृता व्याख्या अपि लिखिता। व्याख्येयं नितान्तप्रौढा प्रसिद्धा च अस्ति। सामवेदीयस्वराणां रहस्यं विज्ञातुम् अयं ग्रन्थः अतीव उपयोगी वर्तते। सामवेदीये द्वे अन्येऽपि शिक्षे स्तः- (१७) **गौतमी** (१८) **लोमेंशीशिक्षा चेति।**

### ७.२.२०) माण्डूकीशिक्षा-

अथर्ववेदेन सम्बद्धा इयं शिक्षा अस्ति। अस्याम् ऊनाशीत्यधिकशतं (१७९) श्लोकाः सन्ति। अथर्ववेदस्य स्वराणां वर्णानां च सुष्ठुज्ञानाय इयं शिक्षा महनीया श्लाघनीया च अस्ति। कतिपये अन्ये अपि शिक्षाग्रन्थाः प्राप्यन्ते, येषां नाम-निर्देशः एव पर्याप्तो भविष्यति। (२०) **क्रमसन्धानशिक्षा,** (२१) **गलदृक्शिक्षा,** (२२) **मनःस्वार-शिक्षा।** एतेषां ग्रन्थानां रचयिता याज्ञवल्क्यमुनिः अस्ति।



## पाठगतप्रश्नाः-३

१२. भरद्वाजशिक्षायाः अपरं नाम किम्।

१३. पाणिनीयशिक्षायां कति श्लोकाः सन्ति।

१४. याज्ञवल्क्यशिक्षायां केषां विवेचनं वर्तते।

१५. वासिष्ठीशिक्षायाः सम्बन्धः कया संहितया सह अस्ति।

१६. कात्यायनीशिक्षायां कति श्लोकाः वर्तन्ते।

१७. पाराशरीशिक्षायां केषां विषयाणां विवेचनं वर्तते।



१८. अमोघानन्दिनीशिक्षायां कति श्लोकाः सन्ति।

१९. केशवीशिक्षायाः रचयिता कः।

२०. मल्लशर्मशिक्षायाः रचयिता कः।

२१. माण्डूकीशिक्षा केन वेदेन सम्बद्धा अस्ति।

## ७.३) कल्पः

वेदानां द्वितीयम् अङ्गम् अस्ति कल्पः। ब्राह्मणकाले यागस्य तावान् प्रचारो जातो यत् तेषां यथावत् ज्ञानाय पूर्णपरिचयप्रदायक-ग्रन्थानाम् आवश्यकता अनुभूयते स्म। ताम् एव आवश्यकतां स्वल्पैः शब्दैः पूरयितुं कल्पसूत्राणि विरचितानि। वेदविहितानां कर्मणां व्यवस्थापनं क्रमपूर्वकं कल्पशास्त्रे कल्पितम्। उक्तञ्च-

**'कल्पो वेदविहितानां कर्मणामानुपूर्व्येण कल्पनाशास्त्रम्।' इति।**

कल्पसूत्राणि द्विविधानि- **श्रौतसूत्राणि स्मार्त्तसूत्राणि** च। श्रुत्युक्तानां यागविधीनां प्रकाशकानि हि श्रौतसूत्राणि। स्मार्त्तसूत्राणि अपि द्विधा - गृह्यसूत्राणि धर्मसूत्राणि चेति।

श्रौतसूत्रेषु अग्नित्रयाधानम्, अग्निहोत्रम्, दर्शपूर्णमासः, पशुयागः इत्येते नानाविधाः सोमयागाश्चेति विषयाः समुपपादिताः।

मुख्यतः कल्पसूत्राणि सन्ति चतुर्विधानि-**१.श्रौतसूत्रम्,२. गृह्यसूत्रम्, ३. धर्मसूत्रम्, ४.शुल्वसूत्रञ्चेति।**

श्रौतसूत्रे तेषाम् अनुष्ठानाचारयागानां वर्णनं विद्यते, येषां सम्पादनं त्रैवर्णिकैः अवश्यं कर्तव्यम्। षोडशसंस्काराणां विशिष्टं वर्णनम् अपि गृह्यसूत्रेषु कृतम्। मुख्यतः गृह्यसूत्रे गृह्याग्निसम्बद्धयागानाम् उपनयनविवाहश्राद्धादीनां संस्काराणां विस्तृतं विवरणं विद्यते।

धर्मसूत्रेषु धार्मिकनियमाः, प्रजानां राज्ञां च कर्त्तव्यचर्याः, चत्वारो वर्णाः, चत्वारः आश्रमाः, तेषां धर्माः पूर्णतया निरूपिताः। धर्मसूत्रे चतुर्णां वर्णानाम् आश्रमाणाञ्च किञ्च राज्ञाम् अपि कर्तव्यानि निर्दिष्टानि सन्ति। इमानि एव त्रीणि वस्तुतः प्रधानानि कल्पसूत्राणि मतानि।

चतुर्थं शुल्वसूत्रं तु विशेषतः वेदिनिर्माणप्रकारं प्रतिपादयति। अस्य सूत्रस्य वैज्ञानिकं महत्त्वम् अस्ति। मुख्यतः शुल्बसूत्रम् अपि कल्पसूत्रमेव, तत् श्रौतसूत्रान्तर्गतम्। शुल्वं मापक्रिया। इदं सूत्रम् एव भारतीयज्यामितिशास्त्रस्य प्रवर्तकम्। पाश्चात्त्यैः पिथागोरस-प्रभृतिभिः ज्यामितिशास्त्रं प्रणीतम् इति ये कल्पयन्ति, ते शुल्वसूत्रं दृष्ट्वा दृढीकुर्वन्तु यत् इदम् ज्यामितिशास्त्रं भारतीयैः पाश्चात्यज्यामितिशास्त्रोत्पत्तेः बहुदिवसपूर्वम् एव प्रकटीकृतम् इति।

कल्पसूत्राणि तत्तद्वेदसम्बन्धनिबन्धनभेदयुतानि। तत्र-



ऋग्वेदस्य कल्पसूत्रम् - आश्वलायनम्, शाङ्खायनञ्चेति। अनयोः उभयोरपि कल्पसूत्रयोः श्रौतसूत्रं गृह्यसूत्रञ्च सम्मिलितं विद्यते। शुक्लयजुर्वेदस्य कल्पसूत्रम् - कात्यायनश्रौतसूत्रम्, पारस्करगृह्यसूत्रम्, कात्यायनशुल्बसूत्रं चेति।

कृष्णयजुर्वेदस्य कल्पसूत्रम् - बौधायनसूत्रम्, आपस्तम्बसूत्रञ्चेति। अनयोः कल्पसूत्रयोः श्रौतगृह्यधर्मशुल्वसूत्राणि सर्वाणि अपि सन्ति इति ग्रन्थौ इमौ पूर्णरूपौ।

सामवेदस्य कल्पसूत्रम् - लाट्यायनश्रौतसूत्रम्, द्राह्यायणञ्चेति। जैमिनीयशाखायाः श्रौतसूत्रम्, जैमिनिगृह्यसूत्रम्, गोभिलगृह्यसूत्रम्, खादिरगृह्यसूत्रञ्चेति।

सामवेदे एव आर्षेयकल्पस्य अपि गणना भवति। अयम् एव कल्पः मशककल्पसूत्रनाम्ना अपि प्रथते। सूत्रमिदं लाट्यायनश्रौतसूत्रात् प्राचीनं वर्तते। अथर्ववेदस्य कल्पसूत्रम् - वैतानश्रौतसूत्रम्, कौशिकसूत्रञ्चेति। वैतानसूत्रं न अतिप्राचीनम्, कौशिकसूत्रञ्च अभिचारक्रियावर्णनपरम्।



## पाठगतप्रश्नाः-४

२२. कल्पसूत्राणां प्रकारद्वयं लिखत।

२३. स्मार्तसूत्राणां द्वौ प्रकारौ लिखत।

२४. मुख्यतः कति कल्पसूत्राणि।

२५. ऋग्वेदस्य कल्पसूत्रं किम्।

२६. सामवेदस्य कल्पसूत्रं किम्।

---

## ७.४) व्याकरणम्

वेदानां रक्षकत्वाद्, वेदार्थावबोधने सहायकत्वात्, प्रकृतिप्रत्ययोपदेशेन सह पदस्वरूपस्य प्रतिष्ठापकत्वाद् अर्थनिर्णयनकृत्साधनेषु अन्यतमसाधनत्वेन प्रयुक्तत्वाद् व्याकरणं नाम अङ्गं नितान्तम् एव महनीयं वर्तते, वेदाङ्गेषु इदं श्रेष्ठञ्च स्मृतम्। **'व्याक्रियन्ते शब्दाः अनेनेति व्याकरणम्' इति व्युत्पत्तेः व्याकरणपदस्य अर्थः** भवति पदमीमांसाकरं शास्त्रम् इति। व्याकरणं वेदस्य मुखत्वेन स्मृतम् -

**'मुखं व्याकरणं स्मृतम्।'**

भाषा लोकव्यवहारं प्रवर्तयति। यदि भाषा न स्यात् तर्हि जगदिदम् अन्धतमसि मज्जेत्। यथोक्तं दण्डिना-

**'इदमन्धतमः कृत्स्नं जायेत भुवनत्रयम्।**

**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।'**



भाषायाः शुद्धये व्याकरणस्य अपेक्षा भवत्येव। न हि व्याकरणज्ञानशून्यः साधून् शब्दान् प्रयोक्तुं शक्नोति।

स्वयम् ऋक्संहितायाम् अस्य व्याकरणशास्त्रस्य प्रशंसायाम् अनेके मन्त्राः भिन्न-भिन्नस्थानेषु उपलब्धाः भवन्ति। ऋग्वेदस्य एकस्मिन् सुप्रसिद्धमन्त्रे व्याकरणं वृषभस्य रूपकत्वेन प्रतिपादितम् अस्ति -

**चत्वारि शृङ्गाः त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्ता सोऽस्य।**

**त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्याम् आविवेश।।**

-(ऋ. ४/५८/६)

इत्यादिशब्दैः तत्प्रशंसा श्रूयते। अस्य वृषभरूपव्याकरणस्य चत्वारि शृङ्गाणि सन्ति - नाम-आख्यात-उपसर्ग-निपातरूपाणि। अस्य त्रयः पादाः भूत-भविष्य-वर्तमानाः। सुप् तिङ् च द्वे शीर्षे स्तः,सप्त विभक्तयश्च सप्त हस्ताः सन्ति। उरसि शिरसि कण्ठे च त्रिधा बद्धो वृषभः रोरवीति। एवंविधव्याकरणज्ञानाद् यः अनभिज्ञः अस्ति स जानन्नपि न जानाति, पश्यन्नपि न पश्यति, शृण्वन्नपि न शृणोति। किञ्च यो हि जनः व्याकरणशास्त्रज्ञः अस्ति, तत्सन्निधौ वाणी सुसज्जिता कामिनी इव समागत्य सर्वतोभावेन समर्पिता भवति -

**उतत्वः पश्यन् न ददर्श उतत्वः शृण्वन् न शृणोत्येनाम्।**

**उतोत्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासाः।।**

आचार्यवररुचिः व्याकरणशास्त्रस्य महनीयतां गायन् यदा तस्य अध्ययनस्य पञ्च प्रयोजनानि प्रतिपादयति तदा महर्षिः पतञ्जलिः तदध्ययनस्य प्रयोजनानि त्रयोदश इति वदति। तेन व्याकरणशास्त्रं नितरां प्राचीनं शास्त्रम् अस्ति इति ज्ञायते। न हि व्याकरणज्ञानशून्यः साधून् शब्दान् प्रयोक्तुम् ईशः। वेदस्य रक्षार्थं व्याकरणस्य अध्ययनम् अत्यावश्यकम्। 'रक्षार्थं वेदानाम् अध्येयं व्याकरणम्, लोपागमवर्णविकारज्ञो हि पुरुषः सम्यग् वेदान् परिपालयिष्यति' इति पतञ्जलिः। वेदरक्षाक्षमतयैव व्याकरणस्य वेदाङ्गत्वम् अपि समर्थ्यते। व्याकरणस्य सर्वाणि प्रयोजनानि उक्तानि महाभाष्ये - 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्।' वेदानाम् रक्षार्थम् व्याकरणस्य अध्ययनं करणीयम्। ऊहः खल्वपि, न सर्वैः लिङ्गैः, न सर्वाभिः विभक्तिभिः वेदे मन्त्राः निगदिताः, यज्ञगतेन पुरुषेण येषाम् अवश्यं यथायथं विपरिणामः कर्तव्यः,तान् अवैयाकरणः यथायथं विपिरणमयितुं न शक्नोति। तस्माद् व्याकरणम् अध्येयम्। एवम् अन्यानि अपि अपभाषण-दुष्टशब्द-अर्थज्ञान-धर्मलाभ-नामकरणादीनि प्रयोजनानि व्याख्यातानि महाभाष्ये।

व्याकरणशास्त्रं तु नितरां प्राचीनशास्त्रम् अस्ति। वैदिकमन्त्रेषु उलभ्यमानाः तत्तत्पदविषयिण्यः व्युत्पत्तयः अपि उपरि अभिहितम् अभिधानं समर्थयन्ति -

१.**'यज्ञेन यज्ञमजयन्त देवाः'** (ऋग्.१/१६४/५०)। यजयाच-इत्यादिना अनङ्।

२.**'ये सहांसि सहसा सहन्ते'** (ऋग्. ६/६६/९)। सहधातोः असुन् उणादौ।



**३.'धान्यमसि धिनुहि'** (यजु. १/२०)। धिनोतेर्धान्यम्, महाभारते।

**४. 'केतपूः केतं नः पुनातु'** (यजु. ११/७)। क्विप् च।

**५.'तीर्थैस्तरन्ति'** (अथर्व. १८/४/७)। पातृतुदिव... इति स्थक्।

व्याकरणशास्त्रस्य प्रमाणभूत आचार्यः पतञ्जलिः व्याकरणशास्त्रस्य उपरिनिर्दिष्टानि प्रयोजनानि वर्णयन् 'चत्वारि शृङ्गाः' ,'चत्वारि वाक्', 'उतत्वः', 'सक्तुमिव', 'सुदेवोऽसि' - इत्येतत् मन्त्रपञ्चकम् उद्धरति स्म। पतञ्जलेः अपि प्राचीनतरो यास्कः अपि 'चत्वारि वाक्' इत्येतस्य मन्त्रस्य व्याख्यां व्याकरणशास्त्रपरकाम् एव चकार। व्याकरणम् इत्येतत् पदं यस्माद् धातोः निष्पद्यते, तस्य अपि मूलार्थो यजुषि - 'दृष्ट्वा रूपे व्याकरोत् सत्त्याऽनृते प्रजापतिः' इत्येतस्मिन् वाक्ये प्रयुक्तः प्राप्यते।

व्याकरणशास्त्रस्य उत्पत्तिम् अधिकृत्य तु न निश्चिततया किमपि कथनं सम्भवम्। इदं तु वक्तुं शक्यं यद् उपलब्धेभ्यः वैदिकपदपाठेभ्यः प्राग् व्याकरणं शास्त्रं पूर्णतां गतम्। प्रकृतिप्रत्ययधातूपसर्गसमासवतां पदानां विभागश्च कृत्स्नतया निर्धारितो जातो यदा तस्य गतस्य कालस्य अनेकसहस्राब्दाः व्यतीताः। वाल्मीकिरामायणस्य रचनाकाले व्याकरणशास्त्रस्य अध्ययनम् अध्यापनं च सुव्यवस्थिततया प्रचलितम् आसीत् इत्येतद् हि -

**'नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।**
**बहु व्याहरताऽनेन न किञ्चिदपशब्दितम्।।'**

इत्यादिश्लोकेभ्यः विदितं जायते। महाभारतयुद्धकालवर्तिनि यास्क-निरुक्ते बहूनां व्याकरणाचार्याणाम् उल्लेखः दृश्यते। आचार्यः शाकटायनः तु स्वकीयं व्याकरणं यास्काद् अपि प्राक् लिखितवान्। तैत्तिरीयसंहितायाम् अस्य विषयस्य सर्वप्रथमः तथा प्राचीनतमः उल्लेखः प्राप्यते -

**'वाग् वै पराच्य व्याकृताऽवदत्। ते देवा इन्द्रम् अब्रुवन् - इमां नो वाचं व्याकुर्विति। सोऽब्रवीत् - वरं वृणे, मह्यं चैवेष वायवे च सह गृह्यता इति। तस्माद् ऐन्द्रवायवः सह गृह्यते। तामिन्द्रो मव्यातोः वक्रम्य व्याकरोत्। तस्मादियं व्याकृता वामुद्यते।' (तै.सं.६।४।७।३)।**

आचार्यपतञ्जलिः स्वकीये महाभाष्ये लिखितवान् -

**'बृहस्पतिश्च वक्ता। इन्द्रश्च अध्येता। दिव्यं वर्षसहस्रम् अध्ययनकालः। अन्तं च न जगाम।'** (महाभाष्ये पस्पशाह्निकम्)।

इत्थम् अगाधम् अनन्तञ्च शब्दार्णवम् अस्ति। अत एव पण्डितसमाजे एका प्रचलिता प्रसिद्धा गाथा च अस्ति -

**'समुद्रवद् व्याकरणं महेश्वरे तदर्धकुम्भोद्धरणं बृहस्पतौ।**
**तद्भागभागाच्च शतं पुरन्दरे कुलाग्रबिन्दूत्पतितं हि पाणिनौ।।'**

पतञ्जलिमुनिः लिखति -

'पुरा कल्प एतद् आसीत् संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते।' इत्येतेन अपि व्याकरणं प्रति लोकस्य प्रवृत्तिः चिरात् आसीद् इति ज्ञायते।



यदा कापि भाषा व्यवहारातीततां प्रयाति तदा तस्या भाषायाः ज्ञानं व्याकरणमन्त्रेण न प्रतिपत्तुं शक्यं भवति। व्याकरणम् एव भाषायाः स्वरूपसङ्घटनं सर्वात्मना कुरुते। तस्माद् व्याकरणम् एव भाषाज्ञानलाभाय सर्वेषाम् अपि अष्टानां शक्तिग्राहकाणां मध्ये मूर्धन्यं स्थानम् अध्यास्ते। व्याकरणस्य नितान्तम् एव उपादेयतां श्रेष्ठताञ्च तत्र तत्र अवलोक्य एव तस्य महिम्नि बुधैः अभिहितम् इदम् -

**'यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणम्।**
**स्वजनः श्वजनो मा भूत् सकलं शकलं सकृच्छकृत्।।**
**शब्दशास्त्रमनधीत्य यः पुमान् वक्तुमिच्छति वचः सभान्तरे।**
**बन्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना।।'**

व्याकरणानि बहुभिः वैयाकरणैः महर्षिभिः प्रणीतानि। तेषु व्याकरणकर्तृषु विद्वत्सत्तमेषु - इन्द्रः, चन्द्रः, काशकृत्स्नः, आपिशलिः, शाकटायनः, पाणिनिः, अमरः, जैनेन्द्रः, इत्येते अष्टौ सन्ति सुप्रथिताः। न केवलम् एतेषाम् अष्टानाम् एव व्याकरणकर्तॄणां व्याकरणानि वर्तन्ते, अपि तु अन्येषाम् अपि आचार्याणां व्याकरणानि श्रूयन्ते। यथा - कौमारं सारस्वतं शाकलञ्च व्याकरणम्। व्याकरणकारान् अथ च व्याकरणानि अधिकृत्य एतच्छलोकद्वयं प्रथितम् अस्ति। -

**'इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।**
**पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः।।**
**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।**
**सारस्वतं चापिशलं शाकलं पाणिनीयकम्।।'**

अपरञ्च व्याकरणानि अष्टौ -

**'प्रथमं प्रोच्यते ब्राह्मं द्वितीयमैन्द्रमुच्यते।**
**याम्यं प्रोक्तं ततो रौद्रं वायव्यं वारुणं तथा।।**
**सावित्रञ्च तथा प्रोक्तमष्टमं वैष्णवं तथा।'** (भविष्यपुराणे ब्राह्मपर्वणि)

लघुत्रिमुनिकल्पतरुकृतः तु नव व्याकरणानि स्मरन्ति-

**'ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।**
**सारस्वतं चापिशलं शाकलं पाणिनीयकम्।।'**

अनेन व्याकरणानाम् अष्टविधत्वम् एव प्रसिद्धम्। यथोक्तं भास्करेण - 'अष्टौ व्याकरणानि षट् च भिषजां व्याचष्टा ताः संहिताः' इति भविष्यपुराणोक्तानि व्याकरणानि तु प्रसिद्धानि। ऐन्द्रादीनि एव प्रसिद्धानि।

एतैः निर्देशैः इन्द्रेण व्याकरणस्य रचना कृता इत्यस्य वर्णनं स्फुटम् एव प्रतिभाति। व्याकरणमिदं ग्रन्थरूपे आसीत् इत्यस्य अपि प्रमाणं प्राप्यते एव। यथा - नन्दिकेश्वरः काशिका-वृत्तेः

तत्त्वविमर्शनीव्याख्यायाम् उपमन्युना लिखितम् - '**तथा चोक्तम् इन्द्रेण अन्तर्वर्णसमुद्भूता धातवः परिकीर्तिता इति।**'

वररुचिः ऐन्द्रनिघण्टुः इत्येतस्य आरम्भे एव अस्य निर्देशं कृतवान्-

**'पूर्वं पद्मभुवा प्रोक्तं श्रुत्वेन्द्रेण प्रकाशितम्।**

**तदबुधेभ्यो वररुचिः कृतवानिन्द्रनामकम्।।'**

वोपदेवेन संस्कृतस्य मान्येषु व्याकरणसम्प्रदायेषु प्रथमस्थानम् इन्द्राय एव प्रदत्तम् -

**'इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।**

**पाणिन्यमर्जैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः।।'**

सारस्वतप्रक्रियायाम् अनुभूतिस्वरूपाचार्येण निगदितम् -

**'इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः।**

**प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं कथं नरः।।'**

डॉ वर्नलमहोदयस्य कथनानुसारेण तमरलभाषाया आद्यव्याकरणं तोलकप्पियम् इत्याख्ये व्याकरणे ऐन्द्रव्याकरणात् एव साहाय्यं गृहीतम्। वररुचिः 'भवन्ती', 'अद्यतनी', 'हस्तनी' इत्यादीनां पारिभाषिकशब्दानाम् उल्लेखं कृतवान्, ते पाणिनेः 'लट्,लुङ्, लिट्' इत्यादिशब्देभ्यः प्राचीनम् अस्ति। एतेषां प्रयोगः ऐन्द्रव्याकरणे अपि अस्ति इति अनुमीयते।

**'वर्तमाने लट्** (३/२/१२३)**-वार्तिक-प्रवृत्तस्य विरामे शिष्या भवन्त्यावर्तमानत्वात्। भवन्तीति लटः पूर्वाचार्यसंज्ञा'** (कैयटः)।

गोपथब्राह्मणे व्याकरणविषयाः निर्दिष्टाः सन्ति। स्पष्टतः व्याकरणशास्त्रस्य इतिहासावलोकनेन विदितं भवति यद् भारते पुरा अनेके व्याकरणकर्तारः आचार्याः आसन्। तत्र आपिशलि-शाकटायन-गालवेन्द्रादीनां व्याकरणकर्तृणाम् उल्लेखः कृतः वर्तते। परं साम्प्रतं तु पाणिनीयं व्याकरणम् एव प्राप्यते। तत्कृतः ग्रन्थः- अष्टाध्यायी सर्वाङ्गसुललितो भूत्वा विभाति। तत्र वैज्ञानिक्या पद्धत्या व्याकरणं प्रतिपादितम् अस्ति। यादृशं हि सुललितं देववाण्याः शास्त्रीयं विवेचनं तत्र दृश्यते, नान्यत्र तादृशं क्वापि विलोक्यते। तत्र लौकिकं वैदिकम् उभयविधम् अपि व्याकरणम् आम्नातम्।



## पाठगतप्रश्नाः-५

२७. व्याकरणशब्दस्य व्युत्पत्तिं निर्दिशत।

२८. इदमन्धतमः कृत्स्नमित्यादिश्लोकः केन लिखितः।

२९. व्याकरणं शरीरस्य केन तुल्यम्।

३०. ऋग्वेदे व्याकरणं किंरूपकत्वेन प्रतिपादितम्।

३१. व्याकरणकर्तृषु बहुषु विद्वत्सत्तमेषु कति वैयाकरणाः सुप्रथिताः, के च ते।



## ७.५) निरुक्तम्

निरुच्यते निश्शेषेण उपदिश्यते तत् तदर्थानाम् अवबोधनाय पदजातं यत्र तन्निरुक्तम् इति कथ्यते। निरुक्तं निघण्टोः महत्त्वपूर्णा टीका अस्ति। निघण्टौ वेदस्य कठिनशब्दानां समुच्चयः अस्ति। निघण्टुग्रन्थस्य सङ्ख्याविषये पर्याप्तः मतभेदः अस्ति। सम्प्रति समुपलब्धः निघण्टुग्रन्थः एक एव अस्ति, परन्तु प्राचीनपरम्पराया अनुशीलनेन ज्ञातो भवति यत् निघण्टुग्रन्था अनेके सन्ति। (द्रष्ट. दुर्गावृत्तिः पृ. ३) निरुक्तस्य आरम्भे 'निघण्टुम्' 'समाम्नाय' इत्येतेन पदेन अभिधीयते। तेन अस्य प्राचीनत्वं प्रमाणितं भवति। महाभारतस्य मोक्षधर्मपर्वानुसारेण अस्य निघण्टोः रचयिता प्रजापतिकश्यपः आसीत् -

**'वृषो हि भगवान् धर्मः ख्यातो लोकेषु भारत।**
**निघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम्।।**
**कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते।**
**तस्माद् वृषाकपिं प्राह कश्यपो मां प्रजापतिः।।'**

(महा. मो. ध. प. अ. ३४२, श्लो. पृ. ८६-८७)

वर्तमाने निघण्टुग्रन्थे 'वृषाकपिः' शब्दः सङ्गृहीतः अस्ति। अतः पूर्वोक्तकथनानुसारेण ज्ञातः भवति यत् महाभारतकाले अस्य निघण्टुग्रन्थस्य निर्मातृपदेन प्रजापतिः कश्यप एव प्रख्यात आसीत्। निघण्टौ पञ्च अध्यायाः सन्ति। आदिमाः त्रयः अध्यायाः नैघण्टुककाण्डम् इति अभिधीयते। चतुर्थः अध्यायो नैगमकाण्डम्, पञ्चमः अध्यायो दैवतकाण्डम् इति पदेन व्यपदिश्यते। प्रथमतः त्रिषु अध्यायेषु पृथिव्यादिबोधकानाम् अनेकशब्दानाम् एकत्र सङ्ग्रहः अस्ति। द्वितीयकाण्डम् एकपदीयम् अपि कथ्यते। नैगमः इत्येतस्य पदस्य तात्पर्यमिदम् अस्ति यद् एतस्य प्रकृतिप्रत्ययस्य यथार्थावगमनं न भवति - अनवगतसंस्कारांश्च निगमान्। दैवतकाण्डे देवतायाः स्वरूपस्थानयोः निर्देशः प्राप्यते।

### ७.५.१) निर्घण्टु-व्याख्याकाराः

सम्प्रति निघण्टुग्रन्थस्य एका एव व्याख्या समुपलब्धा भवति। अस्या व्याख्याया रचयिता देवराजयज्वा अस्ति। अस्य पितामहस्य अपि नाम देवराजयज्वा एव आसीत्। अस्य पितुः नाम यज्ञेश्वरः अस्ति। अयं हि विद्वान् रंगेशपुरी इत्याख्यस्य नगरस्य पार्श्ववर्तिनः कस्य अपि ग्रामस्य निवासी आसीत्। नाम्ना प्रतीतो भवति यद् अयं विद्वान् सुदूरदक्षिणभारतस्य एव निवासी आसीत्। अस्य समयस्य विषये मतद्वयं प्रचलितम् अस्ति। केषाञ्चित् विदुषां मते अयं विद्वान् सायणात् परवर्ती आसीत्, किञ्च यथार्थतः सायणात् पूर्ववर्ती एव अयम् आसीत्। आचार्यसायणेन ऋग्वेदीयमन्त्रस्य (१/६२/३) स्वकीये भाष्ये निघण्टुभाष्यवचनस्य उल्लेखः कृतः। उल्लेखोऽयं देवराजयज्वनः भाष्ये अपि किञ्चित् पाठान्तरेण समुपलब्धः भवति। अस्माद् भाष्याद् अतिरिक्तं न किम् अपि अन्यत् निघण्टुभाष्यं विद्यमानम् अस्ति।



देवराजयज्वा स्वभाष्यस्य उपोद्घाते क्षीरस्वामिनः तथा अनन्ताचार्यस्य निघण्टुव्याख्यायाः उल्लेखं कृतवान्। यथा - 'इदं च ..... क्षीरस्वामी अनन्ताचार्यकृतां निघण्टुव्याख्यां ...... निरीक्ष्य क्रियते।' अनन्ताचार्यस्य उल्लेखः अत्र प्रथमं एव अस्माकं प्राप्यते। क्षीरस्वामिनः मतस्य उल्लेखः अत्र बहुलतया कृतः अस्ति। क्षीरस्वामी अमरकोशस्य प्रसिद्धः टीकाकारः अस्ति। यज्वनः उद्धरणम् 'अमरकोशोद्घाटने' यथावद् उपलब्धं भवति। अतः निघण्टुव्याख्यया यज्वने अभिप्रायः अस्य अमरकोशस्य एव व्याख्यया प्रतीतः भवति। अस्य भाष्यस्य नाम – निघण्टु-निर्वचनम् इति अस्ति। स्वप्रतिज्ञानुसारेण देवराजयज्वा नैघण्टुककाण्डस्य एव निर्वचनम् अधिकेन विस्तरेण कृतवान् (विरचयति देवराजो नैघण्टुककाण्डनिर्वचनम् -श्लो. ६)। अन्यकाण्डानां व्याख्या अत्यल्पा आकारा अस्ति। अस्मिन् उपोद्घाते स्कन्दस्वामिनः ऋग्भाष्यटीकातः, महेश्वरस्य निरुक्तभाष्यटीकातः च साहाय्यं गृहीतम् अस्ति। प्राचीनप्रामाण्याद् अपि सुष्ठु उद्धरणानि अनेकानि उदाहरणानि च सन्ति। सायणात् पूर्ववर्तित्वेन अस्या व्याख्यायाः तथा निरुक्तेः च विशेषं महत्त्वम् अस्ति।

## ७.५.२) निरुक्तकालः

**निरुक्तयुगम्** - निघण्टुकालानन्तरं निरुक्तानां समयः प्रारम्भो भवति। दुर्गाचार्यानुसारेण निरुक्तं चतुर्दशसङ्ख्यकम् आसीत्। ('निरुक्तं चतुर्दशप्रभेदम्'-दुर्गवृ. १/१३)। यास्कस्य निरुक्ते द्वादशानां निरुक्तकर्तॄणां नामानि मतानि च निर्दिष्टानि सन्ति। एतेषां नाम अक्षरक्रमेण एव अस्ति-१.अग्रायणः, २. औपमन्यवः, ३.औदुम्बरायणः,४.और्णवाभः, ५.काथक्यः, ६.क्रौष्टुकिः, ७.गार्ग्यः, ८.मालवः, ९.तैटिकिः,१०. वार्ष्यायिणिः,११.शाकपूणिः,१२.स्थौलाष्ठिविश्च। त्रयोदशः तु स्वयं यास्क एव अस्ति। एतेषां त्रयोदशानाम् आचार्याणाम् अतिरिक्तः कोऽस्ति चतुर्दशः आचार्यः। इति तु अज्ञातम् एव अस्ति। एतेषु ग्रन्थकारेषु शाकपूणेः मतम् आधिक्येन उद्धृतम् अस्ति। बृहद्देवतायाम् अपि अस्य मतस्य उल्लेखः प्राप्यते। बृहद्देवतायां तथा पुराणेषु च शाकपूणिः रथीतरशाकपूणि-नाम्ना स्मृतः अस्ति।

## ७.५.३) यास्कस्य निरुक्तम्

निरुक्तं वेदानां षडङ्गेषु अन्यतमम् अस्ति। सम्प्रति यास्करचितं निरुक्तम् एव अस्य वेदाङ्गस्य प्रतिनिधिग्रन्थः वर्तते। अस्मिन् निरुक्ते द्वादश अध्यायाः सन्ति। अन्ते द्वौ अध्यायौ परिशिष्टरूपेण स्तः। अनेन प्रकारेण समग्रग्रन्थः अयं चतुर्दशसु अध्यायेषु विभक्तः अस्ति। परिशिष्टभागम् अपि अर्वाचीनम् इति वक्तुं न शक्यते। यतो हि यास्क इव उव्वटः अपि परिशिष्टभागात् परिचितः आसीत्। उव्वटः स्वकीये यजुर्वेदभाष्ये (१८/७७), निरुक्ते (१३/१३) समुपलब्धं वाक्यं निर्दिष्टम् अकरोत्। अतः अस्य अंशस्य भोजराजात् प्राचीनत्वं स्वतः सिद्धम् अस्ति। यास्ककृतं निरुक्तं तु निघण्टुग्रन्थस्य व्याख्या अस्ति। अतः अस्य वेदाङ्गत्वम् अनुपपन्नम् इति आशङ्क्य समाधत्ते - 'अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्।' अन्यच्च- 'एकैकस्य पदस्य सम्भाविता अवयवार्था यत्र निःशेषेण उच्यन्ते तद् अपि निरुक्तम्।' अतः अस्य वेदाङ्गत्वं सिद्धम्।



यास्कस्य प्राचीनताया अत्र लेशतः अपि सन्देहस्य अवकाशः नास्ति। पाणिनेः अपि प्राचीनतरः अयम् अस्ति। संस्कृतभाषाया यः विकासः यास्कस्य निरुक्ते प्राप्यते तत् पाणिनेः अष्टाध्याय्यां व्याख्यातरूपतः प्राचीनतरम् अस्ति। महाभारतस्य मोक्षपर्वानुसारेण निघण्टोः कर्ता यास्को नासीत्। अस्य रचयिता कोऽपि प्रजापतिः काश्यप आसीत्-

**'वृषो हि भगवान् धर्मः ख्यातो लोकेषु भारत।**

**निघण्टुकपदाख्याने विद्धि मां वृषमुत्तरम्।**

**कपिर्वराहः श्रेष्ठश्च धर्मस्य वृष उच्यते।**

**तस्माद् वृषाकपि प्राह कश्यपो मां प्रजापतिः।।'**

(महा.मो.प.अ.३४२,श्लो.८६-८७)

तत्र एव निघण्टोः व्याख्याता यास्कः आसीत्, इत्यस्य प्रमाणम् अपि समुपलब्धम् अस्ति-

**'लिपिविष्टेति चाख्यायां हीनरोमा च योऽभवत्।**

**तेनाविष्टं तु यत्किञ्चित् शिपिविष्टेति च स्मृतः।।**

**यास्को मामृषिरव्यग्रोऽनेकयज्ञेषु गीतवान्।**

**शिपिविष्ट इति ह्यस्माद् गुह्यनाम परोह्यहम्।।**

**स्तुत्वा मां शिपिविष्टेति यास्कः ऋषिरुदारधीः।**

**मत्प्रसादादधोनष्टं निरुक्तमधिजग्मिवान्।।'**

(म.भा.शा. प. श्लो.६९-७१)

इत्यादिना प्रमाणितस्य यास्कस्य कः काल इति विचारे प्रस्तुते-क) महाभारतस्य उपरि लिखितपद्यद्वयस्य उद्धरणात् ततः अर्वाचीनो महाभारतः, ख) पाणिनिः स्वकीये **वासुदेवार्जुनाभ्यां वुन्** ४/३/९८ इत्यस्मिन् सूत्रे कृष्णार्जुनौ स्मृतवान् इति ततः अयं प्राचीनः। पाणिनिः पाण्डुपुत्राद् अर्जुनात् परवर्त्ती सिद्धो भवति। पाण्डुपुत्राणां समयः तु राजतरङ्गिण्याम् एव वर्णितम् -

**'शतेषु षट्सु सार्धेषु त्र्यधिकेषु च भूतले।**

**कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः।।'**

इदं सर्वं विचार्य ख्रीष्टपूर्वनवमशतकस्य पूर्वार्द्धे यास्कः अजायत इति प्रतीयते। यास्कस्य अस्य ग्रन्थस्य महत्ता अत्यधिका अस्ति। ग्रन्थस्य आरम्भे यास्को निरुक्तस्य सिद्धान्तस्य वैज्ञानिकं प्रदर्शनम् अकरोत्। वेदार्थानुशीलनाय तदा अनेकपक्षाः आसन्। येषां नामानि अनेन प्रकारेण प्रदत्तानि सन्ति - १)अधिदैवतः,२)अध्यात्मः, ३)आख्यातसमयः,४)ऐतिहासिकाः, ५)नैदानाः, ६)नैरुक्ताः, ७)परिव्राजकाः,८) याज्ञिकाः च।

अनेन मतनिर्देशेन वेदार्थानुशीलनस्य इतिहासस्य उपरि विशिष्टरूपेण प्रकाशः प्रसरति। यास्कस्य प्रभावः अवान्तरकालिकस्य भाष्यस्य उपरि अस्ति। सायणः तु अस्याः पद्धत्या अनुसरणं



कृत्वा वेदभाष्यरचनायां कृतकार्यः अभवत्। यास्कस्य प्रक्रिया आधुनिकभाषावेत्तॄणां प्रधानतः मान्या अस्ति। निरुक्तस्य एकमात्रप्रतिनिधित्वेन निरुक्तग्रन्थस्य सर्वातिशायि महत्त्वम् अस्ति।



## पाठगतप्रश्नाः-६

३२. निघण्टौ कति अध्यायाः।

३३. निघण्टौ पञ्चमे अध्याये किं काण्डं वर्तते।

३४. निघण्टुग्रन्थस्य एकस्य व्याख्याकारस्य नाम उल्लिखत।

३५. क्षीरस्वामी कः।

३६. निरुक्ते केषां निरुक्तकाराणां नाम वर्तते।

३७. शाकपुणिः पुराणेषु केन नाम्ना स्मृतः।

३८. निरुक्तस्य कति अध्यायाः।

---

## ७.६) छन्दः

छन्दो वेदस्य पञ्चमम् अङ्गम् अस्ति। वेदाः सन्ति छन्दोबद्धाः, अतः तेषाम् उच्चारणनिमित्ताय छन्दोज्ञानं नितराम् अपेक्षितं भवति। छन्दोभिधेन एतेन अङ्गेन छन्दसां सर्वेषाम् उच्चारणविधिः तद्गतिप्रकारः तद्गानरीतिश्च विदिता भवति। तस्माद् वैदिकमन्त्रोच्चारणस्य प्रयोजनाय छन्दसः अध्ययनं पूर्वम् उचितम्। विना छन्दोज्ञानं यः वेदाऽध्यन-यजन-याजनादि-कार्याणि करोति तस्य तानि सर्वाणि फलप्रदायकानि कार्याणि न भवन्ति।

कात्यायनेन अत्र स्पष्टतया एव उक्तम् -

**'यो ह वा अविदितार्षेयच्छन्दो दैवतब्राह्मणेन मन्त्रेण याजयति वा अध्यापयति वा स्थाणुं वर्च्छति गर्त्ये वा पात्यते प्रमीयते वा पापीयान् भवति।'** (सर्वानुक्रमणी १।१)

संहिताब्राह्मणेषु छन्दोनाम्नाम् उपलभ्यत्वात् छन्दोऽङ्गस्य अपि उत्पत्तिः वैदिकयुगे एव संवृत्तः इति प्रतीयते। अस्य वेदाङ्गस्य प्रतिनिधि-ग्रन्थः अस्ति पिङ्गलाचार्यकृतं 'छन्दःसूत्रम्'। अस्य ग्रन्थस्य रचयिता कदा बभूव । अस्य पर्याप्तपरिचयस्य अभावः अस्ति। अयं ग्रन्थः सूत्ररूपेऽस्ति। ग्रन्थोऽयम् अष्टसु अध्यायेषु विभक्तः अस्ति। प्रारम्भात् चतुर्थाध्यायस्य सप्तमसूत्रपर्यन्तं वैदिकच्छन्दसां लक्षणं प्रदत्तम् अस्ति। अस्य ग्रन्थस्य हलायुधकृता 'मृतसञ्जीवनी' व्याख्या अतीव प्रसिद्धा वर्तते।

लौकिककाव्येषु छन्दसः पादबद्धतायाः च सम्बन्धः एतावान् अस्ति यत् पद्येषु एव छन्दसो योजना मन्यते, तथा गद्यन्तु छन्दोहीनरचनारूपेण स्वीकृतं भवति। वैदिकच्छन्दसो विषये इयं धारणा अमान्या अस्ति। प्राचीनार्यपरम्परानुसारेण गद्यम् अपि छन्दोबद्धरचना एव मन्यते। दुर्गाचार्येण निरुक्तस्य स्ववृत्त्या (७।२) कस्यापि ब्राह्मणस्य वाक्यं समुद्धृतम्, यस्य आशयः अस्ति छन्दो विना वाणी



समुच्चरिता न भवति—'**नाच्छन्दसि वागुच्चरति**'। भरतमुनिः अपि छन्दोविरहितं शब्दं नैव स्वीकरोति -

**'छन्दहीना न शब्दोऽस्ति, न छन्दः शब्दवर्जितम्।'**

(ना.शा.१४।४५)

कात्यायनमुनेः नाम्ना प्रख्यातं ऋग्यजुष-परिशिष्टं पूर्वोक्तं तथ्यं स्वीकरोति -

**'छन्दोभूतमिदं सर्वं वाङ्मयं स्याद् विजानतः।**

**नाच्छन्दसि न चापृष्टे शब्दश्चरति कश्चन।।'**

पूर्वोक्तमतानुसारेण वेदस्य न कोऽपि एवंविधः मन्त्रः अस्ति, यः छन्दसो माध्यमेन न निमिर्तः वर्तते। फलतो यजुर्वेदस्य मन्त्रः अपि यो हि निश्चयेन गद्यात्मकः अस्ति, छन्दोविरहितः नास्ति। तेन हि प्राचीनाचार्याः प्रथमाक्षरादारभ्य १०४ अक्षरपर्यन्तं छन्दसां विधानं स्वस्वग्रन्थेषु कृतवन्तः (द्रष्ट० —'वैदिकछन्दोमीमांसा' पृ. ८।९, रच० युधिष्ठिरमीमांसक )।

ऋग्वेदस्य सामवेदस्य च सर्वे मन्त्राः छन्दोबद्धाः सन्ति। हृदयस्थकोमलभावानाम् अभिव्यक्त्या नैसर्गिकमाध्यमं छन्दः एव अस्ति। अन्तःस्थलस्य मर्मस्पर्शिनः भावस्य अभिव्यक्तीकरणाय कविगणाः छन्दसां कमनीयकलेवरम् एव अन्विष्यन्ति। मन्त्राणां प्रधानम् उद्देश्यं यज्ञेषु उपास्यदेवतायाः प्रसादनकार्ये एवाऽस्ति, तथा इदम् अपि निश्चयेन वक्तुं शक्यते यद् देवतायाः प्रसादनस्य प्रमुखसाधनं मन्त्राणां गानम् एव भवितुं शक्यते। मन्त्राणां छन्दोबद्धतया छन्दसां ज्ञानं विना वेदमन्त्राः साधु उच्चारयितुं न शक्यन्ते अतः छन्दः इति वेदाङ्गम् अवश्यं ज्ञेयम्। शौनकविरचिते ऋक्प्रातिशाख्ये चरमभागे छन्दसां पर्याप्तं विवेचनं विद्यते। अस्य छन्दःशास्त्रस्य पिङ्गलच्छन्दःसूत्रनामा ग्रन्थः सर्वाधिकप्रसिद्धः अस्ति। 'छन्दःपादौ तु वेदस्य'।

'छन्दः' इत्येतस्य पदस्य इयं व्युत्पत्तिः - छन्दयति (पृणाति) इति छन्दो वा छन्दयति (आह्लादयति ) इति छन्दः अथवा छन्द्यते अनेनेति छन्दः। छन्दांसि च्छादनात् इत्येतद् यास्ककथनाद् वेदार्थवाचकं छन्दः इत्येतत्पदं छद् ( छादने ) धातोः निष्पन्नम्। वेदावरणकारित्वात् छन्दः इति पदं युक्तम् एव। दुर्गाचार्य आह - **'यदेभिरात्मानमाच्छादयन् देवा मृत्योर्बिभ्यतः, तत् छन्दसां छन्दस्त्वम्।'**

इदं वाक्यं छान्दोग्योपनिषदि अपि पाठभेदेन प्राप्यते (१।४।२)। 'छन्दांसि छादनात्'(नि० ७। १९) अस्य एवार्थस्य सम्पुष्ट्यां दुर्गाचार्यस्य पूर्वोक्तवाक्यम् अस्ति। श्रुतिषु छन्दसो महनीयता भृशं गीता। असुरकृतेभ्यः विघ्नेभ्यः रक्षकत्वात् तस्य, तच्छक्तिशाली सैनिक इव मतम्। उक्तञ्च —**'दक्षिणतोऽसुरान् रक्षांसि त्वष्ट्रान्यपहन्ति त्रिष्टुब्जिर्वज्रो वैरविष्टुद्'। वैदिकानि** छन्दांसि अनेकभेद-उपभेदवन्ति सन्ति। प्रधानेषु वैदिकेषु छन्दःसु इमानि गण्यन्ते - गायत्री, उष्णिक्, अनुष्टुप्, प्रकृतिः, बृहती, पङ्क्तिः, त्रिष्टुप्, जगती, अतिजगती, शक्वरी, अतिशक्वरी, कृतिः, आकृतिः, विकृतिः ,संस्कृतिः, अभिकृतिः, उत्कृतिश्च । वैदिकच्छन्दसां विशिष्टता इयं यत् तानि अक्षरगणनायां नियतानि भवन्ति। न तत्र अक्षराणां गुरुलघुक्रमस्य कश्चित् नियमविशेषः वर्तते। उक्तञ्च कात्यायनेन - **'यदक्षरपरिमाणं तच्छन्दः।'** किञ्च लौकिकसंस्कृतस्य छन्दःसु इयं वार्ता नास्ति। तत्र तु वृत्तस्य



अक्षराणां गुरता लघुता निश्चिता एव अस्ति। शताब्द्यन्तरम् लौकिकच्छन्दसां विकासः पूर्वोक्तेभ्यः वैदिकच्छन्देभ्यः जातः इत्यपि स्मरणीयम्। लौकिकछन्दःसु चत्वारः चरणाः भवन्ति किन्तु वैदिकच्छन्दःसु अयं नियमः न भवति।



## पाठगतप्रश्नाः-७

३९. छन्दःशब्दस्य व्युत्पत्तिः का।

४०. कात्यायनेन छन्दोविषये किमुक्तम्।

४१. छन्दश्शरीरस्य केन अङ्गेन सह तुल्यम्।

४२. लौकिकच्छन्दसि कति चरणाः।

४३. छन्दश्शास्त्रस्य प्रवर्तकः कः।

## ७.७) ज्यौतिषम्

यज्ञभागाः बहुविधाः सन्ति। केचन यज्ञाः संवत्सरसम्बन्धिनः सन्ति। केचन क्रतुसम्बन्धिनः च वर्तन्ते। केचन च तिथि-मास-पक्ष-नक्षत्रपरकाः वर्तन्ते। अयं भावः देवेषु यज्ञभागादीनां विधानं भिन्न-भिन्नकालेषु कृतं प्राप्यते। तैत्तिरीयब्राह्मणं वदति -

**'वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्य आदधीत । शरदि वैश्य आदधीत'** ( तै. ब्रा. १।१ )।

अष्टकायां फाल्गुन्यां पूर्णमासे च दीक्षाया विधानं विदधत् ताण्ड्यब्राह्मणं दीक्षितं भवति - **'एकाष्टकायां दीक्षेरन् फाल्गुनीपूर्णमासे दीक्षेरन्'** ( ताण्ड्यब्रा. ५।९।१७ )। प्रातः सायं च अग्नौ दुग्धाज्येन हवनस्य विधानम् अस्ति - **'प्रातर्जुहोति ,सायं जुहोति'**( तै.ब्रा. २।१।२ )। यज्ञस्य साफल्यं न केवलम् उचितविधाने अस्ति प्रत्युत उचितसमयस्य नक्षत्रस्य अपि आवश्यकता वर्तते। असुराणां परिभाषां निर्दिशन्त्याः श्रुतेः वचनम्- **' ते असुरा अयज्ञा अदक्षिणा अनक्षत्राः। यञ्च किञ्चाकुर्वत तां कृत्यामेवाकुर्वत ।'** एतद्विधाया वेदाज्ञायाः पालनं ज्योतिषशास्त्रज्ञाने सति एव यथायथं भवितुम् अर्हति। तस्मात् ज्योतिषं नाम वेदाङ्गम् अपि स्वीयं वैशिष्ट्यं निदधाति। इदं ज्योतिषम् कालविज्ञापकं शास्त्रम्। मुहूर्त्तं शोधयित्वा क्रियमाणाः यज्ञादिक्रियाविशेषाः फलाय कल्प्यन्ते, नान्यथा, तन्मुहूर्त्तज्ञानं च ज्योतिषायत्तम् अतः अस्य ज्यौतिषशास्त्रस्य वेदाङ्गत्वं स्वीकृतम्। आर्चज्योतिषे अयमर्थ उक्तः -

**' वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः।**

**तस्मादिदं कालविधानशास्त्रं यो ज्यौतिषं वेद स वेद यज्ञान्।।'**

चतुर्णाम् अपि वेदानां पृथक् पृथग् ज्योतिषशास्त्रम् आसीत्, तेषु सामवेदस्य ज्योतिषशास्त्रं न उपलभ्यते, त्रयाणाम् इतरेषां वेदानां ज्यौतिषाणि प्राप्यन्ते।



(१) ऋग्वेदस्य ज्यौतिषम् - आर्चज्यौतिषम्, षट्त्रिंशत्पद्यात्मकम्।

(२) यजुर्वेदस्य ज्यौतिषम् - याजुषज्यौतिषम्,ऊनचत्वारिंशत्पद्यात्मकम्।

(३) अथर्ववेदस्य ज्यौतिषम् - आथर्वणज्यौतिषम्, द्विषष्टि-उत्तरशतपद्यात्मकम्।

एतेषां त्रयाणाम् अपि ज्यौतिषाणां प्रणेता लगधो नाम आचार्यः। तत्र याजुषज्यौतिषस्य प्रामाणिकं भाष्यद्वयम् अपि प्राप्यते, एकं सोमाकरविरचितं प्राचीनम्, द्वितीयं सुधाकरद्विवेदीकृतं नवीनम्। एतस्य ज्यौतिषशास्त्रस्य त्रीणि वर्त्मानि, तस्मात् इदं शास्त्रं त्रिस्कन्धम् इत्युच्यते। तदुक्तम् -

**'सिद्धान्तसंहिताहोरारूपं स्कन्धत्रयात्मकम्**

**वेदस्य निर्मलं चक्षुर्ज्योतिश्शास्त्रमनुत्तमम्।।'**

लगध-प्रणीतस्य वेदाङ्गज्यौतिषग्रन्थस्य श्लोकानां रहस्यं किम् इत्येतद् वस्तुतः विदुषाम् अपि दुर्गमम्। ग्रन्थस्य अस्य अवतीर्णस्य ३४०० वर्षाणि व्यतीतानि इति शङ्करबालदीक्षितस्य विचारः। लोकमान्यतिलक-सुधाकरद्विवेदि-डॉ० थीवोप्रभृतयः विद्वांसः ग्रन्थस्य अस्य श्लोकान् व्याख्यातुं प्रचेष्टितवन्तः। भारतीयस्य ज्यौतिषशास्त्रस्य अयम् आद्यः ग्रन्थः। मन्ये, ततः प्राक् ज्यौतिषि क्वापि काचित् कृतिः लिखिता न अभूत्। वेदाङ्गज्यौतिषशास्त्रस्य कर्त्ता असन्दिग्धरूपेण लगधः आसीत्।

**' प्रणम्य शिरसा कालमभिवाद्य सरस्वतीम्।**

**कालज्ञानं प्रवक्ष्यामि लगधस्य महात्मनः।।'** (आर्चज्यौतिष श्लो.)

किञ्च कोऽयं लगधः। इति कोऽपि न जानाति। यज्ञविधानाय ज्यौतिषशास्त्रस्य इदं महत्त्वं भास्कराचार्येण अपि स्वीकृतम् -

**'वेदास्तावत् यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण।**

**शास्त्रादस्मात् कालबोधो यतः स्यात् वेदाङ्गत्वं ज्यौतिषशास्त्रस्योक्तमस्मात्।।'**
(सिद्धन्तशिरोमणिः)

वेदाङ्गज्यौतिषस्य सम्मत्यां ज्यौतिषसमयः वेदाङ्गेषु मूर्धस्थानीयः अस्ति -

**'यथा शिखामयूराणां नागानां मणयो यथा।**

**तद्वत् वेदाङ्गशास्त्राणां गणितं मूर्धनि स्थितम्।।'** (वेदाङ्गज्यौ. ४)

गच्छता कालेन इदं शास्त्रं संहितागणितजातकाख्येषु त्रिषु भागेषु आत्मानं प्रकटीचकार। आर्यभट्ट-वराहमिहिर-ब्रह्मगुप्त-भास्कराचार्यप्रभृतयः अगाधवैदुष्यवन्तः प्रतिभाशालिनः विश्वविदिताः ज्यौतिर्विदः अद्भुतान् सिद्धान्तान् अवतार्य शास्त्रमिदम् अभिनवेन रूपेण विभूषितवन्तः। इदं त्रिकालवर्त्तिनीम् अपि स्थितिं करतलामलकवत् करोति। एतेन परोक्षं भाविकालस्थितं च वस्तु प्रत्यक्षं जायते। सत्यमेव उक्तम् अस्य महिम्नि -

**'वेदस्य निर्मलं चक्षुः ज्योतिःशास्त्रमकल्मषम्।**

**विनैतदखिलं श्रौतं स्मार्तं कर्म न सिद्ध्यति।।'**



सर्वाणि अपि दर्शनानि, सकलानि शास्त्राणि, सर्वाः च उपनिषदः येषां हि परमरहस्यभूतानां वेदानां सौन्दर्यसुधां सततं पिबन्त्यः अपि न तृप्यन्ति, तान् वेदान् अनुशिलयितुं यथा साकल्य-आत्रेय-गार्ग्य-स्कन्दस्वामि-माधवभट्ट-नारायण-उद्गीथ-वेङ्कटमाधव-आनन्दतीर्थ-भवस्वामि-गुरुदेव-क्षुर-भट्टभास्करमिश्र-उव्वट-महीधर-भरतस्वामि-गुणविष्णु -सायणप्रभृतयः प्रीत्या भक्त्या च नितान्तम् एव प्रयासं कृतवन्तः, तथैव देशान्तरीयाः अपि विद्वांसः वेदस्य अमृतं पातुं तान् व्याख्यातुम् अध्येतुं वा प्रयत्नं कृतवन्तः।

वेदस्य षट्त्सु अङ्गेषु ज्यौतिषनाम अङ्गं नितान्तं महत्त्वपूर्णम् अङ्गम् अस्ति। यज्ञानां प्रतिपादनाय एव वेदाः प्रवृत्ताः। तेषां हि यज्ञानां विधानं समुचिते काले विधीयते चेत् तदैव तत्फलं लभ्यते। ज्यौतिःशास्त्रं यज्ञविधानस्य युक्ततरं कालं निर्दिशति तस्मात् एतत् शास्त्रं तत्कालविधायकशास्त्रम् इत्येतेन च नाम्ना भुवि सर्वत्र प्रख्यातं वर्त्तते।



## पाठगतप्रश्नाः-८

४४. ऋग्वेदस्य ज्यौतिषं किम्।

४५. यजुर्वेदस्य ज्यौतिषम् किम्।

४६. अथर्ववेदस्य ज्यौतिषम् किम्।

४७. आर्चज्योतिषे किमुच्यते।

४८. वेदाङ्गज्यौतिष्-शास्त्रस्य कर्त्ता कः।

४९. ज्योतिषं कतिविधम्।

५०. वेदस्य निर्मलं चक्षुः किम्।

५१. ज्योतिषशास्त्रस्य अपरं नाम् किम्।



## पाठसारः

धर्मार्थकाममोक्षाः - इत्येते चत्वारः पुरुषार्थाः वर्तन्ते। एषां पुरुषार्थानां प्राप्तये एव जनः सर्वदा भ्रमति। साङ्गवेदस्य अध्ययनेन एते लब्धुं शक्याः। तस्मात् साङ्गाः एव वेदाः अध्येयाः। अन्यथा केवलं वेदाध्ययनेन सामूहिकं ज्ञानं अध्येतृ-मनसि न जायते। अतः शिक्षाशास्त्रेण वेदमन्त्राणां शुद्धोच्चारणूर्वक - वेदपाठेन वेदमहिम्नः कीर्तनं तथा वेदरक्षणं च सम्भवति। कर्मज्ञानाय तथा यज्ञविधानज्ञानाय कल्पशास्त्रस्य पाठः कर्तव्यः। व्याकरणज्ञानं विना तु वेदमन्त्रस्य का कथा। तत्र वाङ्मयमात्रज्ञानम् एव न जायते। निःशेषेण उक्तस्य निरुक्तस्य ज्ञानम् अपि अत्यावश्यकम्। छन्दोज्ञानेन वेदस्य सम्यक् पाठः भवति, पठितृमनसि च आनन्दोद्भवः भवति। ज्यौतिःशास्त्रं यज्ञविधानस्य युक्ततरं कालं निर्दिशति,



तस्मात् ज्योतिषशास्त्रस्य च सर्वत्र एव मान्यता वर्तते। एतान् वेदाङ्गान् सम्यक् ज्ञात्वा वेदः अधीयते चेत् सम्पूर्णं फलं लभ्यते।



## पाठान्तप्रश्नाः

१. षट्सु अङ्गेषु प्राधान्येन किं किं प्रतिपादितम्।
२. वेदाङ्गानि व्याख्यात।
३. इन्द्रः वृत्रासुरम् कथं जघान ।
४. शिक्षाशास्त्रस्य कांश्चन ग्रन्थान् निर्दिशत ।
५. भरद्वाजशिक्षां व्याख्यात।
६. यथेच्छं शिक्षाशास्त्रस्य ग्रन्थत्रयं रचयितृपरिचयनिर्देशपुरःसरं व्याख्यात।
७. कल्पशास्त्रं व्याख्यात।
८. व्याकरणशास्त्रं विशदयत।
९. छन्दःशास्त्रं व्याख्यात।
१०. ज्योतिष्-शास्त्रं विशदं व्याख्यात।
११. यास्कस्य निरुक्तं व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. उपकारकः।
२. अङ्ग्यन्ते ज्ञायन्ते अमीभिः इति अङ्गानि इति विग्रहः।
३. कल्प्यते समर्थ्यते यागप्रयोगोऽत्र इति।
४. शिक्षा, कल्पः, व्याकरणं, छन्दः, निरुक्तं, ज्योतिषं च।
५. 'ब्राह्मणेन निष्कारणः धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति

### उत्तराणि-२

६. 'अथ शिक्षां व्याख्यास्यामः - वर्णाः, स्वरः, मात्रा, बलम्, साम, सन्तान इत्युक्तः शिक्षाध्यायः'।
७. स्वरवर्णाद्युच्चारणप्रकारो यत्र शिक्ष्यते उपदिश्यते सा शिक्षा इति।
८. बाभ्रव्यः।
९. 'उच्चैरुदात्तः', 'नीचैरनुदात्तः', 'समाहारः स्वरितः' चेति।
१०. आचार्यगालवकृतः शिक्षाग्रन्थः।



११. व्यासशिक्षा, भरद्वाजशिक्षा, पाणिनीयशिक्षा इत्यादि।

**उत्तराणि-३**

१२. संहिताशिक्षा।

१३. षष्टिः।

१४. लोपागमविकारप्रकृतिभावाख्यानां चतुर्विधसन्धीनाम्।

१५. वाजसनेयीसंहितया।

१६. त्रयोदश।

१७. सन्धिस्वरवर्णादीनाम्।

१८. त्रिंशदुत्तरशतम्(१३०)।

१९. आस्तिकमुनेः वंशजः गोकुलदैवज्ञस्य पुत्रः केशवदैवज्ञः।

२०. उपमन्युगोत्रीयः अग्निहोत्री खगपतिमहोदयस्य पुत्रः मल्लशर्मा इति नामकः कोऽपि कान्यकुब्जब्राह्मणः।

२१. अथर्ववेदेन।

**उत्तराणि-४**

२२. श्रौतसूत्राणि स्मार्त्तसूत्राणि च।

२३. गृह्यसूत्राणि धर्मसूत्राणि च।

२४. १.श्रौतसूत्रम्,२. गृह्यसूत्रम्, ३. धर्मसूत्रम्, ४.शुल्वसूत्रं चेति।

२५. आश्वलायनम्, शाङ्खायनञ्चेति।

२६. लाट्यायनश्रौतसूत्रम्, द्राह्यायणञ्चेति

**उत्तराणि-५**

२७. व्याक्रियन्ते शब्दाः अनेन इति व्याकरणम्।

२८. दण्डिना

२९. मुखेन

३०. वृषभरूपकत्वेन।

३१. अष्टौ। इन्द्रः चन्द्रः काशकृत्स्नः आपिशलिः शाकटायनः पाणिनिः अमरः जैनेन्द्रः चेति।

**उत्तराणि-६**

३२. पञ्च।

३३. दैवतकाण्डम्।

३४. देवराजयज्वा।

३५. क्षीरस्वामी अमरकोशस्य प्रसिद्धः टीकाकारः, निघण्टु-निर्वचनम् इति ग्रन्थस्य व्याख्याता च।



३६. १.अग्रायणः, २. औपमन्यवः, ३.औदुम्बरायणः,४.और्णवाभः, ५.काथक्यः, ६.क्रौष्टुकिः, ७.गार्ग्यः, ८.मालवः, ९.तैटिकिः,१०. वार्ष्यायणिः,११.शाकपूणिः,१२.स्थौलाष्ठिविश्च।

३७. रथीतरशाकपूणि-नाम्ना।

३८. द्वादश।

**उत्तराणि-७**

३९. छन्दयति (पृणाति) इति छन्दो वा छन्दयति (आह्लादयति ) इति छन्दः अथवा छन्द्यते अनेनेति छन्दः।

४०. यदक्षरपरिमाणं तच्छन्दः

४१. पादाभ्यां साकम्

४२. चत्वारः।

४३. पिङ्गलर्षिः।

**उत्तराणि-८**

४४. आर्चज्यौतिषम्, षट्त्रिंशत्पद्यात्मकम्।

४५. याजुषज्यौतिषम्, ऊनचत्वारिंशत्पदात्मकम्।

४६. आथर्वणज्यौतिषम्, द्विषष्टि-उत्तरशतपद्यात्मकम्।

४७. वेदा हि यज्ञार्थम् अभिप्रवृत्ताः..इत्यादिः।

४८. लगधः

४९. सिद्धान्तसंहिताहोरारूपं स्कन्धत्रयात्मकम्।

५०. ज्योतिष-शास्त्रम्।

५१. तत्कालविधायकशास्त्रम्।

।।इति सप्तमः पाठः।।



# ८

# साधारणस्वरः- १

## प्रस्तावना -

पाणिनीयव्याकरणे तु अन्येभ्यः प्रसिद्धव्याकरणेभ्यः स्वरविषयिणी चर्चा अधिकतया परिलक्ष्यते। स्वरविधायकानि बहूनि सूत्राणि अष्टाध्याय्यां विराजन्ते। तत्र विद्यमानैः कैश्चित् सूत्रैः धातुस्वरः विधीयते, कैश्चित् तु प्रत्ययस्वरः विधीयते, अन्यैः प्रातिपदिकस्वरः विधीयते। एतद्भिन्नानि साधारणस्वरविधायकानि अपि नैकानि सूत्राणि अष्टाध्याय्यां पदंकुर्वन्ति। तैः सूत्रैस्तु न कश्चित् विशिष्टः स्वरः विधीयते, अपि तु साधारणान् एव स्वरान् विदधति तानि सूत्राणि। तानि एव सूत्राणि अस्माभिः अस्मिन् पाठे संगृहीतानि। अत्र प्रधानतः कैश्चित् उदात्तादिस्वराः विधीयन्ते, कैश्चित् सूत्रैस्तु तेषां स्वराणां निषेधः अपि भवति। स्वरविषयकं सम्यक् ज्ञानं प्राप्तुम् अस्माभिः अवश्यम् एव इदं साधारणस्वरप्रकरणं पठनीयम्। अस्मिन् पाठे वयं तान् एव उदात्तानुदात्तस्वरिताख्यान् स्वरान् तद्विधायकानि सूत्राणि च पठामः। अस्मिन् पाठे दश सूत्राणि वयं पठामः।



## उद्देश्यानि -

इमं पाठं पठित्वा भवान् -

- मन्त्राणां स्वरविधानविषये जानीयात्।
- स्वरविधायकानि सूत्राणि अवगच्छेत्।
- सूत्राणाम् अर्थान् उदाहरणानि च बोद्धुं शक्नुयात्।
- उदाहरणेषु सूत्रार्थानां समन्वयः कथं भवति इति ज्ञातुं प्रभवेत्।
- आमन्त्रितविषये जानीयात्।

## ८.१) अनुदात्तं पदमेकवर्जम्॥ (६.१.१५६)

**सूत्रार्थः** - यस्मिन् पदे यस्य उदात्तः स्वरितः वा विधीयते तम् एकम् अचं वर्जयित्वा शेषं तत्पदम् अनुदात्ताच्कं भवति।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं परिभाषासूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि वर्तन्ते। अनुदात्तं पदम् एकवर्जम् इति सूत्रगतपदच्छेदः। अनुदात्तम् इति प्रथमान्तं तद्धितान्तं पदम्। पदम् इति



प्रथमान्तं पदम्। एकवर्जम् इत्यपि प्रथमान्तं पदम्। अनुदात्ताः अस्य सन्ति इत्यर्थे अनुदात्तशब्दात् 'अर्श-आदिभ्योऽच्' इति सूत्रेण मत्वर्थीय-अच्प्रत्यये अनुदात्तम् इति पदं निष्पद्यते। तस्य अर्थः भवति अनुदात्त-अच्विशिष्टं पदम् इति। एकवर्जम् इति पदस्य एकं वर्जयित्वा इत्यर्थः अस्ति। एकवर्जम्-इत्यस्मिन् पदे 'द्वितीयायां च' इति सूत्रेण णमुल्-प्रत्ययः वर्तते। परिभाषाः पदोपस्थापिकाः भवन्ति। अर्थात् परिभाषासूत्रेण अन्यस्मिन् सूत्रे किञ्चित् पदम् उपतिष्ठते, तथैव अस्य सूत्रस्य अपि परिभाषासूत्रत्वात् अनेन सूत्रेण 'एकं वर्जयित्वा अनुदात्तं पदम्' इति पदम् उपतिष्ठते।

तेन एकस्मिन् पदे वर्तमानाः अचः अनुदात्ताः भवन्ति, एकं वर्जयित्वा इत्येवम् अर्थः लभ्यते। तदा यम् एकं वर्जयित्वा अन्ये अनुदात्ताः भवन्ति इति उच्यते स एकः अच् कीदृशः भवेत् इति शङ्का उत्पद्यते। तत्र उच्यते यत् सः अच् उदात्तः स्वरितः वा भवति इति। तेन सूत्रस्य सामान्यः अर्थः भवति यत् एकस्मिन् पदे यावन्तः अचः सन्ति, तेषु एकम् उदात्तं स्वरितं वा अचं वर्जयित्वा अन्ये सर्वे अचः अनुदात्ताः भवन्ति इति।

**उदाहरणम्** - गोपाय नः स्वस्तयै इति।

**सूत्रार्थसमन्वयः** - रक्षणक्रियावाचिनः भ्वादिगणे पठितस्य गुपूधातोः पकारोत्तरस्य ऊकारस्य 'उपदेशेऽजनुनासिक इत्' इति सूत्रेण इत्संज्ञायां 'तस्य लोपः' इत्यनेन लोपे च कृते गुप् इति स्थिते 'धातोः' इति सूत्रेण गुप्-धातोः अन्त्यस्य अचः गकारोत्तरस्य उकारस्य उदात्तस्वरः विधीयते। ततः गुप्-धातोः 'गुपूधूपविच्छिपणिपनिभ्य आयः' इति सूत्रेण आयप्रत्यये निष्पन्नस्य गोपाय इत्यस्य ओकारस्य उकारस्य एव विकृतत्वात् उदात्तत्वं भवति। गोपाय इत्यस्य आयप्रत्ययान्तत्वेन 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायां 'धातोः' इति सूत्रेण गोपाय-धातोः अन्त्यस्य अचः यकारोत्तरस्य अकारस्य उदात्तस्वरः विधीयते। ततः गोपायधातोः लोटि मध्यमपुरुषैकवचने सिप्-प्रत्यये प्रक्रियाकार्ये गोपाय इति रूपं भवति। गोपाय इत्यत्र गकारोत्तरः ओकारः उदात्तः यकारोत्तरः अकारश्च उदात्तः अस्ति। तस्मात् प्रकृतसूत्रेण यकारोत्तरम् उदात्तम् अकारं वर्जयित्वा गकारोत्तरः ओकारः पकारोत्तरः आकारः च अनुदात्तः भवति। अत एव गोपाय नः स्वस्तयै इति प्रयोगः सिद्ध्यति।

## ८.२) अनुदात्तस्य च यत्रोदात्तलोपः॥ (६.१.१६१)

**सूत्रार्थः** - यस्मिन् अनुदात्ते परे उदात्तः लुप्यते तस्य उदात्तः भवति।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण उदात्तस्वरः विधीयते। अस्मिन् सूत्रे चत्वारि पदानि विद्यन्ते। अनुदात्तस्य च यत्र उदात्तलोपः इति सूत्रगतपदच्छेदः। तत्र अनुदात्तस्य इति षष्ठ्यन्तं पदम्। च इति अव्ययपदम्। यत्र इत्यपि अव्ययपदम्। उदात्तलोपः इति प्रथमान्तं समस्तं पदम्। उदात्तस्य लोपः उदात्तलोपः इति षष्ठीतत्पुरुषसमासः। 'कर्षात्वतो घञोऽन्त उदात्तः' इति पूर्वसूत्रात् उदात्तः इति प्रथमान्तं पदम् अनुवर्तते। यत्र उदात्तलोपः (तत्र) अनुदात्तस्य उदात्तः इति पदयोजना भवति। अनुदात्तस्य इति पदस्य यत्र इति पदेन सह सम्बन्धः वर्तते। तेन यस्मिन्

अनुदात्ते इत्यर्थः लभ्यते। अत एव यस्मिन् अनुदात्ते परे सति उदात्तस्य लोपः जायते, तस्य अनुदात्तस्य उदात्तः भवति इति सूत्रार्थः लभ्यते।

**उदाहरणम् -** देवीं वाचम् इति।

**सूत्रार्थसमन्वयः -** पचादिगणे देवट्-इति शब्दस्य पाठात् दिव्-धातोः 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति सूत्रेण अच्-प्रत्यये देवशब्दः निष्पद्यते। अच्-प्रत्ययस्य चकारस्य 'हलन्त्यम्' इति सूत्रेण इत्संज्ञा भवति, तस्मात् अच्-प्रत्ययः चित् वर्तते। तेन 'चितः' इति सूत्रेण अच्-प्रत्ययान्तस्य देवशब्दस्य अन्त्यस्य अचः अकारस्य उदात्तस्वरः विधीयते। एवम् अन्तोदात्तात् देवशब्दात् स्त्रीत्वविवक्षायां 'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः' इति सूत्रेण ङीप्प्रत्यये देव ङीप् इति स्थितिः भवति। तत्र ङीप्प्रत्ययस्य पकारस्य इत्त्वात् स प्रत्ययः पित् भवति। तेन 'अनुदात्तौ सुप्पितौ' इति सूत्रेण ङीप्प्रत्ययावयवस्य ईकारस्य अनुदात्तस्वरः विधीयते। ततः देव ई इति स्थिते 'यचि भम्' इति सूत्रेण देव इत्यस्य भसंज्ञायां 'यस्येति च' इति सूत्रेण ईकारपरकत्वात् पूर्वस्य भसंज्ञकस्य देव-इत्यस्य वकारोत्तरस्य अकारस्य लोपे देव् ई इति स्थितिः भवति। अत्र ईकाररूपे अनुदात्ते परे सति पूर्वस्य अकाररूपस्य उदात्तस्य लोपः जातः, तेन प्रकृतसूत्रेण तस्य अनुदात्तस्य ईकारस्य उदात्तस्वरः विधीयते। अतः देवीं वाचम् इति प्रयोगः सिध्यति।

## ८.३) चौ॥ (६.१.२२२)

**सूत्रार्थः -** लुप्ताकारे अञ्चतौ परे पूर्वस्य अन्तोदात्तः स्यात्।

**सूत्रव्याख्या -** पाणिनीयेषु षड्विधेषु सूत्रेषु विधिसूत्रम् इदम्। अनेन सूत्रेण उदात्तस्वरः विधीयते। अस्मिन् सूत्रे एकम् एव पदं वर्तते। तत् च चौ इति पदं सप्तम्येकवचनान्तं वर्तते। 'कर्षात्वतो घञोऽन्त उदात्तः' इति पूर्वसूत्रात् अन्तः उदात्तः इति च प्रथमान्तं पदद्वयम् अनुवर्तते। चौ अन्तः उदात्तः इति पदयोजना भवति। चौ इत्यत्र सप्तमी वर्तते, तस्मात् 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषाबलात् पूर्वस्य इति पदम् उपतिष्ठते। चौ इत्यनेन लुप्त-अकारविशिष्टः अञ्चु-धातुः गृह्यते। तेन लुप्त-अकारविशिष्टे अञ्चु-धातौ परे सति पूर्वस्य यः अन्त्यः अच्, तस्य उदात्तस्वरः भवति इति सूत्रार्थः लभ्यते।

**उदाहरणम् -** देवद्रीचीं नयत देवयन्तः इति।

**सूत्रार्थसमन्वयः -** देव-इत्युपपदपूर्वकात् अञ्च्-धातोः 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' इत्यनेन सूत्रेण क्विन्प्रत्यये प्रक्रियाकार्ये देव अच् इति स्थिते 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इति सूत्रेण क्विन्प्रत्ययान्तस्य अञ्च्-धातोः परत्वेन सत्त्वात् देवशब्दस्य अकारस्य स्थाने अद्रि-इत्यादेशे देवद्रि अच् इति स्थिते 'उगितश्च' इति सूत्रेण स्त्रीत्वविवक्षायां देवद्रि अच् -इत्यस्मात् शब्दात् ङीप्प्रत्यये अनुबन्धलोपे देवद्रि अच् ई इति स्थिते 'अचः' इति सूत्रेण लुप्तनकारस्य अञ्च्धातोः अकारस्य लोपे देवद्रि च् ई इति स्थिते 'चौ' इति सूत्रेण लुप्ताकारस्य अञ्च्धातोः परत्वेन सत्त्वात् पूर्वस्य अणः इकारस्य दीर्घे देवद्रीची इति स्थिते लुप्ताकारस्य अञ्च्धातोः परत्वेन सत्वात् पूर्वस्य देवद्री-इत्यस्य अन्त्यस्य ईकारस्य प्रकृतसूत्रेण उदात्तस्वरः विधीयते। तेन देवद्रीचीं नयत देवयन्तः इति प्रयोगः सिध्यति।



**विशेषः** - उदात्तनिवृत्तिस्वरापवादभूतम् इदं सूत्रम्। अर्थात् उदात्तस्य लोपं निमित्तीकृत्य 'अनुदात्तस्य च यत्रोदात्तलोपः' इति सूत्रेण अनुदात्तस्य स्थाने यत् उदात्तस्वरविधानं भवति, तस्य अपवादभूतं भवति एतत् सूत्रम्। तेन देव-इत्युपपदपूर्वकात् अञ्च्-धातोः क्विन्प्रत्यये प्रक्रियाकार्ये देव अच् इति स्थिते 'गतिकारकोपपदात् कृत्' इत्यनेन उत्तरपदप्रकृतिस्वरेण अञ्च्धातोः अकारः उदात्तः भवति। ततः देवशब्दस्य अकारस्य स्थाने अद्रि-इत्यादेशे देवद्रि अच् इति स्थिते, ततः ङीप्प्रत्यये ङीप्प्रत्ययस्य पित्त्वात् 'अनुदात्तौ सुप्पितौ' इत्यनेन ङीप्प्रत्ययस्य ईकारस्य अनुदात्तस्वरः भवति, तेन 'अचः' इत्यनेन अञ्च्धातोः उदात्तस्य अकारस्य लोपे सति 'अनुदात्तस्य च यत्रोदात्तलोपः' इति सूत्रेण अनुदात्तस्य ङीप्प्रत्ययस्य ईकारस्य उदात्तनिवृत्तिस्वरः प्राप्तः भवति, तदा तं प्रबाध्य प्रकृतसूत्रेण उदात्तस्वरः विधीयते।



## पाठगतप्रश्नाः-१

१. अनुदात्तं पदमेकवर्जम् इति कीदृशं सूत्रम् ?
२. अनुदात्तं पदमेकवर्जम् इत्यस्मिन् सूत्रे अनुदात्तम् इति पदे कस्मिन् अर्थे कः प्रत्ययः वर्तते ?
३. अनुदात्तं पदमेकवर्जम् इति सूत्रेण कः स्वरः विधीयते ?
४. अनुदात्तस्य च यत्रोदात्तलोपः इति सूत्रस्य कः अर्थः ?
५. अनुदात्तस्य च यत्रोदात्तलोपः इत्यस्य उदाहरणम् एकं लिखत।
६. चौ इति सूत्रम् कस्य अपवादभूतम् ?
७. चौ इत्यस्मिन् सूत्रे चौ इति पदस्य कः अर्थः ?
८. चौ इति सूत्रस्य उदाहरणम् एकं लिखत।

## ८.४) आमन्त्रितस्य च॥ (६.१.१९८)

**सूत्रार्थः** - आमन्त्रितस्य आदिः उदात्तः भवति।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण उदात्तस्वरः विधीयते। सूत्रेऽस्मिन् द्वे पदे स्तः। तत्र आमन्त्रितस्य इति षष्ठ्येकवचनान्तं पदम्। च इत्यव्ययपदम्। 'कर्षात्वतो घञोऽन्त उदात्तः' इति पूर्वसूत्रात् उदात्तः इति प्रथमान्तं पदम् अनुवर्तते। आदिः इति प्रथमान्तं पदं च पूर्वसूत्रात् अनुवर्तते। तेन आमन्त्रितस्य आदिः उदात्तः इति पदयोजना भवति। आदिः इति पदम् उदात्तः इत्यस्य विशेषणं भवति। अचः एव उदात्तादिस्वराः भवन्ति। अत एव सूत्रार्थः भवति यत् आमन्त्रितस्य आदिः अच् उदात्तः भवति इति।



सम्बोधने या प्रथमा, तदन्तस्य पदस्य आमन्त्रितसंज्ञा भवति। 'सामन्त्रितम्' इति आमन्त्रितसंज्ञाविधायकं सूत्रम्। यथा देवदत्त! इति देवदत्तशब्दस्य सम्बोधनैकवचनस्य रूपम्। अतः देवदत्त इति पदम् आमन्त्रितसंज्ञं भवति।

**उदाहरणम् -** अग्ने इन्द्र वरुण मित्र देवाः इति।

**सूत्रार्थसमन्वयः -** प्रस्तुतेऽस्मिन् उदाहरणे अग्ने इन्द्र वरुण मित्र देवाः इति पञ्च सम्बोधनान्तानि पदानि वर्तन्ते। अतः एतेषां पञ्चानां पदानां 'सामन्त्रितम्' इति सूत्रेण आमन्त्रितसंज्ञा भवति। ततः अग्निशब्दस्य सम्बोधनैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे अग्नि स् इति स्थिते 'एकवचनं सम्बुद्धिः' इति सूत्रेण सुप्रत्ययस्य सम्बुद्धिसंज्ञायां 'ह्रस्वस्य गुणः' इति सूत्रेण सम्बुद्धिपरकत्वात् ह्रस्वस्य अङ्गसंज्ञकस्य अग्निशब्दस्य अन्त्यस्य इकारस्य गुणे एकारे अग्ने स् इति स्थितिः जायते। ततः 'एङ्ह्रस्वात् सम्बुद्धेः' इति सूत्रेण एङन्तात् अग्ने इत्यस्मात् परस्य सम्बुद्धिहलः सकारस्य लोपे अग्ने इति पदं सिध्यति। ततः आमन्त्रितसंज्ञकस्य अग्ने इति पदस्य आदेः अचः अकारस्य प्रकृतसूत्रेण उदात्तस्वरः विधीयते। एवम् एव इन्द्र वरुण मित्र देवाः इत्यादौ अपि आदीनाम् अचां यथाक्रमम् इकारस्य अकारस्य इकारस्य एकारस्य च उदात्तस्वरः प्रकृतसूत्रेण भवति। अत एव अग्ने इति प्रयोगः सिध्यति।

## ८.५) आमन्त्रितस्य च॥ (८.१.१९)

**सूत्रार्थः -** पदात् परस्य अपादादिस्थितस्य आमन्त्रितस्य सर्वस्य अनुदात्तः स्यात्।

**सूत्रव्याख्या -** षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। सूत्रेऽस्मिन् पदद्वयं विद्यते। आमन्त्रितस्य इति षष्ठ्येकवचनान्तं पदम्। च इत्यव्ययपदम्। 'पदस्य', 'पदात्', 'अनुदात्तं सर्वमपादादौ' चेति सूत्रत्रयम् अधिक्रियते। तेन पदस्य इति षष्ठ्यन्तं पदम्, पदात् इति पञ्चम्यन्तं पदम्, अनुदात्तम् इति प्रथमान्तं पदम्, सर्वम् इति प्रथमान्तं पदम्, अपादादौ इति सप्तम्यन्तं पदं च अधिकारात् लभ्यते। अधिकारात् लब्धम् अनुदात्तम् इति पदं पुल्लिङ्गान्ततया विपरिणमते, तेन अनुदात्तः इति भवति। एवम् एव सर्वम् इति पदं षष्ठ्यन्ततया विपरिणमते, तेन सर्वस्य इति भवति। आमन्त्रितस्य इति पदं पदस्य इत्यनेन सह सम्बद्धते। पदात् अपादादौ सर्वस्य आमन्त्रितस्य पदस्य अनुदात्तः इति पदयोजना भवति।

पदात् इत्यत्र पञ्चमीनिर्दिष्टत्वात् 'तस्मादित्युत्तरस्य' इति परिभाषया परस्य इति पदं लभ्यते। अपादादौ इत्यत्र औपश्लोषिकसप्तमी वर्तते, अतः अपादादौ स्थितस्य इत्यर्थः लभ्यते। पदात् परं किञ्च पादस्य आदौ अवर्तमानं यत् आमन्त्रितं पदं, तस्य सर्वस्य पदस्य अनुदात्तस्वरः भवति इति सूत्रार्थः लभ्यते।

**उदाहरणम् -** इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमम् इति उदाहरणम्।

**सूत्रार्थसमन्वयः -** प्रस्तुतेऽस्मिन् उदाहरणे गङ्गे इति यमुने इति सरस्वति इति च पदत्रयं सम्बोधनान्तं वर्तते। अतः एतेषां त्रयाणां पदानां 'सामन्त्रितम्' इति सूत्रेण आमन्त्रितसंज्ञा भवति। मे इत्यस्मात् पदात् परं गङ्गे इति पदम् अस्ति, किञ्च तत् गङ्गे इति पदं पादस्य आदौ न विद्यते, अतः आमन्त्रितसंज्ञकस्य सम्पूर्णस्य गङ्गे इति पदस्य प्रकृतसूत्रेण अनुदात्तस्वरः विधीयते। एवम् एव गङ्गे



इत्यस्मात् पदात् परं यमुने इति पदम् अस्ति, किञ्च तत् यमुने इति पदं पादस्य आदौ न वर्तते, अतः आमन्त्रितसंज्ञकस्य सम्पूर्णस्य यमुने इति पदस्य प्रकृतसूत्रेण अनुदात्तस्वरः विधीयते। समानम् एव आमन्त्रितसंज्ञकस्य सरस्वति इति सम्पूर्णस्य पदस्य अपि प्रकृतसूत्रेण अनुदात्तस्वरः भवति। तेन इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमम् इत्येवं प्रयोगः सम्भवति।

**विशेषः** -

अपादादौ इति पदाभावात् सूत्रस्य अर्थः भवति यत् पदात् परं विद्यमानस्य सम्पूर्णस्य आमन्त्रितस्य पदस्य अनुदात्तस्वरः भवति इति। तदा प्रस्तुते एव उदाहरणे शुतुद्रि इति पदस्य सम्बोधनान्तत्वेन 'सामन्त्रितम्' इत्यनेन आमन्त्रितसंज्ञा भवति, ततः सरस्वति इत्यस्मात् पदात् परस्य आमन्त्रितसंज्ञकस्य शुतुद्रि इत्यस्य सम्पूर्णस्य पदस्य प्रकृतसूत्रेण अनुदात्तस्वरः प्राप्नोति, अतः तद्वारणाय अपादादौ इति उक्तम्। अतः शुतुद्रि इति पदस्य पादादौ स्थितत्वात् प्रकृतसूत्रेण अनुदात्तस्वरः न भवति।

## ८.६) विभाषितं विशेषवचने॥ (८.१.७४)

**सूत्रार्थः** - आमन्त्रितान्ते विशेषणे परे पूर्वं बहुवचनान्तम् अविद्यमानवद् वा भवति।

**सूत्रव्याख्या** - अतिदेशसूत्रमिदम्। अनेन सूत्रेण अविद्यमानवत्त्वम् अतिदिश्यते। अस्मिन् सूत्रे पदद्वयं विराजते। विभाषितम् इति प्रथमान्तं पदम्। विशेषवचने इति सप्तम्येकवचनान्तं समस्तं पदम्। अत्र भाष्यकारः बहुवचनम् इति पदं योजयित्वा सूत्रमिदं पूरितवान्। 'आमन्त्रितं पूर्वमविद्यमानवत्' इति सम्पूर्णमपि सूत्रम् अत्र अनुवर्तते। 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' इति सूत्रात् समानाधिकरणे आमन्त्रिते इति सप्तम्येकवचनान्तं पदद्वयम् अनुवर्तते। सम्बोधने या प्रथमा, तदन्तं पदं वेदे आमन्त्रितम् इत्युच्यते। अतः आमन्त्रितम् इत्यनेन पदस्य आक्षेपः क्रियते। आमन्त्रिते समानाधिकरणे विशेषवचने पदे आमन्त्रितं बहुवचनं पदं विभाषितम् अविद्यमानवत् इति पदयोजना। विशेषवचनम् इत्यस्य विशेषणम् इत्यर्थः। समानाधिकरणम् इत्यस्य समानविभक्तिकम् इत्यर्थः। आमन्त्रितं बहुवचनम् इति उभयमपि पदस्य विशेषणम्। अतः तदन्तविधिः भवति। तेन सूत्रस्य अर्थः आयाति - आमन्त्रितान्ते समानाधिकरणे विशेषणे पदे परे आमन्त्रितान्तं बहुवचनान्तं पदं विकल्पेन अविद्यमानवत् भवति इति। अस्य सामान्यः अर्थः हि यदि आमन्त्रितान्तं समानाधिकरणं विशेषणपदं परं तिष्ठति तर्हि आमन्त्रितान्तं बहुवचनान्तं पदं विकल्पेन अविद्यमानवत् भवति।

इदं सूत्रं 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' इति पूर्वसूत्रस्य अपवादभूतं वर्तते। आमन्त्रितान्ते समानाधिकरणे पदे परे पूर्वम् आमन्त्रितान्तं सामान्यवचनं पदम् अविद्यमानवद् न भवति इति तस्य सूत्रस्य अर्थः। एवं तेन सूत्रेण अविद्यमानवत्त्वं निषिध्यते। अनेन सूत्रेण तु आमन्त्रितान्ते समानाधिकरणे विशेषणे पदे परे आमन्त्रितान्तस्य बहुवचनान्तस्य पदस्य विकल्पेन अविद्यमानवत्त्वं विधीयते।

**उदाहरणम्**-देवीः षळुर्वीरुरु नः कृणोत।



**सूत्रार्थसमन्वयः-** अस्मिन् उदाहरणे देवीः इति पदं सम्बोधनविभक्त्यन्तं वर्तते। अतः तस्य आमन्त्रितत्वं सिध्यति। व्यपदेशिवद्भावम् आश्रित्य देवीः इति पदस्य आमन्त्रितान्तत्वम् अपि सिध्यति। इदं च पदं बहुवचनान्तम् अपि वर्तते। ततः विद्यमानं षट् इति पदम् अपि सम्बोधनविभक्त्यन्तत्वात् आमन्त्रितं वर्तते। व्यपदेशिवद्भावम् आश्रित्य षट् इति पदस्य अपि आमन्त्रितान्तत्वं सिध्यति। इदं च पदं पूर्ववर्तिना देवीः इति पदेन सह समानविभक्तिकं तस्य विशेषणं च वर्तते। अतः तस्मिन् आमन्त्रितान्ते समानाधिकरणे विशेषणे षट्-शब्दे परे पूर्वस्य आमन्त्रितान्तस्य बहुवचनान्तस्य देवीः इति पदस्य अविद्यमानवत्त्वं प्रकृतसूत्रेण विधीयते। इदं च अविद्यमानवत्त्वं वैकल्पिकं वर्तते। तेन अविद्यमानवत्त्वपक्षे देवीः इति पदम् अविद्यमानं भवति। तदा षट्-शब्दः एव पादादौ तिष्ठति। तेन अष्टमाध्यायस्थम् 'आमन्त्रितस्य च' इति सूत्रं तत्र न प्रवर्तते। षष्ठाध्यायस्थेन 'आमन्त्रितस्य च' इति सूत्रेण तत्र उदात्तस्वरः विधीयते। अविद्यमानवत्त्वस्य अभावपक्षे देवीः इति पदं विद्यमानमेव भवति। तदा षट् इति पदं पादादौ न तिष्ठति। अतः आष्टमिकेन 'आमन्त्रितस्य च' इति सूत्रेण सर्वानुदात्तस्वरः विधीयते।

## ८.७) सुबामन्त्रिते पराङ्गवत्स्वरे॥ (२.१.२)

**सूत्रार्थः** - सुबन्तम् आमन्त्रिते परे परस्य अङ्गवद् भवति स्वरे कर्तव्ये।

**सूत्रव्याख्या-** षड्विधेषु पाणिनीयसूत्रेषु अतिदेशसूत्रमिदम्। अनेन सूत्रेण अङ्गवत्त्वम् अतिदिश्यते। सुप् आमन्त्रिते पराङ्गवत् स्वरे इति सूत्रगतपदच्छेदः। अस्मिन् सूत्रे चत्वारि पदानि वर्तन्ते। तत्र सुप् इति प्रथमान्तं पदम्। आमन्त्रिते इति सप्तम्येकवचनान्तं पदम्। पराङ्गवत् इति प्रथमान्तं समस्तं पदम्। स्वरे इति सप्तम्येकवचनान्तं पदम्। सम्बोधन या प्रथमा, तदन्तं पदं वेदे आमन्त्रितम् इत्युच्यते। अतः आक्षेपेण पदम् इति लभ्यते। सुप् आमन्त्रिते पदे पराङ्गवत् स्वरे इति पदयोजना। 'प्रत्ययग्रहणे तदन्ता ग्राह्याः' इति परिभाषाबलेन सुप् इत्यनेन सुबन्तम् इति ग्राह्यम्। आमन्त्रितम् इति पदस्य विशेषणम्। अतः अत्र तदन्तविधिः भवति। परस्य अङ्गवत् पराङ्गवत् इति षष्ठीतत्पुरुषसमासः। अत्र अङ्गशब्दः अवयववाचकः वर्तते। कर्तव्ये इति अध्याह्रियते। तेन सुबन्तम् आमन्त्रितान्ते पदे परे परस्य अङ्गवत् भवति स्वरे कर्तव्ये इति सूत्रार्थः आयाति। अस्य सामान्यः अर्थो हि यदि सुबन्तात् परम् आमन्त्रितान्तं पदं तिष्ठति तर्हि तत् सुबन्तपदं परवर्तिनः आमन्त्रितान्तपदस्य अवयववत् भवति। अर्थात् आमन्त्रिते पदे यादृशः स्वरः अस्ति तादृशः एव स्वरः पूर्ववर्तिनि सुबन्ते अपि प्रयोज्यः।

**इदमत्र अवधेयम्** - यदि सुबन्तम् आमन्त्रितान्तम् इति पदद्वयं पादादौ तिष्ठति तर्हि तत्र 'आमन्त्रितस्य च' इत्यनेन षष्ठाध्यायस्थेन सूत्रेण आद्युदात्तः भवति। यदि सुबन्तम् आमन्त्रितान्तम् इति पदद्वयं पादादौ न तिष्ठति तर्हि 'आमन्त्रितस्य च' इत्यनेन अष्टमाध्यायस्थेन सूत्रेण सर्वानुदात्तस्वरः विधीयते। किन्तु स्वरविधाने कर्तव्ये एव इदं पराङ्गवत्त्वं सिध्यति, न ततः अन्येषु स्थलेषु।

**उदाहरणम्-** द्रवत्पाणी शुभस्पती। यत्तौ दिवो दुहितर्मर्तु भोजनम्।

**सूत्रार्थसमन्वयः-** शुभस्पती इति अत्र उदाहरणं वर्तते। शुभ शुम्भ दीप्तौ इति धातोः भावे क्विप्प्रत्यये शुब् इति शब्दः निष्पद्यते। तस्य षष्ठीविभक्तौ शुभः इति रूपं सिध्यति। पती इति पदं सम्बोधने वर्तते। तस्मिन् परे शुभः इति पदस्य विसर्गस्य स्थाने 'षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु'



इति सूत्रेण सकारः भवति। अत्र शुभस् इति षष्ठ्येकवचनान्तं सुबन्तं पदम्। ततः पती इति आमन्त्रितं पदं वर्तते। व्यपदेशिवद्भावम् आश्रित्य अस्य आमन्त्रितान्तत्वम् अपि सिध्यति। अतः प्रकृतसूत्रेण शुभस् इति पदम् आमन्त्रितान्तस्य पती इति पदस्य अवयववत् भवति। तेन 'आमन्त्रितस्य च' इति षाष्ठेन सूत्रेण शुभस्पती इत्यस्य समुदायस्य आदिस्वरः उदात्तः विधीयते। आष्टमिकेन सूत्रेण अत्र सर्वानुदात्तस्वरः भवितुं नार्हति। यतो हि 'आमन्त्रितं पूर्वमविद्यमानवत्' इति सूत्रेण द्रव्यत्पाणी इति पदम् अविद्यमानवत् अस्ति। तेन शुभस्पती इति पदं पादादौ एव अस्ति। पादादौ विद्यमानस्य आमन्त्रितपदस्य षाष्ठेन 'आमन्त्रितस्य च' इति सूत्रेण सर्वानुदात्तस्वरः भवितुं नार्हति। यतो हि 'आमन्त्रितस्य च' इत्यनेन सूत्रेण अपादादौ विद्यमानस्य आमन्त्रितस्य सर्वानुदात्तस्वरः विधीयते।

यत्त्वं दिवो दुहितर्मर्तु भोजनम् इत्यस्मिन् ऋङ्मन्त्रे दुहितः इति पदं सम्बोधने वर्तते। अतः इदं आमन्त्रितं वर्तते। व्यपदेशिवद्भावम् आश्रित्य अस्य आमन्त्रितान्तत्वम् अपि सिध्यति। तस्मिन् आमन्त्रितान्ते पदे परे पूर्वं विद्यमानं दिवः इति सुबन्तं पदं परस्य अवयववत् भवति। तेन दिवः इति पदम् अपि आमन्त्रितं भवति। तच्च अत्र पदात् परं विद्यते, पादादौ न विद्यते। अतः आष्टमिकेन 'आमन्त्रितस्य च' इति सूत्रेण अत्र सर्वानुदात्तः विधीयते।



## पाठगतप्रश्नाः - २

९. षष्ठाध्यायस्थस्य 'आमन्त्रितस्य च' इति सूत्रस्य कः अर्थः ?
१०. अष्टमाध्यायस्थे 'आमन्त्रितस्य च' इत्यस्मिन् सूत्रे के अधिकाराः आयान्ति ?
११. अष्टमाध्यायस्थस्य 'आमन्त्रितस्य च' इति सूत्रस्य उदाहरणम् एकं लिखत।
१२. 'विभाषितं विशेषवचने' इति कीदृशं सूत्रम् ?
१३. 'विभाषितं विशेषवचने' इति सूत्रे बहुवचनम् इति पदं कथम् आगच्छति ?
१४. 'विभाषितं विशेषवचने' इति कस्य अपवादसूत्रम् ?
१५. किं नाम आमन्त्रितम् ?
१६. 'सुबामन्त्रिते पराङ्गवत्स्वरे' इति सूत्रस्य कः अर्थः ?
१७. कस्मिन् कर्तव्ये 'सुबामन्त्रिते पराङ्गवत्स्वरे' इति सूत्रं प्रवर्तते ?
१८. शुभस्पती इत्युदाहरणे शुभः इत्यत्र का विभक्तिः ?
१९. आष्टमिकेन 'आमन्त्रितस्य च' इति सूत्रेण किं विधीयते -
(क) अनुदात्तः (ख) अन्तोदात्तः (ग) सर्वानुदात्तः (घ)आद्युदात्तः
२०. षाष्ठेन 'आमन्त्रितस्य च' इति सूत्रेण किं विधीयते -
(क) अनुदात्तः (ख) अन्तोदात्तः (ग) सर्वानुदात्तः (घ)आद्युदात्तः



## ८.८) उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य॥ (८.२.४)

**सूत्रार्थः**-उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्य अनुदात्तस्य स्वरितः भवति।

**सूत्रव्याख्या-** पाणिनीयेषु षड्विधेषु सूत्रेषु विधिसूत्रमिदम्। अनेन सूत्रेण स्वरितस्वरः विधीयते। उदात्तस्वरितयोः यणः स्वरितः अनुदात्तस्य इति सूत्रगतपदच्छेदः। अस्मिन् सूत्रे चत्वारि पदानि वर्तन्ते। तत्र उदात्तस्वरितयोः इति सप्तमीद्विवचनान्तं पदम्। यणः इति पञ्चम्येकवचनान्तं पदम्। स्वरितः इति प्रथमान्तं विधेयपदम्। अनुदात्तस्य इति षष्ठ्येकवचनान्तं पदम्। उदात्तस्वरितयोः यणः अनुदात्तस्य स्वरितः पदयोजना। उदात्तस्वरितयोः इत्यस्य उदात्तस्थाने स्वरितस्थाने इत्यर्थः। तेन उदात्तस्थाने स्वरितस्थाने च यः यण् वर्तते ततः परस्य अनुदात्तस्य स्वरितः भवति इति सूत्रार्थः आयाति। अस्य सामान्यः अर्थो हि उदात्तस्थाने यः यण् विहितः तस्मात् यणः परं वर्तमानस्य अनुदात्तस्य स्वरितः भवति। स्वरितस्थाने च यः यण् विहितः तस्मात् यणः परं वर्तमानस्य अनुदात्तस्य स्वरितः भवति।

**उदाहरणम्-** अभ्य॑भि हि। खलप्व्या॑शा।

**सूत्रार्थसमन्वयः-** अभ्य॑भि इति उदात्तस्थाने विहितस्य यणः उदाहरणम्। अभि अभि इति स्थिते 'इको यणचि' इति सूत्रेण अचि परे अभि इत्यस्य इकारस्य स्थाने यणादेशे अभ्यभि इति रूपं सिध्यति। अभिशब्दे प्राप्तस्य उदात्तस्य 'उपसर्गश्चाधिवर्जम्' इति सूत्रेण निषेधः भवति। अतः 'फिषोन्त उदात्तः' इति सूत्रेण अभिशब्दे अन्तोदात्तः विधीयते। अतः अभिशब्दस्य अन्त्यः इकारः उदात्तः अस्ति। अभिशब्दस्य 'नित्यवीप्सयोः' इति सूत्रेण द्वित्वे अभि अभि इति लभ्यते। ततः द्वयोः अभिशब्दयोः परस्य अभिशब्दस्य 'अनुदात्तं च' इति सूत्रेण अनुदात्तस्वरः विधीयते। अस्याम् अवस्थायां प्रथमस्य अभि इत्यस्य उदात्तस्य इकारस्य स्थाने यण् विहितः। अतः तस्मात् परस्य अनुदात्तस्य स्थाने प्रकृतसूत्रेण स्वरितस्वरः विधीयते।

खलप्व्या॑शा इति स्वरितस्थाने विहितस्य यणः उदाहरणम्। खलपूशब्दस्य सप्तम्येकवचने खलप्वि इति रूपम्। खलप्वि आशा इति स्थिते 'इको यणचि' इति सूत्रेण अचि परे खलप्वि इत्यस्य इकारस्य स्थाने यणादेशे खलप्व्याशा इति रूपं सिध्यति। यदि उपपदसमासस्य उत्तरपदे किमपि कृदन्तं पदं तिष्ठति तर्हि तत् कृदन्तपदं प्रकृत्या एव उदात्तः भवति। अत्र खलपूशब्दः उपपदसमासेन निष्पन्नः। अस्य उत्तरपदं च कृदन्तं वर्तते। अतः खलपूशब्दः अन्तोदात्तः इति सिध्यति। तस्मात् खलपूशब्दात् ङिप्रत्यये प्रक्रियाकार्ये खलपू इ इति जाते 'इको यणचि' इति सूत्रेण यणि खलप्वि इति रूपं सिध्यति। अत्र यः यण् वर्तते स उदात्तस्य स्थाने विहितः। ङिप्रत्ययस्य इकारश्च सुप्त्वाद् अनुदात्तः। अतः उदात्तस्थाने यः यण् ततः परस्य अनुदात्तस्य इकारस्य प्रकृतसूत्रेण स्वरितस्वरः विधीयते। आशाशब्दः 'आशाया अदिगख्या चेत्' इति सूत्रेण अन्तोदात्तः वर्तते। अतः 'अनुदात्तं पदमेकवर्जम्' इति सूत्रेण तस्य आदिमः आकारः अनुदात्तः इति सिध्यति। खलप्वि आशा इति स्वरितस्य इकारस्य स्थाने यण् विहितः। एवं स्वरितस्थाने विहितः यः यण् ततः परस्य अनुदात्तस्य आकारस्य प्रकृतस्थाने स्वरितस्वरः विहितः।



## ८.९) एकादेश उदात्तेनोदात्तः॥ (८.२.५)

**सूत्रार्थः-** उदात्तेन सह एकादेशः उदात्तः भवति।

**सूत्रव्याख्या-** पाणिनीयेषु षड्विधेषु सूत्रेषु विधायकमिदम्। इदं सूत्रम् उदात्तस्वरं विदधाति। एकादेशः उदात्तेन उदात्तः इति सूत्रगतपदच्छेदः। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। एकादेशः इति प्रथमैकवचनान्तं पदम्। उदात्तेन इति तृतीयैकवचनान्तं पदम्। उदात्तः इति प्रथमैकवचनान्तं विधेयपदम्। उदात्तेन एकादेश उदात्तः इति सूत्रगतपदयोजना। सूत्रेऽस्मिन् सहशब्दस्य उल्लेखः नास्ति। किन्तु यथा 'वृद्धो यूना तल्लक्षणश्चेदेव विशेषः' इति सूत्रे यूना इत्यत्र सहशब्दं विनापि तृतीया भवति तद्वत् अत्रापि उदात्तेन इत्यत्र सहयोगात् तृतीया अस्ति। तेन सूत्रस्य अर्थः भवति - उदात्तेन सह एकादेशः उदात्तः भवति।

उदात्तेन सह एकादेशः त्रिविधः भवितुम् अर्हति - उदात्तानुदात्तयोः स्थाने एकादेशः, उदात्तोदात्तयोः स्थाने एकादेशः, उदात्तस्वरितयोः स्थाने एकादेशः च। उदात्तोदात्तयोः स्थाने एकादेशः भवति चेत् आन्तरतम्यादेव उदात्तस्य प्राप्तिः भवति। अतः तस्य कृते सूत्रमिदं नावश्यकम्। किन्तु यदा उदात्तानुदात्तयोः उदात्तस्वरितयोः वा स्थाने एकादेशः भवति तदा अनुदात्तस्य स्वरितस्य च प्राप्तिः भवति। अतः तत्रापि उदात्तविधानाय अस्य सूत्रस्य प्रवर्तनम्।

**उदाहरणम्-** क्वं वोऽश्वाः। क्वावंरं मरुतः।

**सूत्रार्थसमन्वयः-** क्वं वोऽश्वाः इत्यत्र उदात्तानुदात्तयोः स्थाने एकादेशः भवति। तथाहि वस् अश्वाः इति स्थिते 'ससजुषो रुः' इति पदान्तस्य सकारस्य रुत्वे अनुबन्धलोपे वर् अश्वाः इति जाते 'अतो रोरप्लुतादप्लुते' इति सूत्रेण अप्लुताद् अकारात् परस्य रोः अप्लुताकरपरकत्वात् उत्वे व उ अश्वाः इति जाते आद् गुणः इति सूत्रेण पूर्वपरयोः उकाराकारयोः स्थाने ओकाररूपे गुणैकादेशे वो अश्वाः इति जाते 'एकः पूर्वपरयोः' इत्यधिकारे पठितेन 'एङः पदान्तादति' इति सूत्रेण पूर्वपरयोः ओकाराकारयोः स्थाने ओकाररूपपूर्वरूपैकादेशः भवति। वस्तुतः बहुवचने युष्मद्-शब्दस्य स्थाने 'बहुवचनस्य वस्नसौ' इति सूत्रेण वस् इत्यादेशः भवति। 'बहुवचनस्य वस्नसौ' इत्यस्मिन् सूत्रे 'अनुदात्तं सर्वमपादादौ' इति सूत्रम् अनुवर्तते। अतः वस् इत्यादेशः अनुदात्तः अस्ति। अश्-धातोः क्विन्प्रत्यये निष्पन्नः अश्वशब्दः आद्युदात्तः। एवम् अश्वशब्दस्य आदिमः अकारः उदात्तः। एतयोः उदात्तानुदात्तयोः स्थाने अत्र एकादेशः जातः। अतः अनयोः स्थाने जायमानः ओकाररूपपूर्वरूपैकादेशः प्रकृतसूत्रेण उदात्तः भवति।

क्वावंरं मरुतः इत्यत्र उदात्तस्वरितयोः स्थाने एकादेशः भवति। क्व अवरम् इति स्थिते 'एकः पूर्वपरयोः' इत्यधिकारे पठितेन 'अकः सवर्णे दीर्घः' इति सूत्रेण पूर्वपरयोः अकाराकारयोः स्थाने आकाररूपसवर्णदीर्घैकादेशः भवति। किम्-शब्दात् 'किमोऽत्' इति सूत्रेण अदादेशः भवति। तदन्तरम् अतः तकारस्य अनुबन्धलोपे किम् अ इति स्थिते अति परे 'क्वाति' इति सूत्रेण किमः स्थाने क्वादेशे क्व अ इति जाते 'यति भम्' इति सूत्रेण क्व इत्यस्य भसंज्ञायां 'यस्येति च' भसंज्ञकस्य अकारस्य लोपे क्व् अ इति जाते सर्वसंयोगे निष्पन्नस्य क्व इत्यस्य प्रातिपदिकत्वात् सुबुत्पत्तौ अव्ययत्वात् 'अव्ययादाप्सुपः' इति सुपो लुकि क्व इति रूपं सिध्यति। अत् इत्यत्र तकारः 'हलन्त्यम्' इति सूत्रेण इत्संज्ञकः। अतः



'तित्स्वरितम्' इति सूत्रेण क्व इत्यत्र स्वरितस्वरः विधीयते। अवरशब्दः 'स्वाङ्गशिटामदन्तानाम्' इति सूत्रेण आद्युदात्तः वर्तते। अर्थात् अवरशब्दस्य आदिमः अकारः उदात्तः। एतयोः उदात्तस्वरितयोः स्थाने अत्र एकादेशः जातः। अतः अनयोः स्थाने जायमानः आकाररूपसवर्णदीर्घैकादेशः प्रकृतसूत्रेण उदात्तः भवति।

## ८.१०) स्वरितो वानुदात्ते पदादौ॥ (८.२.६)

**सूत्रार्थः-** अनुदात्ते पदादौ परे उदात्तेन सह एकादेशः स्वरितो वा भवति।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन सूत्रेण विकल्पेन स्वरितस्वरः विधीयते। स्वरितः वा अनुदात्ते पदादौ इति सूत्रगतपदच्छेदः। अस्मिन् सूत्रे चत्वारि पदानि वर्तन्ते। स्वरितः इति प्रथमान्तं विधेयपदम्। वा इति अव्ययपदम्। अनुदात्ते पदादौ इति उभयमपि पदं सप्तम्येकवचनान्तम्। 'एकादेश उदात्तेनोदात्तः' इति सूत्रात् एकादेशः इति प्रथमैकवचनान्तम् उदात्तेन इति च तृतीयैकवचनान्तं पदम् अनुवर्तते। अनुदात्ते पदादौ उदात्तेन एकादेश स्वरितो वा इति पदयोजना। उदात्तेन इत्यत्र सहयोगात् तृतीया अस्ति। तेन सूत्रार्थः आयाति अनुदात्ते पदादौ परे उदात्तेन सह एकादेशः विकल्पेन स्वरितो भवति इति। अस्य सामान्यः अर्थः हि यदि पदादौ अनुदात्तस्वरः तिष्ठति, ततःपूर्वं च उदात्तस्वरः तिष्ठति तर्हि तस्य अनुदात्तस्य उदात्तस्य च स्थाने यः एकादेशः भवति स एकादेशः विकल्पेन स्वरितः भवति। यस्मिन् पक्षे स्वरितः न भवति तत्र एकादेश उदात्तेनोदात्तः इति पूर्वसूत्रेण उदात्तस्वरः भवति।

अस्मिन् सूत्रे या विभाषा वर्तते सा व्यवस्थितविभाषा वर्तते। अस्याः विभाषायाः प्रवृत्तेः तथा कोपि निर्दिष्टः नियमः नास्ति। इयं विभाषा कुत्रापि प्रवर्तते, कुत्रापि न प्रवर्तते। अतः अनेन सूत्रेण कुत्रापि स्वरितस्वरः भवति, कुत्रापि उदात्तस्वरः भवति।

**उदाहरणम्-** वीँदं ज्योतिर्हृदये। अस्य श्लोकौं दिवीयते।

**सूत्रार्थसमन्वयः-** वीँदम् इति स्वरितस्य उदाहरणम्। वि इदम् इति स्थिते 'एकः पूर्वपरयोः' इत्यधिकारे पठितेन 'अकः सवर्णे दीर्घः' इति सूत्रेण पूर्वपरयोः इकारेकारयोः स्थाने ईकाररूपसवर्णदीर्घैकादेशे वीदम् इति रूपं सिध्यति। वि इति एकः निपातः वर्तते। अतः निपातकारणात् अयम् आद्युदात्तः। इदम्-शब्दः 'फिषोन्त उदात्तः' इति फिट्सूत्रेण अन्तोदात्तः वर्तते। अतः 'अनुदात्तं पदमेकवर्जम्' इति सूत्रेण अस्य आदिमः इकारः अनुदात्तः वर्तते। एवं वि इत्यत्र उदात्तस्वरः वर्तते। ततः इदम् इत्यत्र पादादौ अनुदात्तस्वरः वर्तते। अतः अनयोः उदात्तानुदात्तयोः स्थाने यः ईकाररूपः एकादेशः जातः स प्रकृतसूत्रेण विकल्पेन स्वरितः भवति।

दिवीयते इति उदात्तस्य उदाहरणम्। दिवि ईयते इति स्थिते 'एकः पूर्वपरयोः' इत्यधिकारे पठितेन 'अकः सवर्णे दीर्घः' इति सूत्रेण पूर्वपरयोः इकारेकारयोः स्थाने ईकाररूपसवर्णदीर्घैकादेशे दिवीयते इति रूपं सिध्यति। दिवि इत्यत्र या ङिविभक्तिः वर्तते सा 'उडिदम्पदाद्यप्पुम्रैद्युभ्यः' इति सूत्रेण उदात्ता वर्तते। दिवादिगणीयस्य ईङ् गतौ इति धातोः लटि प्रथमपुरुषैकवचने ईयते इति रूपं सिध्यति। दिवि इति अतिङन्तं पदं वर्तते। ईयते इति च तिङन्तं पदं वर्तते। अतः 'तिङ्ङतिङः' इति सूत्रेण ईयते



इत्यस्य ईकारः अनुदात्तः वर्तते। अतः अनयोः उदात्तानुदात्तयोः स्थाने यः ईकाररूपः एकादेशः जातः तत्र प्रकृतसूत्रेण स्वरितस्वरः प्राप्तः आसीत्। किन्तु सूत्रस्य वैकल्पिकत्वात् पक्षे 'एकादेश उदात्तेनोदात्तः' इति सूत्रेण उदात्तस्वरः विहितः।



## पाठगतप्रश्नाः - ३

२१. 'उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्य' इत्यनेन सूत्रेण किं विधीयते ?

२२. आशाशब्दः केन सूत्रेण अन्तोदात्तः वर्तते ?

२३. अभिशब्दस्य द्वित्वं केन सूत्रेण भवति ?

२४. खलपू-शब्दे कः समासः वर्तते -

(क) अव्ययीभावसमासः (ख) उपपदसमासः (ग) तत्पुरुषसमासः (घ) कर्मधारयसमासः

२५. किमः स्थाने क्वादेशः केन सूत्रेण भवति ?

२६. अवरशब्दः केन सूत्रेण आद्युदात्तः वर्तते ?

२७. 'एकादेश उदात्तेनोदात्तः' इत्यस्मिन् सूत्रे उदात्तेन इत्यत्र कथं तृतीया ?

२८. क्वं वोऽश्वाः इत्यत्र कयोः स्थाने एकादेशः -

(क) उदात्तादात्तयोः (ख) उदात्तानुदात्तयोः (ग) उदात्तस्वरितयोः (घ) स्वरितोदात्तयोः

२९. क्वावरं मरुतः इत्यत्र कयोः स्थाने एकादेशः -

(क) उदात्तादात्तयोः (ख) उदात्तानुदात्तयोः (ग) उदात्तस्वरितयोः (घ) स्वरितोदात्तयोः

३०. 'स्वरितो वानुदात्ते पदादौ' इत्यस्मिन् सूत्रे कीदृशी विभाषा वर्तते ?

३१. इदम्-शब्दः केन सूत्रेण अन्तोदात्तः वर्तते ?

३२. ईयते इति कस्य धातोः रूपम् ?

३३. वीदम् इत्यत्र यः ईकारः वर्तते तत्र कः स्वरः वर्तते ?

टिप्पणी





## पाठसारः

'अनुदात्तं पदमेकवर्जम्' इति परिभाषा स्वरविधिविषया वर्तते। तस्याः अर्थो हि एकस्मिन् पदे यदि एकः उदात्तः अनुदात्तः वा अच् तिष्ठति, तर्हि तम् एकम् अचं वर्जयित्वा अन्ये सर्वे अचः अनुदात्ताः भवन्ति इति। अनुदात्ते परे सति कश्चित् उदात्तस्वरः लुप्यते चेत्, तस्य लोपनिमित्तीभूतस्य अनुदात्तस्य उदात्तः भवति इति 'अनुदात्तस्य च यत्रोदात्तलोपः' इति सूत्रस्य सामान्यः अर्थः। अकारः लुप्तः जातः एवं यः अञ्चधातुः तस्मिन् अञ्चधातौ परे सति पूर्वस्य अन्तोदात्तः भवति इति 'चौ' इति सूत्रार्थः। सम्बोधने या प्रथमा तदन्तं पदं वेदे आमन्त्रितम् इति कथ्यते। आमन्त्रितसंज्ञकस्य पदस्य आदिः अच् उदात्तः भवति इति षष्ठाध्याये पठितस्य 'आमन्त्रितस्य च' इति सूत्रस्य अर्थः। अष्टमाध्याये पठितस्य 'आमन्त्रितस्य च' इति सूत्रस्य अर्थो हि पदात् परं किञ्च पादस्य आदौ अवर्तमानं यत् आमन्त्रितं पदं, तस्य सर्वस्य पदस्य अनुदात्तस्वरः भवति इति। 'विभाषितं विशेषवचने' इति एकम् अतिदेशसूत्रं वर्तते। यदि आमन्त्रितान्तं समानविभक्तिकं विशेषणपदं परं तिष्ठति तर्हि आमन्त्रितान्तं बहुवचनान्तं पदं विकल्पेन अविद्यमानवत् भवति इति तस्य सूत्रस्य अर्थः। अविद्यमानवत्त्वे सञ्जाते तद् आश्रित्य बहूनि विधानानि सम्भवन्ति। ततः 'सुबामन्त्रिते पराङ्गवत्स्वरे' इति सूत्रेण आमन्त्रिते पदे परे पूर्ववर्तिनः सुबन्तस्य पदस्य अङ्गवत्त्वम् अतिदिष्टम्। उदात्तस्थाने स्वरितस्थाने च यो यण् वर्तते ततः परस्य अनुदात्तस्य स्वरितः भवति इति 'उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्य' इति सूत्रस्य अर्थः। 'एकादेश उदात्तेनोदात्तः' इति सूत्रेण उदात्तानुदात्तयोः उदात्तस्वरितयोः च स्थाने यः एकादेशः भवति स एकादेशः उदात्तः भवति इति। ततः परवर्तिना 'स्वरितो वानुदात्ते पदादौ' इति सूत्रेण विकल्पेन स्वरितस्वरः विहितः। तस्य च सूत्रस्य अनुदात्ते पदादौ परे उदात्तेन सह एकादेशः विकल्पेन स्वरितः भवति। स्वरिताभावे च 'एकादेश उदात्तेनोदात्तः' इति सूत्रेण उदात्तः भवति। एतेषां समेषामपि सूत्राणामत्र उदाहरणपुरःसरं व्याख्यानं विहितम्।



## पाठान्तप्रश्नाः

१. 'अनुदात्तं पदमेकवर्जम्' इति सूत्रं व्याख्यात।
२. 'अनुदात्तस्य च यत्रोदात्तलोपः' इति सूत्रस्य उदाहरणे समन्वयं कुरुत।
३. अष्टमाध्याये विद्यमानम् 'आमन्त्रितस्य च' इति सूत्रं व्याख्यात।
४. 'विभाषितं विशेषवचने' इत्यस्य सूत्रस्य व्याख्यां कुरुत।
५. 'सुबामन्त्रिते पराङ्गवत्स्वरे' इत्यस्य सूत्रस्य व्याख्यां कुरुत।
६. क्वं वोऽश्वाः इति रूपं साधयत।
७. खलप्व्यांशा इति रूपं साधयत।
८. व्यवस्थितविभाषाविषये टिप्पणीं लिखित्वा तस्य एकम् उदाहरणं प्रदर्शयत।





## पाठगतप्रश्नानामुत्तराणि -

**उत्तराणि - १**

१. परिभाषासूत्रम्।

२. अनुदात्ताः अस्य सन्ति इत्यर्थे अनुदात्तशब्दात् 'अर्श-आदिभ्योऽच्' इति सूत्रेण मत्वर्थीय-अच्प्रत्ययः।

३. अनुदात्तस्वरः।

४. यस्मिन् अनुदात्ते परे उदात्तः लुप्यते तस्य उदात्तः भवति।

५. देवीं वाचम् इति।

६. उदात्तनिवृत्तिस्वरापवादभूतम् इदं सूत्रम्।

७. लुप्त-अकारविशिष्टः अञ्च्-धातुः इत्यर्थः।

८. देवद्रीचीं नयत देवयन्तः इति।

**उत्तराणि-२**

९. आमन्त्रितस्य आदिः उदात्तः भवति।

१०. 'पदस्य', 'पदात्', 'अनुदात्तं सर्वमापादादौ' चेति।

११. इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमम् इति।

१२. अतिदेशसूत्रम्

१३. भाष्यकारवचनात्

१४. नामन्त्रिते समानाधिकरणे सामान्यवचनम्

१५. सम्बोधनविभक्त्यन्तं पदं वेदे आमन्त्रितम् इत्युच्यते।

१६. सुबन्तमामन्त्रिते परे परस्याङ्गवद् भवति स्वरे कर्तव्ये।

१७. स्वरे कर्तव्ये

१८. षष्ठीविभक्तिः

१९. ग

२०. घ

**उत्तराणि - ३**

२१. स्वरितस्वरः

२२. आशाया अदिगख्या चेत् इति सूत्रेण

२३. नित्यवीप्सयोः इति सूत्रेण

२४. ख

२५. क्वाति इति सूत्रेण



२६. स्वाङ्गशिटामदन्तानाम् इति सूत्रेण

२७. सहयोगात्

२८. ख

२९. ग

३०. व्यवस्थितविभाषा

३१. फिषोन्त उदात्तः

३२. ईङ् गतौ

३३. स्वरितस्वरः

॥इति अष्टमः पाठः॥





# साधारणस्वरः-२

## प्रस्तावना

आ वैदिककालात् अद्यापि गुरुकुलेषु तथा विभिन्नेषु प्रतिष्ठानेषु गुरुशिष्यमाध्यमेन वेदपाठः प्रचलति। वेदानां पाठः गुरुपरम्परानुसारं सस्वरं क्रियते। अतः वेदे स्वरस्य स्थानं सर्वोपरि वर्तते। केवलं वेदपाठेन एव वेदे कुत्र कः स्वरः भविष्यति इति विद्वांसः ज्ञातुं न प्रभवन्ति। अतः व्याकरणेन स्वरनिर्णयस्य कौशलं सर्वैः ज्ञातव्यमेव। बहोः कालात् पूर्वमेव महर्षिः पाणिनिः निखिलस्यापि वैदिकवाङ्मयस्य स्वरनिर्णयार्थं सूत्राणि रचितवान्। तेषु सूत्रेषु च केचन विशिष्टाः प्रयोगाः पाणिनिना अनिर्दिष्टाः सन्ति। अतः परस्मिन् काले वार्तिककारेण कानिचन वार्तिकानि रचितानि। अतः अस्मिन् पाठे साधारणस्वरप्रतिपादकानि  पाणिनीयसूत्राणि तथा वार्तिकानि आलोच्यन्ते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- सूत्रैः स्वरसिद्धिप्रक्रियां ज्ञास्यति।
- स्वरसम्बन्धीनि वार्तिकानि ज्ञास्यति।
- एकश्रुतिविषये ज्ञास्यति।
- सूत्रार्थस्य समन्वयं ज्ञास्यति।
- साधारणस्वरविषये सामग्रिकज्ञानं प्राप्स्यति।

## ९.१) उदात्तादनुदात्तस्य स्वरितः॥ (८.४.६६)

**सूत्रार्थः** - उदात्तात्परस्य अनुदात्तस्य स्वरितः स्यात्।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम् । अनेन सूत्रेण स्वरितस्वरः विधीयते। उदात्ताद् अनुदात्तस्य स्वरितः इति सूत्रगतपदच्छेदः। त्रिपदात्मके अस्मिन् सूत्रे उदात्ताद् इति पञ्चम्येकवचनान्तम्, अनुदात्तस्य इति षष्ठ्येकवचनान्तं, स्वरितः इति प्रथमैकवचनान्तं पदम्। स्वरितः इत्यस्य प्रथमान्तत्वाद् अस्यैव विधायकत्वम्। उदात्ताद् अनुदात्तस्य स्वरितः इति सूत्रगतपदयोजना। उदात्ताद् इत्यत्र पञ्चमीनिर्देशाद् 'तस्मादित्युत्तरस्य' इति परिभाषया उदात्ताद् उत्तरस्य इति लभ्यते। एवञ्च अस्य सूत्रस्य अर्थो भवति उदात्तात्परस्य अनुदात्तस्य स्वरितस्वरो भवति इति।



**उदाहरणम्-** अग्निमीळे (अ॒ग्निमी॑ळे) इति।

**सूत्रार्थसमन्वयः-** अग्निमीळे इत्यत्र गत्यर्थकस्य अगिधातोः 'धातोः' इति सूत्रानुसारेण अकारः उदात्तः। ततः अङ्गेर्नलोपश्च इति सूत्रेण नि-प्रत्यये, अस्य धातोः इदित्त्वाद् (अगि-धातोः इकारः इत्संज्ञकः) इदितो नुम् धातोः इत्यनेन नुमागमे अनुबन्धलोपे स्थितस्य नकारस्य तेनैव (अङ्गेर्नलोपश्च) सूत्रेण लोपे अग्निशब्दः निष्पद्यते। अत्र निप्रत्ययस्य नकरोत्तरः इकारः आद्युदात्तश्च इत्यनेन उदात्तः। एवम् अग्नि इत्यत्र उदात्तस्वरद्वयं वर्तते एकः धातोः अपरः प्रत्ययस्य। अत्र अगिधातोः अकारस्य उदात्तस्वरः धातुपाठे निर्दिष्टः परन्तु नि-प्रत्ययस्य इकारस्य उदात्तस्वरः सूत्रेण उपदिष्टः अतः 'सतिशिष्टस्वरो बलीयान्' (६.१.१५८) इति परिभाषासूत्रेण सतिशिष्टस्वरस्य (परं निर्दिष्टस्य स्वरस्य) बलवत्तरत्वम् इति। तेन अनुदात्तं पगमेकवर्जम् इति सूत्रेण धातोः (अगि-इत्यस्य) अकारस्य अनुदात्तस्वरः न तु प्रत्ययस्य इति। एवम् अग्नि-इत्यत्र अकारः अनुदात्तः इकारः उदात्तः इति सिध्यति। ततः विहितस्य अम्-प्रत्ययस्य अनुदात्तौ सुप्पितौ इत्यनेन अनुदात्तस्वरः। ततः अग्नि अम् इति स्थिते अमि पूर्वः इत्यनेन उदात्त-इकारस्य अनुदात्त-अकारस्य च स्थाने पूर्वरूपैकादेशे इकारे 'एकादेश उदात्तेनोदात्तः' इत्यनेन तस्य (इकारस्य) उदात्तस्वरः। ईड स्तुतौ इति धातोः लटि उत्तमपुरुषैकवचने ईळे इति रूपम्। अत्र 'द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकारः' इति प्रातिशाख्यवचनेन डस्य ळः। अत्र अग्निम् ईळे इति स्थिते तिङ्ङतिङः इति सूत्रेण सर्वानुदात्तस्वरः। एवमत्र उदात्तात् (इकारात्) परस्य अनुदात्तस्य (ईकारस्य) वर्तमानात् प्रकृतसूत्रेण परस्य अनुदात्तस्य स्वरितस्वरः। ईळे इत्यत्र स्वरिताद् ईकारात्परस्य ळे इत्यस्य एकारस्य अनुदात्तत्वात् 'स्वरितात् संहितायामनुदात्तानाम्' इति सूत्रेण एकारस्य एकश्रुतिस्वरः( उदात्तानुदात्तस्वरितानां तिरोधानम्) भवति। एवम् अ॒ग्निमी॑ळे इति रूपं सिध्यति।

**विशेषः**- ननु अत्र अग्निम् ईळे इत्यत्र उदात्तानुदात्तयोः (इकार-ईकारयोः) मध्ये मकारस्य विद्यमानत्वात् कथम् इकारात्परस्य ईकारस्य स्वरितस्वरः इति चेद् उच्यते, स्वरविधौ व्यञ्जनमविद्यमानवद् इति परिभाषया अत्र मकारस्य विद्यमानत्वेऽपि स्वरविधित्वात् तन्नास्ति इति गृह्यते तेन अत्र मकारेण व्यवधानाभावात् न स्वरितत्वबाधः इति।

प्रकृतं सूत्रम् अष्टमाध्यायस्य चतुर्थे पादे वर्तते अतः त्रिपादिस्थेन अनेन सूत्रेण यः स्वरितस्वरः विहितः सः अनुदात्तं पदमेकं वर्जम्(६.१.१५८) इति सपादसप्ताध्यायिस्थसूत्रदृष्ट्या असिद्धः। अतः ईळे इत्यत्र अनुदात्तं पदम् एकवर्जम् इति सूत्रं न प्रवर्तते। तेन उदात्तस्वरितौ उभावपि स्वरौ श्रूयेते इति शम्।

## ९.२) नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्॥ (८.४.६६)

**सूत्रार्थः** - उदात्तपरः स्वरितपरश्चानुदात्तः स्वरितो न स्यात्। गार्ग्यादिमते तु स्यादेव।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं निषेधविधायकं सूत्रम्। अनेन सूत्रेण स्वरितस्वरस्य निषेधो भवति। न उदात्तस्वरितोदम् अगार्ग्यकाश्यपगालवानाम् इति सूत्रगतपदच्छेदः। त्रिपदात्मके अस्मिन् सूत्रे न इति अव्ययपदम्, उदात्तस्वरितोदयम् इति प्रथमैकवचनान्तम्, अगार्ग्यकाश्यपगालवानाम् इति षष्ठीबहुवचनान्तं पदम्। उदात्तस्वरितोदयं न अगार्ग्यकाश्यपगालवानाम् इति सूत्रगतपदान्वयः। उदात्तादनुदात्तस्य स्वरितः इति सूत्राद् अनुदात्तस्य इति षष्ठ्यन्तं पदं स्वरितः इति प्रथमान्तं पदं



चानुवर्तते। उदात्तश्च स्वरितश्च उदात्तस्वरितौ उदयौ यस्माद् इति उदात्तस्वरितोदयम् इति बहुव्रीहिसमासः। उदयशब्दः परशब्देन समानार्थः इति प्रातिशाख्येषु प्रसिद्धः। उदात्तस्वरः परं यस्य तादृशस्य, स्वरितस्वरः परं यस्य तादृशस्य वा अनुदात्तस्वरस्य इत्यर्थः। न गार्ग्यकाश्यपगालवानाम् इति अगार्ग्यकाश्यपगालवानाम् इति नञ्समासः। गार्ग्य-काश्यप-गालवानाम् ऋषीणां मते तु न भवति इत्यर्थः। उदात्तादनुदात्तस्य स्वरितः इति सूत्रस्य एव अत्र निषेधः। तेन सूत्रार्थो भवति उदात्तपरः स्वरितपरः च यः अनुदात्तः, तस्य 'उदात्तादनुदात्तस्य स्वरितः' इति सूत्रेण प्राप्तः स्वरितस्वरो न भवति, गार्ग्य-काश्यप-गालवानाम् ऋषीणां मते तु भवत्येव इति।

**उदाहरणम्-** वोश्वाः क्वां १ भीशवः (ऋ.५।६१।१२) इति। प्र य आ रुः इति।

**सूत्रार्थसमन्वयः-** अत्र क्वशब्दोत्तरं किमोऽत् इत्यनेन सूत्रेण अत्-प्रत्यये तथा क्वाति इत्यनेन किमः स्थाने क्व-इत्यादेशे क्व-इति रूपं सिध्यति। अत्-प्रत्ययस्य तकारस्य इत्संज्ञकत्वात् तित्स्वरितम् इति सूत्रेण अत्-प्रत्ययान्तस्य क्व-शब्दस्य अकारस्य स्वरितस्वरः। युष्मदः स्थाने वस्-इत्यादेशे सस्य रुत्वे अतो रोरप्लुतादप्लुते इत्यनेन रोः उत्वे आद्गुणः इति अकार-उकारयोः स्थाने गुणे ओकारे वो-इति सिध्यति। अत्र वस्-इत्यादेशः अनुदात्तं सर्वमपादादौ इत्यस्य अधिकारे भवति अतः वाकारोत्तरः अकारः अनुदात्तः। अशू-धातोः अशूप्रुषिलटिकनिखटिविशिभ्यः क्वन् इति उणादिसूत्रेण क्वन्-प्रत्यये बहुवचने प्रक्रियायाम् अश्वाः इति सिध्यति। क्वन्-प्रत्ययस्य नकारः इत् भवति अतः क्वन्प्रत्ययान्तः अश्वशब्दः ञ्नित्यादिर्नित्यम् इति सूत्रानुसारेण आद्युदात्तः भवति। ततः वो अश्वाः इति स्थिते एङः पदान्तादति इति सूत्रेण ओकार-अकारयोः स्थाने पूर्वरूपे 'एकादेश उदात्तेनोदात्तः' इति सूत्रेण वकारोत्तरः उकारः उदात्तः, 'अनुदात्तं पदमेकवर्जम्' इति सूत्रानुसारेण श्वा- इत्यत्र आकारः अनुदात्तः। अत्र वोऽश्वाः(वः अश्वाः) क्व इत्यत्र वकारोत्तरः उकारः उदात्तः, श्वोत्तरः आकारः अनुदात्तः तथा क्वोत्तरः अकारः स्वरितः इति। एवमत्र उदात्तात्परस्य अनुदात्तस्य सत्त्वाद् उदात्तादनुदात्तस्य स्वरितः इति पूर्वसूत्रेण अनुदात्तस्य स्वरितस्वरे प्राप्ते तस्य स्वरितपरत्वाद् अनेन प्रकृतसूत्रेण, पूर्वेण प्राप्तस्य स्वरितस्वरस्य निषेधः भवति। तेन यथा पूर्वम् अनुदात्तस्वरः आसीत् तथैव स्थास्यतीति।

प्र य आ रुः इत्यत्र ये इति यच्छब्दस्य प्रथमाबहुवचनं फिट्स्वरेण 'फिषोऽन्त उदात्तः' इति सूत्रेण अन्तोदात्तम्। अतेर्लिटि प्रथमाबहुवचने झिप्रत्यये आरुः इति रूपम्। अत्र परस्मैपदानां णलतुसुस्थलथुसणल्वमाः इत्यनेन विहितः उस्-प्रत्ययः प्रत्ययस्वरेण उदात्तः। आरुः इत्यत्र आकारस्य उदात्तस्वरितपरस्य सन्नतरः इत्यनेन अनुदात्तस्वरः। एवमत्र यकारोत्तरः अकारः उदात्तः, आकारः अनुदात्तः, रुः इत्यत्र उकारः उदात्तः इति। तेन अत्र उदात्तात् परस्य अनुदात्तस्य सत्त्वाद् उदात्तादनुदात्तस्य स्वरितः इति पूर्वेण सूत्रेण अनुदात्तस्य स्वरिते प्राप्ते तस्य उदात्तपरत्वाद् अनेन प्रकृतसूत्रेण पूर्वेण प्राप्तस्य स्वरितस्वरस्य निषेधः भवति। तेन यथा पूर्वम् अनुदात्तस्वरः आसीत् तथैव स्थास्यतीति। एतेन प्र य आ रुः इति सिध्यति।

गार्ग्य-काश्यप-गालवानाम् ऋषीणां मते तु स्वरितस्य निषेधो न भवति अपि तु पूर्वसूत्रेण प्राप्तः स्वरितस्वर एव भवति इति।



**विशेषः-** ननु 'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः' तेन अत्र कथम् उदयशब्दस्य प्रयोगः तत्स्थले परशब्दस्य प्रयोगेन तु लाघवं स्यात् इति चेद् अत्र उच्यते अत्र उदयशब्दः मङ्गलार्थः इति। मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च इति बृद्धिरादैच् इति सूत्रभाष्ये पतञ्जलिना उक्तम्। अत्र उदयशब्दप्रयोगेन पाणिनिना मङ्गलं कृतम् इति एकं समाधानम्।

अपरं समाधानं भवति यत् पर्यायवचकानां ग्रहणे लघुगुरुचिन्ता नाद्रियते इति नियमेन अत्र पर-पर्यायस्य उदयशब्दस्य ग्रहणे न हानिः इति शम्।



## पाठगतप्रश्नाः-१

१. उदात्तादनुदात्तस्य स्वरितः इत्यनेन सूत्रेण कः स्वरो विधीयते?

२. अग्निमीळे इत्यत्र मकारोत्तरस्य ईकारस्य कः स्वरः?

३. ईळे इत्यत्र अनुदात्तं पदमेकवर्जम् इति सूत्रं कथं न प्रवर्तते?

४. उदात्तपरस्य स्वरितपरस्य अनुदात्तस्य स्वरितनिषेधः केन भवति?

५. केषां मते उदात्तपरस्य स्वरितपरस्य अनुदात्तस्य स्वरितो भवति?

६. नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् इत्यस्मिन् सूत्रे उदयशब्दस्य कोऽर्थः?

## १.३) एकश्रुति दूरात्संबुद्धौ॥ (१.२.३३)

**सूत्रार्थः** - दूरात् सम्बोधने वाक्यम् एकश्रुति स्यात्।

**सूत्रव्याख्या** - षड्विधेषु इदं विधिसूत्रम्। अनेन सूत्रेण वाक्यानाम् एकश्रुतित्वं विधीयते। एकश्रुतौ दूरात् सम्बुद्धौ इति च सूत्रगतपदच्छेदः। अत्र दूरात् इत्यत्र दूरान्तिकार्थेभ्यो द्वितीया च इति सूत्रेण पञ्चमी, सम्बुद्धौ इत्यत्र सप्तम्येकवचनम्। अपि च एकश्रुति इति क्लीबलिङ्गि प्रथमैकवचनान्तं पदं वाक्यम् इति प्रथमैकवचनान्तस्य पदस्य विशेषणम्। अतः तत्र क्लीबलिङ्गे प्रथमैकवचनम्। एवञ्च दूरात् सम्बुद्धौ वाक्यम् एकश्रुति इति अत्र सूत्रगतपदानाम् अन्वयः।

सूत्रे सम्बुद्धौ इति पदेन न हि एकवचनं सम्बुद्धिः इति सूत्रेण निर्दिष्टः पारिभाषिकः सम्बुद्धिशब्दः बोध्यः, अपि तु सम्बुद्धिः इति शब्दः अत्र अन्वर्थः। तथाहि दूरात् इति पञ्चम्यन्तस्य पदस्य अत्र वर्तमानात् सम्बुद्धि- इति शब्दः अत्र अन्वर्थरूपेण ग्राह्यः। एकवचनं सम्बुद्धिः इति सूत्रे निर्दिष्टस्य सम्बुद्धिश्बदस्य सम्बन्धः तु दूरात् इति प्रकृतसूत्रस्थेन पदेन भवितुं नार्हति। अतः सम्बोधयति येन वाक्येन तत्संबोधनम् अर्थात् सम्बुद्धिः इत्येवम् अर्थः अत्र बोद्धव्यः। तादृशस्य च वाक्यस्य प्रकृतसूत्रेण एकश्रुतित्वं विधीयते।



अत्र एकश्रुतिः इति पदे विग्रहः कः ? किम् एकस्य श्रुतिः इति, अथवा एका चासौ श्रुतिः च इति। अस्मिन् प्रश्ने सति उच्यते एकाश्रुतिः इति पदे 'एका चासौ श्रुतिः चेति' इति विग्रहे एकश्रुतिः, एकश्रुतिः अस्ति अस्य वाक्यस्य इति एकश्रुति। अत्र श्रुतिः इति न हि वेदपर्यायः शब्दः। अत्र श्रवणार्थकात् श्रु-धातोः क्तिन्-प्रत्यये ततश्च विभक्तिकार्ये श्रुतिः इति प्रथमैकवचनान्तं पदम्। तस्य च श्रवणम् इत्यर्थः। एका एव श्रुतिः अर्थात् एकश्रवणम् इति तदर्थः। यस्मिन् वाक्ये श्रवणस्य भेदो न वर्तते अर्थात् यत्र अभिन्नश्रुतिः तदेव वाक्यम् एकश्रुति इति उच्यते। अत्र केषाम् अभेदः ? इति जिज्ञासायामुच्यते उदात्तादीनां स्वराणाम् इति। एवञ्च प्रकृतसूत्रेण वाक्यानाम् उदात्तादिस्वराणाम् अभेदः विधीयते। तेनात्र सूत्रार्थः भवति- दूरात् सम्बुद्धौ अर्थात् सम्बोधने वाक्यं एकश्रुति भवति इति।

**उदाहरणम्** - आगच्छ भो माणवक देवदत्त३।

**सूत्रार्थसमन्वयः** -अत्र वाक्यम् आगच्छ भोः माणवक देववत्त इत्येवम् अस्ति। वाक्यमेतद् यदा दूरात् कस्यापि सम्बोधने व्यवह्रियते, तदा प्रकृतसूत्रेण अत्र उदात्तानुदात्तादिस्वरगतभेदस्य अपसारणेन तथा एकस्य एव उदात्तस्वरस्य विधानेन, आगच्छ भो माणवक देवदत्त३ इति एकश्रुत्या अत्र उदात्तस्वरस्यैव समावेशः भवति।

अत्र दूरात् सम्बोधनं भवति चेत् एव प्रकृतसूत्रेण तस्मिन् सम्बोधनबोधके पदे एकश्रुतित्वं विधीयते, अन्यथा एकश्रुतित्वं न भवति। यथा- आगच्छ भोः माणवक देववत्त इति वाक्येन समीपात् एव यदा आह्वानं विधीयते तदा उदात्तानुदात्तादिस्वराः एव तत्र तिष्ठन्ति।

**विशेषः-** अत्र दूरं नाम कियद् दूरं स्यात् इति जिज्ञासा स्वाभाविकतया भवति एव। तस्य समाधानम् उच्यते यत् यावति देशे स्वाभाविकप्रयत्नेन उच्चारितं सम्बोध्यमानेन न श्रूयते, तावान् देश एव दूरशब्देन गृह्यते। एवं दूराद्धूते च इत्यादौ सूत्रे अपि बोद्धव्यम्।

## १.४) यज्ञकर्मण्यजपन्यूङ्खसामसु॥ (२.१.३४)

**सूत्रार्थः** - यज्ञक्रियायां मन्त्र एकश्रुतिः स्याज्जपादीन् वर्जयित्वा।

**सूत्रव्याख्या** - संज्ञा-परिभाषा-विधि-नियम-अतिदेश-अधिकारात्मकेषु षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन जपादिभिन्नेषु प्रयोगेषु वाक्यानाम् एकश्रुतित्वं विधीयते। यज्ञकर्मणि अजपन्यूङ्खसामसु इति सूत्रगतपदच्छेदः। तत्र यज्ञकर्मणि इति सप्तम्येकवचनान्तं पदम्, अजपन्यूङ्खसामसु इति च सप्तमीबहुवचनान्तं पदम्। एकश्रुति दूरात्सम्बुद्धौ इति सूत्रात् अत्र एकश्रुति इति क्लीबलिङ्गि प्रथमैकवचनान्तं विधेयबोधकं पदम् अनुवर्तते। यज्ञस्य कर्म यज्ञकर्म इति षष्ठीतत्पुरुषसमासः, तस्मिन् यज्ञकर्मणि इति। जपश्च न्यूङ्खश्च साम च जपन्यूङ्खसामानि, न जपन्यूङ्खसामानि अजपन्यूङ्खसामानि, तेषु अजपन्यूङ्खसामसु इति द्वन्द्वगर्भनञ्तत्पुरुषसमासः। एवञ्च अत्र अजपन्यूङ्खसामसु यज्ञकर्मणि एकश्रुति इति सूत्रगतपदयोजना। ततश्च अत्र सूत्रार्थो भवति- यज्ञकर्मणि उदात्तानुदात्तस्वरितस्वराणाम् एकश्रुतिः भवति, जपन्यूङ्खसामानि वर्जयित्वा इति। अनेन सूत्रेण मन्त्रः एकश्रुतिः भवति इति सारः।



जपः अनुकरणमन्त्रः उपांशुप्रयोगो वा, न्यूङ्खाः षोडश ओकाराः, तेन अत्र मन्त्रोच्चारणस्य प्रकारविशेषाः बोद्धव्याः। सामानि वाक्यविशेषस्था गीतयः। तत्र जपे न्यूङ्खेषु सामसु च उदात्तानुदात्तादिस्वरयुक्तानां मन्त्राणाम् उच्चारणम् अस्ति। अत्रोच्यते यदि एतद्भिन्ने यज्ञसम्बन्धिनि कर्मणि मन्त्राणां प्रयोगो भवति, तर्हि तेषां मन्त्राणाम् ऐकश्रुत्यं भवति इति। अर्थात् तेषु यज्ञकर्मसु प्रयुङ्क्तेषु मन्त्रेषु उदात्तानुदात्तादिभेदः न तिष्ठति।

**उदाहरणम्** - अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वतो३म् (ऋ. ८.४४.१६)।

**सूत्रार्थसमन्वयः** - उदाहरणरूपेण दत्तः अयं मन्त्रः यज्ञकर्मणि प्रयुङ्क्तः। अतः प्रकृतसूत्रेण अस्मिन् मन्त्रे ऐकश्रुत्यं विधीयते। तेन अत्र उदात्तादिस्वराणां भेदः विलीयते। अतः अत्र उदत्तस्वराणामेव समावेशः दृश्यते।

अत्रेदमवधेयं यत् यदा जपे न्यूङ्खेषु सामसु च मन्त्राणां प्रयोगो भवति, तदा प्रकृतसूत्रेम न इयम् एकश्रुतिः भवति इति। यथा- अत्र उदाहरणरूपेण दत्तस्य मन्त्रस्य यदा संपाठे अर्थात् स्वाध्यायकाले प्रयोगो भवति तदा न ऐकश्रुत्यं विधीयते। एवं जपे प्रयुङ्क्तानां मन्त्राणामपि ऐकश्रुत्यं न भवति। न्यूङ्खाः षोडश ओकाराः, तेषु केचन उदात्ताः केचन अनुदात्ताश्च। अथ तत्रापि प्रकृतसूत्रेण न ऐकश्रुत्यम्। सामासु अपि तथैव न ऐकश्रुत्यम्। तत्रोदाहरणं यथा- ए३ विश्वं समन्त्रिणं दह३ इति।

## १.५) उच्चैस्तरां वा वषट्कारः॥ (१.२.३५)

**सूत्रार्थः** - यज्ञकर्मणि वौषट्- शब्द उच्चैस्तरां वा स्यादेकश्रुतिर्वा।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन वौषट्- शब्दस्य विकल्पेन उदात्ततरत्वं, एकश्रुतित्वं च विधीयते। उच्चैस्तरां वा वषट्कारः इति त्रीणि पदानि अत्र सन्ति। तत्र उच्चैस्तराम् इति वा इति च द्वे अव्ययपदे, वषट्कारः इति प्रथमैकवचनान्तं पदम्। यज्ञकर्मण्यजपन्यूङ्खसामसु इति सूत्रात् अत्र यज्ञकर्मणि इति सप्तम्येकवचनान्तं पदम्, एकश्रुति दूरात्संबुद्धौ इति सूत्रात् च एकश्रुति इति प्रथमैकवचनान्तं पदमत्र अनुवर्तते। उच्चैस्तराम् इत्यस्य उदात्ततरः इत्यर्थः। स्वरितस्वरात् यदि अनुदात्तस्वरः भवति तदा स्वरितस्वरस्य अर्धभागः उदात्ततरस्वरविशिष्टः भवति। वषट्कार- इति शब्देन अत्र वौषट् इति अव्ययं ग्राह्यम्। एवञ्च अत्र यज्ञकर्मणि वषट्कारः उच्चैस्तराम् एकश्रुतिः वा इति सूत्रगतपदान्वयः भवति। ततश्च अत्र सूत्रार्थः भवति- यज्ञकर्मणि वषट्कारः अर्थात् वौषट्- शब्दः एकश्रुतिः उदात्ततरो वा भवतीति।

अत्र वषट्कारः इत्यत्र कारशब्दस्य कथं ग्रहणं कृतम् इति विषये बहूनि मतानि सन्ति। अत्र कारशब्देन वौषट् इति अव्ययस्य ग्रहणं क्रियते इति केषाञ्चन मतम्। वौषट्- शब्दात् इतरेषामपि शब्दानां यथा विकल्पेन उदात्ततरत्वम् एकश्रुतित्वञ्च यथा स्यात् तदर्थं कारशब्दस्य ग्रहणम् इति च केषाञ्चन मतम्। एतेषाञ्च मतानुसारम् 'अस्तु श्रौषट्' इत्यत्रापि श्रौषट्– शब्दः उदात्ततरस्वरविशिष्टः भवति। अपरेषां च मतेन अत्र कारग्रहणम् अवर्णादपि कारप्रत्ययो भवति इत्यस्य ज्ञापकम्, एतेषां मतानुसारम्



एवकारः इत्यादीनि पदानि सिद्ध्यन्ति। अन्येषां च मतेन पाणिनेः सूत्रं विचित्रं भवति इति ज्ञापनार्थम् अत्र कारशब्दस्य ग्रहणं कृतम्। अस्मादेव कारणात् पाणिनीयसूत्रेषु क्वचित् अक्षरलाघवं प्रधानं भवति क्वचिच्च ज्ञानलाघवं प्रधानं भवति। अत्र वषट्कारश्च वौषट् इति शब्दे निरूढः इति अत्र प्राधान्येन ज्ञातव्यम्।

**उदाहरणम्** –सोमस्याग्ने वीहि वौ३षट्। सोमस्याग्ने वीहि३ वौ३षट् (ऐतरेय. ३.५.४.६)।

**सूत्रार्थसमन्वयः** –उदाहरणरूपेण प्रदत्तः अयं मन्त्रः यज्ञकर्मणि प्रयुङ्क्तः। अतः तत्र वर्तमानः वौषट्–शब्दः विकल्पेन उदात्ततरः भवति, तदभावपक्षे च एकश्रुतिः भवति।

**विशेषः** –स्वरितस्वरात् यदि अनुदात्तस्वरः भवति तदा स्वरितस्वरस्य अर्धभागः उदात्ततरस्वरविशिष्टः भवति इति तु ज्ञातम्, परन्तु अत्र विधीयमानस्य उदात्ततरस्वरस्य किं तावत् स्वरूपम् इति जिज्ञासायाम् उच्यते– उच्चैः इत्यनेन उदात्तः गृह्यते, अयम् उदात्तः अयम् उदात्तः, अयम् अनयोः अतितराम् उदात्तः इति उच्चैस्तराम् अर्थात् उदात्ततरः। तथाहि उदात्तः स्वरः यस्मिन् स्थले उच्चार्यते, ततः अपि उच्चतरे स्थले यदा कोऽपि स्वरः उच्चार्यते, तदा स स्वरः उदात्ततरः इति कथ्यते। एवञ्च तादृशम् उदात्ततरत्वम् एव अत्र प्रकृतसूत्रेण विकल्पे विधीयते।

## ९.६) विभाषा छन्दसि॥ (१।२।३६)

**सूत्रार्थः** - छन्दसि विभाषा एकश्रुतिः स्यात्।

**सूत्रव्याख्या** - संज्ञा-परिभाषा-विधि-नियम-अतिदेश-अधिकारात्मकेषु षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन छन्दसि अर्थात् वेदे विकल्पेन ऐकश्रुत्यं विधीयते। अस्मिन् सूत्रे विभाषा छन्दसि इति द्वे पदे स्तः। तत्र विभाषा इति अव्ययपदम्, छन्दसि इति च सप्तम्येकवचनान्तं पदम्। एकश्रुति दूरात्संबुद्धौ इति सूत्रात् अत्र एकश्रुति इति प्रथमैकवचनान्तं पदम् अनुवर्तते। छन्दसि इत्यत्र विषयसप्तमी वर्तते, अतः छन्दसि विषये इत्यर्थः लभ्यते। अत्र पदयोजना - छन्दसि एकश्रुतिः विभाषा इति। ततश्च सूत्रार्थः एवं भवति - छन्दसि विषये उदात्तानुदात्तस्वरितस्वराणाम् एकश्रुतिः विकल्पेन भवति इति। छन्दसि मन्त्राणाम् उदात्तानुदात्तस्वरितस्वराणां विकल्पेन एकश्रुतिः भवति इति निष्कर्षः। अत्र एकश्रुतिः इति न विशेषणपदम्, अपि तु विशेष्यपदमेव। अतः उदात्तानुदात्तस्वरितस्वराणाम् एका अभिन्ना श्रुतिः भवति इति अर्थः अत्र बोद्धव्यः।

अत्रेदमवधेयं यत् यज्ञकर्मण्यजपन्यूङ्खसामसु इति सूत्रेण जपभिन्नेषु न्यूङ्खभिन्नेषु सामभिन्नेषु यज्ञकर्मसु ऐकश्रुत्यस्य विधानसम्भवात् प्रकृतसूत्रस्य प्रयोगस्थलेषु छन्दस्सु अपि ऐकश्रुत्यं सम्भवति, परन्तु अत्र ऐकश्रुत्यं विकल्पेन इष्टम् अस्ति अतः सूत्रे विभाषा इति पदं प्रदत्तम्। अपि च अत्र सूत्रे वा इति पदस्य निवेशेनैव कार्यसम्भवे सति, विभाषा इति पदस्य ग्रहणं यज्ञकर्मणि इति पदस्य निवृत्त्यर्थम्। तथाहि यज्ञकर्मण्यजपन्यूङ्खसामसु इति सूत्रेण जपभिन्नेषु न्यूङ्खभिन्नेषु सामभिन्नेषु यज्ञकर्मसु एव नित्यम् ऐकश्रुत्यं विधीयते, अतः जपभिन्नेषु न्यूङ्खभिन्नेषु सामभिन्नेषु यज्ञकर्मभिन्नेषु च स्थलेषु छन्दस्सु अपि विकल्पेन

ऐकश्रुत्यं यथा स्यात् तदर्थं नूतनमिदं सूत्रं प्रणीतम्। तेन प्रकृतेन सूत्रेण यज्ञकर्मभिन्ने स्वाध्यायकालेऽपि छन्दस्सु विकल्पेन ऐकश्रुत्यं भवति।

**उदाहरणम्** - 'इषे त्वोर्जे त्वा। इषे त्वोर्जे त्वा' (वाज. सं. १.१.१)। 'अग्न आया हि वीतये। अग्न आया हि वीतये' (ऋ. ६.१६.१०)

**सूत्रार्थसमन्वयः** - ' इषे त्वोर्जे त्वा। अग्न आया हि वीतये ' इति द्वयोः मन्त्रयोः प्रयोगः छन्दसि दृश्यते। अतः प्रकृतसूत्रेण मन्त्रद्वये अस्मिन् उदात्तानुदात्तस्वरितस्वराणां विकल्पेन ऐकश्रुत्यं भवति। तथा सति अनयोः मन्त्रयोः सर्वत्रैव एकस्यैव उदात्तस्वरस्य विधाने 'इषे त्वोर्जे त्वा। अग्न आया हि वीतये' इति वैकल्पिकं प्रयोगद्वयं सिध्यति।

**विशेषः** - अत्र विभाषा इति पदस्य ग्रहणेन यज्ञकर्मणि इत्यस्य निवृत्तौ अपि, पृथक्तया छन्दसि इति पदस्य ग्रहणात् छन्दोरूपेषु यज्ञकर्मसु विकल्पेन ऐकश्रुत्यं प्राप्नोति एव, परन्तु नैष दोषः, तस्मिन् यज्ञकर्मण्यजपन्यूङ्खसामसु इति सूत्रे यज्ञकर्मणीत्यत्र कर्मशब्दग्रहणात् यज्ञकर्मसु छन्दस्सु तेनैव सूत्रेण नित्यमेव ऐकश्रुत्यं स्यात्, न हि प्रकृतसूत्रेण वैकल्पिकम् ऐकश्रुत्यम्। प्रकृतसूत्रस्यास्य वैकल्पिकत्वात् यज्ञकर्मण्यजपन्यूङ्खसामसु इति सूत्रेण तत्र निषिद्धेषु जपे, न्यूङ्खेषु सामसु च प्रकृतसूत्रेण विकल्पे ऐकश्रुत्यं प्राप्नोति। परन्तु तेषां जपादिपदानाम् अत्र ग्रहणाभावात् छन्दसि इति पदस्य एव च उल्लेखात् न तेषु जपादिषु प्रकृतसूत्रेण वैकल्पिकम् ऐकश्रुत्यम्।



## पाठगतप्रश्नाः -२

७. वाक्यं कदा एकश्रुति भवति ?

८. का सम्बुद्धिः ?

९. को जपः ?

१०. के न्यूङ्खाः ?

११. वषट् - कारेण कः शब्दः गृह्यते ?

१२. उच्चैस्तराम् इत्यस्य कोऽर्थः ?

१३. विकल्पेन एकश्रुतिः कुत्र भवति ?

## ९.७) न सुब्रह्मण्यायां स्वरितस्य तूदात्तः॥ (१.२.३७)

**सूत्रार्थः** - सुब्रह्मण्याख्ये निगदे ' यज्ञकर्मणि ' इति ' विभाषा छन्दसि ' इति च प्राप्ता एकश्रुतिर्न स्यात् स्वरितस्योदात्तश्च स्यात्।



**सूत्रव्याख्या** – षड्विधेषु पाणिनीयसूत्रेषु इदं निषेधसूत्रम्, विधिसूत्रमपि। अनेन ऐकश्रुत्यस्य निषेधः भवति, स्वरितस्य स्थाने उदात्तश्च भवति। न सुब्रह्मण्यायां स्वरितस्य तु उदात्तः इति सूत्रगतपदच्छेदः। तत्र न इति तु इति च अव्ययपदम्, सुब्रह्मण्यायाम् इति सप्तम्येकवचनान्तं पदम्, स्वरितस्य इति षष्ठ्येकवचनान्तं पदम्, उदात्तः इति च प्रथमैकवचनान्तं पदम्। एकश्रुति दूरात्संबुद्धौ इति सूत्रात् अत्र एकश्रुति इति प्रथमैकवचनान्तं पदम् अनुवर्तते। अत्रापि एकश्रुतिः इति न विशेषणपदम्, अपि तु विशेष्यपदमेव। अतः उदात्तानुदात्तस्वरितस्वराणाम् एका अभिन्ना श्रुतिः इति तदर्थः। अत्र सुब्रह्मण्यायाम् एकश्रुतिः न, स्वरितस्य तु उदात्तः इति सूत्रगतपदयोजना। सुब्रह्मण्या इति नामविशेषः। तेन च सुब्रह्मण्याख्यो निगदो बोद्धव्यः। अथ कोऽयं निगदः ? इति जिज्ञासायाम् उच्यते निगदशब्दे वर्तमानः गद – धातुः अपादबन्धार्थकः, निपूर्वकात् गद् – धातोः नितरां गद्यते इत्यर्थे कर्मणि ' नौ गदनदपठस्वनः ' इति सूत्रेण अप् – प्रत्ययः। ततश्च प्रक्रियाकार्ये निगदः इति रूपं सिद्धम्, अत्र निशब्दः प्रकर्षे अर्थे वर्तते। उच्चैरपादबन्धं यजुरात्मकं यत् मन्त्रवाक्यं पठ्यते स भवति निगदः। तस्मिन् निगदे न पादव्यवस्था, नापि अर्द्धर्चव्यवस्था। एवमत्र सूत्रार्थो भवति – सुब्रह्मण्याख्ये निगदे ऐकश्रुत्यं न स्यात् लक्षणेन प्राप्तस्य स्वरितस्य उदात्तश्च भवति इति।

**उदाहरणम्** – ' सुब्रह्मण्यो३म् इन्द्रागच्छ, ह रिव आगच्छ, मेधातिथेर्मेष वृ षणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जार कौशिकब्राह्मण गौतमब्रुवाण श्वः सु त्यागमागच्छ मघवन् ' (शत. ब्रा. ३.३.११९)।

**सूत्रार्थसमन्वयः** – अत्र उदाहरणमन्त्रस्य यज्ञकर्मणि विहितत्वात् छन्दस्त्वात् च ' यज्ञकर्मणि ' इति ' विभाषा छन्दसि ' इति च सूत्राभ्यां प्राप्ता एकश्रुतिः प्रकृतसूत्रेण निषिध्यते। सुब्रह्मण्यो३म् इत्यत्र च स्वरितस्य उदात्तत्वं विधीयते। तथाहि यत्प्रत्ययान्तस्य सुब्रह्मण्यशब्दस्य स्त्रीत्वविवक्षायां ततः अजाद्यतष्टाप् इति सूत्रेण टापि टापः टकारस्य चुटू इति सूत्रेण टकारस्य हलन्त्यम् इति सूत्रेण पकारस्य च इत्संज्ञायां तस्य लोपः इत्यनेन च तयोः इत्संज्ञकयोः लोपे ततश्च विभक्तिकार्ये सुब्रह्मण्या इति रूपम्। सुब्रह्मण्यशब्दस्य यत्प्रत्ययान्तत्वात् तस्य च यत्प्रत्ययस्य तित्त्वात् तित् स्वरितम् इति सूत्रेण अत्र अन्त्यस्य अकारस्य स्वरितस्वरः भवति। टापः आकारस्य सुब्रह्मण्यशब्दस्य च अकारस्य स्थाने विहितः आकारः स्थानेऽन्तरतमः इति सूत्रेण आन्तरतम्यात् स्वरितः एव भवति। अत्र टाप्प्रत्ययस्य पित्त्वात् अनुदात्तौ सुप्पितौ इति सूत्रेण आकारस्य अनुदात्तस्वरविशिष्टत्वेऽपि तयोः स्वरितानुदात्तयोः स्थाने स्वरितः एव भवति, स्वरितानुदात्तसन्निपाते स्वरितम् इति सूत्रेण स्वरितस्य अनुदात्तस्य च स्थाने स्वरितस्य एव निर्देशात्। अतः परं सुब्रह्मण्या + ओम् इत्यवस्थायाम् ओमाङोश्च इति पररूपे ओकारे जातस्य सुब्रह्मण्योम् इति शब्दस्य निपातान्तत्वात् तस्य च निपातस्य निपाता आद्युदात्ताः इति सूत्रेण आद्युदात्तत्वात् तत्र च आकारस्य ओकारस्य स्थाने विहितस्य ओकारस्य स्वरितस्वरः भवति। एवं सुब्रह्मण्योम् इत्यत्र अन्तिमः ओकारः स्वरितः इति सिद्धम्। ततश्च प्रकृतसूत्रेण ओकारस्य लक्षणेन प्राप्तस्य स्वरितस्वरस्य स्थाने उदात्तस्वरः विधीयते।



**विशेषः** – अत्र सुब्रह्मण्या + ओम् इत्यवस्थायां स्वरितस्य उदात्तस्य च स्थाने एकादेश उदात्तेनोदात्तः इति सूत्रेण एकादेशे उदात्तस्वरः न भवति, तस्मिन् सूत्रे अनुदात्तस्य च यत्रोदात्तलोपः इति सूत्रात् अनुदात्तस्य इति पदस्य अनुवर्तनात् तेन सूत्रेण उदात्तस्य अनुदात्तस्यैव च स्थाने उदात्तः एकादेशः भवति।

## १.७.१) असावित्यन्तः॥ (वा. ६५१)

**वार्तिकार्थः** – तस्मिन्नेव निगदे प्रथमान्तस्य अन्त उदात्तः स्यात्।

**वार्तिकव्याख्या** – इदं वार्तिकं न सुब्रह्मण्यायां स्वरितस्य तूदात्तः इति सूत्रे पठितम्। अनेन उदात्तस्वरः विधीयते। असौ इति अन्तः इति वार्तिकगदपदच्छेदः। तत्र असौ इति प्रथमैकवचनान्तं पदम्, इति इत्यव्ययम्, अन्तः इति च प्रथमैकवचनान्तं पदम्। 'सुब्रह्मण्योम् सुब्रह्मण्योम् सुब्रह्मण्योम् इन्द्रागच्छ हरिव आगच्छ ...... वासुदेवस्य पुत्रः पशुपतेः पौत्रो नारायणस्य नप्ता रामभद्रस्य पिता महेन्द्रस्य पौत्रः कमलाकस्य प्रपौत्रो देवदत्तो यजते सुत्याम्' – निगदे एवं विधानेन ज्ञायते यत् मन्त्रे यजमानस्य नाम प्रथमान्ततया प्रयोक्तव्यम्, तस्य पूर्वपुरूषाणां नामानि च षष्ठ्यन्ततया प्रयोक्तव्यानि इति। अत्र वार्तिके असौ इति पदेन तदेव यजमानस्य प्रथमान्तं नामवाचकं पदं ग्राह्यम्। अथ अनेन वार्तिकेन तस्य यजमाननामवाचकस्य प्रथमान्तस्य पदस्य अन्तस्य उदात्तस्वरः विधीयते।

**उदाहरणम्** – गार्ग्यो यजते।

**वार्तकार्थसमन्वयः** – गार्ग्यः इत्यत्र गर्गादिभ्यो यञ् इति सूत्रेण यञ्प्रत्ययो विधीयते। तस्य च यञ्प्रत्ययस्य ञिदित्त्वात् गार्ग्यशब्दस्य ञ्नित्यादिर्नित्यम् इति सूत्रेण आद्युदात्तत्वे प्राप्ते प्रकृतवार्तिकेन अत्र अन्तस्य उदात्तस्वरः विधीयते।

## १.७.२) अमुष्येत्यन्तः॥ (वा. ६५२)

**वार्तिकार्थः** – षष्ठ्यन्तस्यापि अन्त उदात्तः स्यात्।

**वार्तिकव्याख्या** – इदं वार्तिकं न सुब्रह्मण्यायां स्वरितस्य तूदात्तः इति सूत्रे पठितम्। अनेन उदात्तस्वरः विधीयते। अत्र अमुष्य इति अन्तः इति वार्तिकगतपदच्छेदः। अत्र अमुष्य इति षष्ठ्येकवचनान्तं पदम्, इति इत्यव्ययम्, अन्तः इति च प्रथमैकवचनान्तं पदम्। अत्रापि 'वासुदेवस्य पुत्रः पशुपतेः पौत्रो नारायणस्य नप्ता रामभद्रस्य पिता महेन्द्रस्य पौत्रः कमलाकस्य प्रपौत्रो देवदत्तो यजते सुत्याम्' – इत्यवंरूपेण मन्त्रे षष्ठ्यन्ततया विहितस्य पदस्य अमुष्य इति पदेन ग्रहणम्। अतः अनेन वार्तिकेन तस्य षष्ठ्यन्ततया विहितस्य पदस्य अन्तस्य उदात्तस्वरः विधीयते।

इदमत्र अवधेयं यत् स्यान्तं विना अन्यानि षष्ठ्यन्तानि पदानि अत्र विवक्षितानि। अत्र स्यान्तषष्ठ्यन्तस्य व्यवच्छेदः भवति, स्यान्तस्योपोत्तमं च इति वार्तिके स्यान्तस्य इति पदग्रहणात्।

**उदाहरणम्** – दाक्षेः पिता यजते।



**सूत्रार्थसमन्वयः** – दाक्षेः इति दाक्षि – शब्दस्य षष्ठ्येकवचने रूपम्। दक्षशब्दात् अत इञ् इति सूत्रेण इञ्प्रत्यये इञ्प्रत्ययस्य ञकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण तस्य ञकारस्य लोपे ततश्च प्रक्रियाकार्ये दाक्षेः इति रूपं सिध्यति। अत्र इञ्प्रत्ययस्य ञिदित्त्वात् ञ्नित्यादिर्नित्यम् इति सूत्रेण आद्युदात्तत्वे प्राप्ते प्रकृतवार्तिकेन अत्र अन्तस्य उदात्तस्वरः विधीयते।

## १.७.३) स्यान्तस्योपोत्तमं च॥ (वा. ६५३)

**वार्तिकार्थः** – स्यान्तस्य उपोत्तमस्य अन्त्यस्य च उदात्तस्वरः स्यात्।

**वार्तिकव्याख्या** – इदं वार्तिकं न सुब्रह्मण्यायां स्वरितस्य तूदात्तः इति सूत्रे पठितम्। अनेन उदात्तस्वरः विधीयते। स्यान्तस्य उपोत्तमं च इति वार्तिकगतपदच्छेदः। तत्र स्यान्तस्य इति षष्ठ्येकवचनान्तं पदम्, उपोत्तमम् इति प्रथमैकवचनान्तं पदम्, च इति अव्ययपदम्। अत्र स्यान्तपदेन निगदे षष्ठ्यन्ततया प्रयुज्यमानानि स्यान्तानि पदानि ग्राह्याणि। एवञ्च प्रकृतवार्तिकेन तस्यैव पदस्य उपोत्तमस्य अर्थात् अन्त्यात् पूर्वस्य अन्त्यस्य च उदात्तस्वरः विधीयते। अत्र चकारेण अन्तः इति पदम् अनुवर्तते। तेन प्रकृतवार्तिकेन स्यान्तस्य पदस्य अन्त्यस्य अन्त्यात् पूर्वस्य च उदात्तस्वरः विधीयते।

**उदाहरणम्** – गार्ग्यस्य पिता यजते।

**वार्तिकार्थसमन्वयः** – गार्ग्यस्य इत्यत्र गार्ग्यस्य इति स्यान्तं पदम्, तस्मात् अत्र ग्य – इति उपोत्तमस्य अकारस्य स्य – इत्यत्र अकारस्य च प्रकृतवार्तिकेन उदात्तस्वरः विधीयते।

## १.७.४) वा नामधेयस्य॥ (वा. ६५४)

**वार्तिकार्थः** – स्यान्तस्य नामधेयस्य उपोत्तममुदात्तं वा स्यात्।

**वार्तिकव्याख्या** – इदमपि वार्तिकं न सुब्रह्मण्यायां स्वरितस्य तूदात्तः इति सूत्रे पठितम्। अनेन वैकल्पिकः उदात्तस्वरः विधीयते। द्विपदात्मकमिदं वार्तिकम्। अत्र वा इति अव्ययपदम्, नामधेयस्य इति च षष्ठ्येकवचनान्तं पदम्। स्यान्तस्योपोत्तमं च इति वार्तिकात् अत्र स्यान्तस्य इति षष्ठ्येकवचनान्तं पदम्, उपोत्तमम् इति प्रथमैकवचनान्तं पदम् अत्र अनुवर्तते। स्यान्तस्य इति नामधेयस्य इति पदस्य विशेषणम्। अत्र नामधेयस्य इति पदेन निगदे षष्ठ्यन्ततया प्रयुज्यमानानि नामवाचकानि स्यान्तानि पदानि ग्राह्यन्ते। अतः प्रकृतवार्तिकेन तस्य नामवाचकस्य स्यान्तस्य पदस्य उपोत्तमस्य अर्थात् अन्त्यात् पूर्वस्य उदात्तस्वरः विधीयते। अत्र वा इति पदग्रहणात् स उदात्तस्वरः विकल्पेन भवति। अनेन वार्तिकेन यस्मिन् पक्षे उपोत्तमस्य उदात्तस्वराभावः तस्मिन् पक्षे स्यान्तस्य अन्तस्य उदात्तस्वरः भवति। अयमपि अन्तस्थानीयः उदात्तस्वरः अनेनैव वार्तिकेन भवति।

**उदाहरणम्** – देवदत्तस्य पिता यजते।



**वार्तिकार्थसमन्वयः** – देवदत्तस्य इति नामवाचकं पदम्, किञ्च अत्र पदमिदं स्यान्तम्। अतः प्रकृतवार्तिकेन अत्र नामवाचकस्य देवदत्तस्य इति पदस्य उपोत्तमस्य अर्थात् अन्त्यात् पूर्वस्य विकल्पेन उदात्तस्वरः भवति। तदभावपक्षे च अन्तस्य स्य – इति अकारस्य उदात्तस्वरः भवति।



## पाठगतप्रश्नाः-३

१४. विभाषा छन्दसि इति सूत्रे विभाषा इति पदग्रहणं कथम् ?

१५. को निगदः ?

१६. निगदे यजमानस्य नामवाचके प्रातिपदिके का विभक्तिः भवति ?

१७. अमुष्येत्यन्तः इति वार्तिकेन कथं स्यान्तस्य षष्ठ्यन्तपदस्य न अन्तोदात्तत्वम् ?

१८. उपोत्तमं नाम कः ?

---

## ९.८) देवब्रह्मणोरनुदात्तः॥ (१.२.३८)

**सूत्रार्थः**-देवब्रह्मणोः स्वरितस्य अनुदात्तः स्यात् सुब्रह्मण्यायाम्।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु एतद् विधिसूत्रम्। सूत्रेऽस्मिन् द्वे पदे वर्तेते। देवब्रह्मणोः अनुदात्तः इति सूत्रगतपदच्छेदः। तत्र देवब्रह्मणोः इति सप्तमीद्विवचनान्तं पदम्। अनुदात्तः इति च प्रथमैकवचनान्तं पदम्। पूर्वस्मात् 'न सुब्रह्मण्यायां स्वरितस्य तूदात्तः' इति सूत्रात् स्वरितस्य इति षष्ठ्यन्तं तथा सुब्रह्मण्यायाम् इति सप्तम्यन्तं पदं च अत्र अनुवर्तेते। सुब्रह्मण्यायां देवब्रह्मणोः स्वरितस्य अनुदात्तः इति पदयोजना। देवब्रह्मणोः इत्यत्र देवश्च ब्रह्मा च इत्यनयोः द्वन्द्वसमासे देवब्रह्माणौ, तयोः देवब्रह्मणोः। अस्य देवशब्दे ब्रह्मण्–शब्दे च परे इत्यर्थः। अनुदात्तः इति प्रथमान्तं विधीयमानं पदम्। सुब्रह्मण्यायाम् इत्यस्य सुब्रह्मण्यनामके यजुर्वेदस्य मन्त्रविशेषे इत्यर्थः। एवञ्च सूत्रार्थो भवति– सुब्रह्मण्यनामके यजुर्वेदस्य मन्त्रविशेषे देवब्रह्मणोः शब्दयोः स्वरितस्य अनुदात्तस्वरः भवति। न सुब्रह्मण्यायां स्वरितस्य तूदात्तः इति सूत्रेण उदात्ते प्राप्ते प्रकृतसूत्रेण तस्य अनुदात्तस्वरः इति बोध्यम्।

**उदाहरणम्-** देवा॒ ब्रह्मा॒ण आगच्छत इति।

**सूत्रार्थसमन्वयः** - अस्मिन् सुब्रह्मण्यनामके यजुर्वेदस्य मन्त्रविशेषे देवशब्दः तथा ब्रह्मण्-शब्दः प्रयुक्तः अस्ति। अतः देवा॒ ब्रह्मा॒ण आगच्छत इत्यस्मिन् उदाहरणे देवा इत्यत्र वकारोत्तरस्य आकारस्य तथा ब्रह्माण इत्यत्र ह्मोत्तरस्य आकारस्य 'न सुब्रह्मण्यायां स्वरितस्य तूदात्तः' इत्यनेन उदात्ते प्राप्ते अनेन प्रकृतसूत्रेण तयोः अनुदात्तस्वरः विधीयते।



## ९.९) स्वरितात्संहितायामनुदात्तानाम्॥ (१.२.३९)

**सूत्रार्थः**-स्वरितात् परेषाम् अनुदात्तानां संहितायामेकश्रुतिः स्यात्।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीीयसूत्रेषु इदं तावद् विधिसूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। तत्र स्वरिताद् इति पञ्चम्येकवचनान्तं, संहितायामिति सप्तम्येकवचनान्तं तथा अनुदात्तानामिति षष्ठीबहुवचनान्तं पदम्। एकश्रुति दूरात्सम्बुद्धौ इति सूत्रादिह एकश्रुतिः इति एकवचनान्तं पदमनुवर्तते। स्वरिताद् इति पञ्चम्यन्तं पदम्, अतः तस्मादित्युत्तरस्य इति परिभाषया स्वरितात् परस्य इत्यर्थो बोध्यः। एकश्रुतिः इति प्रथमान्तं पदम्, अतः तद् विधायकपदम्। अनुदात्तानाम् इत्यत्र जातौ बहुवचनम्। तेन एकस्य द्वयोः बहूनां च विधिः बोध्यः। अतः अनुदात्तानाम् इत्यस्य अर्थः अनुदात्तस्य अनुदात्तयोः अनुदात्तानां वा इति। संहितायाम् इत्यत्र विषयसप्तमी वर्तते। एका श्रुतिः यस्य तत् एकश्रुति इति बहुव्रीहिः। श्रवणं श्रुतिः। दूरादाह्वाने सति, उदात्त-अनुदात्त-स्वरितस्वराणाम् एकश्रुतिः भवति। यत्र उदात्तानुदात्तस्वरितानां पृथक् कोऽपि स्वरः न श्रूयते सः एकश्रुतिस्वरः। संहितायां स्वरिताद् अनुदात्तानाम् एकश्रुतिः स्यादिति सूत्रगतपदानाम् अन्वयः। साकल्येन सूत्रस्य अर्थो भवति- संहितायां सत्यां स्वरितस्वरात् परं विद्यमानानाम् अनुदात्तस्वराणां एकश्रुतिः भवति अर्थात् कोऽपि विशिष्टः स्वरः न श्रूयते इति भावः।

**उदाहरणम्-** इमं मे गङ्गे यमुने सरस्वति।

**सूत्रार्थसमन्वयः-** अस्मिन् उदाहरणे मे इति शब्दे स्वरितस्वरः वर्तते। तस्मात् परं वर्तते गङ्गे-यमुने इत्यादयः शब्दाः। एते च अनुदात्ताः सन्ति। स्वरितस्वरात् परं विद्यमानत्वात् अनुदात्तानां तेषां गङ्गे यमुने इत्यादीनां शब्दानाम् एकश्रुतिः सिद्धा।

## ९.१०) उदात्तस्वरितपरस्य सन्नतरः॥ (१.२.४०)

**सूत्रार्थः**-उदात्तस्वरितौ परौ यस्मात्तस्य अनुदात्तस्य सन्नतरः स्यात्।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं तावद् विधिसूत्रम्। अस्मिन् सूत्रे द्वे पदे विद्येते। तत्र उदात्तस्वरितपरस्य इति षष्ठ्येकवचनान्तं, सन्नतरः इति प्रथमैकवचनान्तं, किञ्च अनुदात्तानाम् इति षष्ठीबहुवचनान्तं पदम्। अनुदात्तग्रहणम् अनुवर्तते। उदात्तस्वरितपरस्य इत्यत्र परशब्दः प्रत्येकम् अभिसम्बध्यते। उदात्तः परं यस्मात् स उदात्तपरः, स्वरितः परं यस्मात् स स्वरितपरः। उदात्तपरस्य स्वरितपरस्य च अनुदात्तस्य सन्नतर आदेशो भवति। सन्नशब्दस्य नीचैः इति अर्थः। अतः सन्नतर इत्यस्य अनुदात्ततरः इत्यर्थः। एवञ्च सूत्रार्थो भवति- उदात्तस्वरः स्वरितस्वरश्च यदा परे तिष्ठतः, तदा पूर्वस्य अनुदात्तस्वरस्य सन्नतरः आदेशो भवति।

**उदाहरणम्-** इमं मे गङ्गे सरस्वति शुतुद्रि व्यचक्षयत्स्वः, माणवक जटिलकाध्यापक क्व गमिष्यसि इति च।



**सूत्रार्थसमन्वयः-** वेदे सम्बोधनपदम् आमन्त्रितशब्देन उच्यते। अनुदात्तस्वरः च निघातशब्देन उच्यते। अत्र मेशब्दम् आश्रित्य सरस्वति इत्यत्र आमन्त्रितनिघातः। शुतुद्रिशब्दस्य तु पादादित्वात् निघातो न भवति। पादस्य आदौ विद्यमानत्वात्, आमन्त्रितत्वात् च षाष्ठेन आमन्त्रितस्य च इत्यनेन शुतुद्रिशब्दस्य शकारोत्तरः उकारः उदात्तः भवति, अतः तस्मिन् परे सति पूर्वस्य सरस्वतिशब्दस्य इकारस्य अनुदात्तस्य सन्नतरः आदेशो भवति। व्यचक्षयत्स्वः इत्यत्र वि-इति उपसर्गत्वाद् आद्युदात्तः। वि इत्यतः परम् अचक्षयदिति तिङन्तस्य तिङः इत्यनेन निघातः। स्वः इत्यत्र 'न्यङ्स्वरौ स्वरितौ' इत्यनेन स्वरितः अस्ति। तस्मिन् स्वरितस्वरे परे सति प्रोक्तसूत्रेण यकारोत्तरस्य अकारस्य सन्नतरः (अनुदात्ततरः) स्वरः सिद्धः।

द्वितीये उदाहरणे क्व इति शब्दे स्वरितस्वरो विद्यते। अतः तस्मिन् परे सति अध्यापकशब्दस्य ककारोत्तरः अकारः अनुदात्तः, तस्य अनेन सूत्रेण सन्नतर आदेशो भवति।

## ९.११) अनुदात्तं च॥ (८.१.३)

**सूत्रार्थः**-द्विरुक्तस्य परं रूपम् अनुदात्तं स्यात्।।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं तावत् विधिसूत्रम्। अस्मिन् सूत्रे द्वे पदे विद्येते। तत्र अनुदात्तम् इति प्रथमैकवचनान्तं पदम्। च इति अव्ययपदम्। पूर्वस्मात् तस्य परमाम्रेडितम् इति सूत्रे आम्रेडितसंज्ञा क्रियते। "सर्वस्य द्वे" इत्यस्मिन् अधिकारे वर्तते इदं सूत्रम्। अस्मिन् अधिकारे उक्तानां शब्दानाम् द्वित्वं भवति। द्वित्वे कृते द्वयोः शब्दयोः मध्ये यः द्वितीयः शब्दः, तस्य 'तस्य परमाम्रेडितम्' इति सूत्रेण आम्रेडितसंज्ञा भवति। आम्रेडितस्य उदाहरणानि भवन्ति चौर चौर, वृषल वृषल, दस्यो दस्यो घातयिष्यामि त्वा, बन्धयिष्यामि त्वा इत्यादि। तस्य आम्रेडितसंज्ञकस्य अनेन सूत्रेण अनुदात्तस्वरः स्यात्। एवञ्च साकल्येन सूत्रार्थो भवति द्विः उक्तयोः शब्दयोः मध्ये यः परः, तस्य अनुदात्तं स्यात् इति।

**उदाहरणम्-** द्विवेदिवें इति।।

**सूत्रार्थसमन्वयः-** अस्मिन् उदाहरणे दिवे दिवे इत्यत्र वारद्वयं दिवे-शब्दः प्रयुक्तः अस्ति। अतः द्वितीयस्य दिवे-शब्दस्य अनेन सूत्रेण अनुदात्तस्वरो भवतीति शम्।

**विशेषः-** प्रकृतिस्वरे प्राप्ते परस्य अनुदात्तत्वम् उच्यते। अनुदात्तशब्दः अत्र न शास्त्रीयम् अनुदात्तम्, तर्हि किमिति चेत् तस्य अत्र अन्वर्थ एव ग्राह्यः। तस्य विग्रहो भवति अविद्यमानम् उदात्तम् अनुदात्तम् इति। शास्त्रीयम् अनुदात्तं यदि विवक्षितं स्यात् तर्हि तत्र सम्बन्धार्था षष्ठी उच्चारणीया इति विशेषः।



## पाठगतप्रश्नाः-४

१९. सुब्रह्मण्यायाम् इत्यस्य कः अर्थः।

२०. देवब्रह्मणोरनुदात्तः इति सूत्रस्य कोऽर्थः।



२१. सुब्रह्मण्यायाम् उदात्तस्वरितपरस्य सन्नतरः इति सूत्रे विधीयमानः एकश्रुतिस्वरः कः।

२२. स्वरितात्संहितायामनुदात्तानाम् इति सूत्रस्य कोऽर्थः।

२३. सन्नतरो नाम किम्।

२४. वेदे आमन्त्रितशब्दार्थः कः।

२५. उदात्तस्वरितपरस्य विग्रहं लिखत।

२६. उदात्तस्वरितपरस्य सन्नतरः इति सूत्रस्य अर्थं लिखत।

२७. अनुदात्तं च इति सूत्रस्य अर्थं लिखत।

२८. अनुदात्तं च इति सूत्रे अनुदात्तशब्दार्थः कः।



## पाठसारः

उदात्तात्परस्य अनुदात्तस्य स्वरितो भवति परन्तु यदि अनुदात्तस्य परं उदात्तः स्वरितो वा स्यात् तर्हि पूर्वस्य अनुदात्तस्य स्वरितो न भवति। गार्ग्यादीनाम् ऋषीणां मते तु स्वरित एव भवति तस्य निषेधो न भवति। दूरात् सम्बूद्धौ वाक्यस्य एकश्रुतिः विधीयते। अत्र एकश्रुतिविषये विग्रहपुरस्सरम् उदाहरणमपि वर्णितम्। उदात्तानुदात्तस्वरितस्वराणां तिरोधानम् एकश्रुतिः। यज्ञकर्मण्यजपन्यूङ्खसामसु इति सूत्रेण जपभिन्ने न्यूङ्खभिन्ने सामभिन्ने च यज्ञकर्मणि मन्त्रः एकश्रुतिः भवति। जपः अनुकरणमन्त्रः, न्यूङ्खाः नाम षोडश ओकाराः, सामानि च वाक्यविशेषस्था गीतयः। अत्र वषट्कारः इति पदेन वौषट् इति अव्ययपदं गृह्यते। अत्र कारशब्दस्य ग्रहणविषये अन्यानि अपि बहूनि मतानि सन्ति। विभाषा छन्दसि इति सूत्रेण छन्दसि विकल्पेन ऐकश्रुत्यं विधीयते। न सुब्रह्मण्यायां स्वरितस्य तूदात्तः इति सूत्रेण सुब्रह्मण्याख्ये निगदे यज्ञकर्मण्यजपन्यूङ्खसामसु इति सूत्रेण विभाषा छन्दसि इति सूत्रेण च प्राप्ता एकश्रुतिः निषिध्यते, स्वरितस्वरस्य च स्थाने उदात्तस्वरः विधीयते। यस्मिन् मन्त्रवाक्ये पादव्यवस्था न वर्तते तत् निगद इत्युच्यते। सुब्रह्मण्या+ओम् इत्यादिस्थलेषु स्वरितस्वरस्य उदात्तस्वरस्य च स्थाने एकादेश उदात्तेनोदात्तः इति सूत्रेण एकादेशे उदात्तस्वरः न भवति, तस्मिन् सूत्रे अनुदात्तस्य च यत्रोदात्तलोपः इति सूत्रात् अनुदात्तस्य इति पदस्य अनुवर्तनात्, किञ्च तेन एकादेशविधायकेन सूत्रेण उदात्तानुदात्तयोः स्थाने एव एकादेश उदात्तः भवति, न तु उदात्तस्वरितयोः स्थाने। असावित्यन्तः इति वार्तिकेन निगदे प्रथमान्तस्य पदस्य अन्तः उदात्तो भवति। स्यान्तस्योपोत्तमं च इति वार्तिकेन स्यान्तपदस्य अन्तस्य अन्तात् पूर्वस्य च उदात्तस्वरः भवति। वा नामधेयस्य इति सूत्रेण नामवाचकस्य स्यान्तस्य पदस्य अन्तात् पूर्वस्य विकल्पेन उदात्तस्वरः भवति, यस्मिन् पक्षे तत्र अन्तात् पूर्वम् उदात्तः न भवति तत्र



अन्तस्य उदात्तस्वरः भवति। देवब्रह्मणोः शब्दयोः स्वरितस्य अनुदात्तः स्यात्। किञ्च स्वरितात् परस्य अनुदात्तस्य एकश्रुतिः स्यात्। द्विवारं उच्यमाने शब्दे परः आम्रेडितसंज्ञकः शब्दः अनुदात्तो भवति।

##  पाठान्तप्रश्नाः

१. अग्निमीळे इति रूपं सस्वरं साधयत।
२. नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् इति सूत्रं व्याख्यात।
३. एकश्रुति दूरात्संबुद्धौ इति सूत्रं व्यख्यात।
४. यज्ञकर्मण्यजपन्यूङ्खसामसु इति सूत्रं व्याख्यात।
५. उच्चैस्तरां वा वषट्कारः इति सूत्रं व्यख्यात।
६. विभाषा छन्दसि इति सूत्रं व्याख्यात।
७. न सुब्रह्मण्यायां स्वरितस्य तूदात्तः इति सूत्रस्यैकमुदाहरणं प्रदर्शयत।
८. असावित्यन्तः इति वार्तिकं व्याख्यात।
९. देवब्रह्मणोरनुदात्तः इति सूत्रं व्याख्यात।
१०. उदात्तस्वरितपरस्य सन्नतरः इति सूत्रस्य उदाहरणं समन्वयत।

##  पाठगतप्रश्नानामुत्तराणि

**उत्तराणि-१**

१. स्वरितस्वरः विधीयते।
२. स्वरितस्वरः।
३. उदात्तानुदात्तस्य स्वरितः इत्यस्य असिद्धत्वात् इति।
४. नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् इत्यनेन।
५. गार्ग्य-काश्यप-गालवानाम् ऋषीणां मते।
६. परमित्यर्थः।

**उत्तराणि-२**

७. दूरात् सम्बोधने वाक्यम् एकश्रुति भवति।
८. सम्बोधयति येन वाक्येन तत् सम्बुद्धिः।
९. अनुकरणमन्त्रः उपांशुप्रयोगो वा जपः।
१०. न्यूङ्खा नाम षोडश ओकाराः।
११. वौषट् - इति शब्दः।
१२. अतितराम् उदात्तः इति।



१३. छन्दसि।

**उत्तराणि-३**

१४. यज्ञकर्मणि इति पदस्य निवृत्त्यर्थम्।

१५. उच्चैरपादबन्धं यजुरात्मकं यत् मन्त्रवाक्यं पठ्यते तद् भवति निगदः।

१६. प्रथमा विभक्तिः।

१७. स्यान्तस्योपोत्तमं च इति वार्तिके स्यान्तस्य इति पदग्रहणात्।

१८. अन्त्यात् पूर्वः।

**उत्तराणि-४**

१९. सुब्रह्मण्यनामके यजुर्वेदस्य मन्त्रविशेषे इत्यर्थः

२०. देवब्रह्मणोः स्वरितस्य अनुदात्तः स्यात् इत्यर्थः।

२१. यत्र उदात्तानुदात्तस्वरितानां पृथक् कोऽपि स्वरः न श्रूयते सः एकश्रुतिस्वरः।

२२. स्वरितात् परेषाम् अनुदात्तानां संहितायामेकश्रुतिः स्यात् इत्यर्थः।

२३. अनुदात्ततरः इति।

२४. सम्बोधनपदम् इति।

२५. उदात्तः परो यस्मात् स उदात्तपरः, स्वरितः परो यस्मात् स स्वरितपरः

२६. उदात्तस्वरितौ परौ यस्मात्तस्य अनुदात्तस्य सन्नतरः स्यात्।

२७. द्विरुक्तस्य परं रूपम् अनुदात्तं स्यात्।।

२८. अविद्यमानम् उदात्तम् अनुदात्तम् इति।

।।इति नवमः पाठः।।



१०

# धातुस्वरः प्रातिपदिकस्वरः च

## प्रस्तावना

वैदिकवाङ्मये स्वरप्रकरणम् अतीव माहात्म्यम् आवहति। भगवता पाणिनिना विरचिता या अष्टाध्यायी तत्र वैदिकस्वरविषयकानि सूत्राणि प्राधान्येन षष्ठाध्यायाद् आरभ्य ग्रन्थस्य आसमाप्तिं यावद् उपन्यस्तानि। अस्मिन् पाठे तु धातोः विहितानां स्वराणां प्रतिपदिकाच्च विहितानां स्वराणां विषये आलोचना विद्यते। तत्रापि च उदात्तस्वरविषये एव प्राधान्येन आलोचना विहिता। उदाहरणेषु कुत्र उदात्तस्वरः भवति इति प्रक्रियापुरःसरं प्रदर्शितम्।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- धातोः विहितानां स्वराणां विषये ज्ञास्यति।
- प्रतिपदिकाद्विहितानां स्वराणां विषये ज्ञास्यति।
- उदात्तस्वरविषये ज्ञास्यति।
- स्वरप्रक्रियां ज्ञास्यति।
- स्वरविषये पटुः भवितुं शक्नुयात्।
- सूत्राणां अर्थनिर्णयं कर्तुं समर्थो भवेत्।
- सूत्राणां व्याख्यानं कर्तुं समर्थो भवेत्।
- अनुवृत्त्यादिना सूत्रार्थनिर्णयमपि कर्तुं शक्नुयात्।

---

## अथ धातुस्वराः

---

### १०.१) धातोः॥ (६.१.१६२)

**सूत्रार्थः** - अन्तः उदात्तः भवति।



**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण उदात्तस्वरः विधीयते। अस्मिन् सूत्रे षष्ठ्यन्तम् एकमेव पदम् अस्ति धातोः इति। अस्मिन् सूत्रे कर्षात्वतो घञोऽन्त उदात्तः इत्यस्मात् सूत्राद् अन्तः उदात्तः इति पदद्वयम् अनुवर्तते। उदात्तानुदात्तादिकम् अचः एव सम्भवन्ति अतः अन्तः अच् इति लभ्यते। तेन सूत्रार्थः भवति धातोः अन्तः अच् उदात्तः भवति इति।

**उदाहरणम्-** अस्य उदाहरणं भवति गोपायतं नः इति, असि सत्यः इति च।

**सूत्रार्थसमन्वयः-** गुपूधातोः पकारोत्तरस्य ऊकारस्य इत्संज्ञायां तस्य लोपः इत्यनेन लोपे च गुप् इति स्थिते अस्य धातोः एकः एव अच् विद्यते तेन यथा कस्यापि यदि एकः एव पुत्रः स्यात् तर्हि स एव आदिः स एव अन्तः तद्वद् अत्रापि गुप्धातोः गकारोत्तरः उकारः एव आदिः अकारः एव अन्तः, अतः अस्य अकारस्य प्रकृतसूत्रेण उदात्तस्वरः। ततः गुप्-इति धातोः आयप्रत्ययः विहितः तेन निष्पन्नस्य गोपाय इत्यस्य पकारोत्तस्य आकारस्य आद्युदात्तश्च इत्यनेन आद्युदात्तस्वरः। सनाद्यन्ता धातवः इत्यनेन गोपाय- इति धातुसंज्ञकः, अतः तस्य अन्तस्य अकारस्यापि प्रकृतसूत्रेण उदात्तस्वरः। ततः गोपायधातोः लोटि मध्यमपुरुषैकवचने थस्प्रत्यये गोपाय थस् इति स्थिते गोपाय-धातोः शबादेशेऽनुबन्धलोपे गोपाय अ थस् इति स्थिते शपः अकारस्य अनुदात्तौ सुप्पितौ इत्यनेन अनुदात्तस्वरः। यकारोत्तरस्य अकारस्य शपः अकारस्य च अतो गुणे इत्यनेन पररूपैकादेशः,तस्य च एकादेश उदात्तेनोदात्तः इत्यनेन उदात्तस्वरः। ततः थसः तम् इत्यादेशः, तस्य अदुदेशपरत्वात् तास्यानुदात्तेन्ङिदुपदेशात् इत्यनेन अनुदात्तस्वरः, ततः उदात्तानुदात्तस्य स्वरितः इत्यनेन तकारोत्तरवर्तिनः अकारस्य स्वरितस्वरः- एवं गोपायतम् इति सिध्यति। असि सत्यः इत्यत्र अस्-धातोः मध्यमपुरुषैकवचने सिप्प्रत्ययेऽनुबन्धलोपे अस् सि इति स्थिते तासस्त्योर्लोपः इत्यनेन सकारलोपे अकारस्य उदात्तस्वरः, ततः परस्य च स्वरितस्वरः। सत्यशब्दे सकारस्य उदात्तस्वरितपरस्य इत्यनेन इत्यनुदात्तस्वरः।

## १०.२) स्वपादिर्हिंसामच्यनिटि॥ (६.१.१८८)

**सूत्रार्थः** - स्वपादीनां हिंसेश्चानिट्यजादौ लसार्वधातुके परे आदिरुदात्तो वा स्यात्।

**सूत्रव्याख्या-** विधिसूत्रम्। अनेन सूत्रेण उदात्तस्वरः विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति, स्वपादिहिंसाम् अचि अनिटि इति सूत्रगतपदच्छेदः। स्वपादिसहिंसाम् इति षष्ठीबहुवचनान्तम, अचि इति सप्तम्यन्तम्, अनिटि इति सप्तम्यन्तं पदम्। न इट् अनिट् तस्मिन् अनिटि इड्भिन्ने इत्यर्थः। स्वप्-धातुः आदिः यस्य सः स्वपादिः,स्वपादिश्च हिंस् च स्वपादिहिंसः छन्दसि बहुवचनम्, तेषां स्वपादिहिंसाम् इति। स्वपादिगणः अदादिगणान्तर्गतः एकः गणः, तत्र पठितानां धातूनां हिंस्-धातोश्च इत्यर्थः। अस्मिन् सूत्रे कर्षात्वतो घञोऽन्त उदात्तः इत्यस्मात् सूत्रात् उदात्तः इति प्रथमान्तं पदम् अनुवर्तते। तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः इत्यस्मात् सूत्रात् लसार्वधातुकम् इति पदम् अनुवर्तते। तच्चात्र सप्तम्यन्ततया विपरिणम्यते। लसार्वधातुकम् इत्यस्य लकारस्य स्थाने जातमित्यर्थः। तेन तिङ्, शतृ-शानच्-इत्येते गृह्यन्ते। आदिः सिचोऽन्यतरस्याम् इत्यस्माद् आदिः इति पदम् अन्यतरस्याम् इति अव्ययपदं चानुवर्तते। अचि इति लसार्वधातुके इत्यस्य विशेषणं तेन यस्मिन्

विधिस्तदादावल्ग्रहणे इत्यनया परिभाषया तदादिविधिः भवति, तेन अजादौ लसार्वधातुके इति प्राप्यते। तेन अस्य सूत्रस्य अर्थो भवति स्वपादीनां धातूनां हिंस्-धातोश्च इड्भिन्ने अजादौ लसार्वधातुके परे आदिः उदात्तः वा भवति इति।

**उदाहरणम्-** अस्य उदाहरणानि- स्वपन्ति, श्वसन्ति, हिंसन्ति इत्यादीनि।

**सूत्रार्थसमन्वयः-** स्वप्-धातुः श्वस्-धातुश्च स्वपादिगणे पठितः। रुधादिगणीयः हिंस्-धातुरपि प्रकृतसूत्रे गृहीतः। तेन एतेषां धातूनां प्रथमपुरुषबहुवचनविवक्षायां झिप्रत्यये झेरन्तादेशे प्रक्रियाकार्ये स्वप् अन्ति, श्वस् अन्ति, हिंस् अन्ति इति जाते इड्भिन्नस्य अजादिलसार्वधातुकस्य परत्वात् प्रकृतसूत्रेण धातूनाम् आदिः अच् विकल्पेन उदात्तः भवति। अत्र उदात्तस्वरस्य वैकल्पिकत्वात् तदभावपक्षे प्रत्ययस्वरं निमित्तीकृत्य मध्ये उदात्तस्वरः भवति।

**विशेषः-** वृत्तिकारानुरोधेन किति ङिति च परे एव अयम् आद्युदात्तस्वरः भवति। सूत्रे अचि इति पदग्रहणात् स्वप्यात्, हिंस्याद् इत्यादिषु न आद्युदात्तस्वरः अजादिलसार्वधातुकस्य अभावाद् इति। सूत्रे अनिट्-इत्यस्य ग्रहणात् इट्सहितलसार्वधातुके परे इदं सूत्रं न प्रवर्तते। यथा स्वपितः, श्वसितः इत्यादौ इडागमस्य विद्यमानत्वात् न आद्युदात्तस्वरः।

## १०.३) अभ्यस्तानामादिः॥ (६.१.१८९)

**सूत्रार्थः-** अनिट्यजादौ लसार्वधातुके परे अभ्यस्तानामादिरुदात्तः।

**सूत्रव्याख्या-** विधिसूत्रम्। अनेन सूत्रेण अभ्यस्तानाम् आदेः उदात्तस्वरः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः, अभ्यस्तानाम् आदिः इति सूत्रगतपदच्छेदः। अभ्यस्तानाम् इति षष्ठीबहुवचनान्तम, आदिः इति प्रथमैकवचनान्तं पदम्। धातोः यदा द्वित्वं भवति तदा समुदायः अभ्यस्तसंज्ञकः भवति। अस्मिन् सूत्रे कर्षात्वतो घञोऽन्त उदात्तः इत्यस्मात् सूत्रात् उदात्तः इति प्रथमान्तं पदम् अनुवर्तते। उदात्तानुदात्तादिकम् अचः एव सम्भवन्ति अतः अच् इति लभ्यते। स्वपादिहिंसामच्यनिटि इत्यस्माद् अचि अनिटि इति सप्तम्यन्तं पदद्वयम् अनुवर्तते। न इट् अनिट् तस्मिन् अनिटि इड्भिन्ने इत्यर्थः। तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः इत्यस्मात् सूत्रात् लसार्वधातुकम् इति पदम् अनुवर्तते तच्चात्र सप्तम्यन्ततया विपरिणम्यते। लसार्वधातुकम् इत्यस्य लकारस्य स्थाने जातमित्यर्थः। तेन तिङ्- शतृ-शानच्-इत्येते गृह्यन्ते। अचि इति लसार्वधातुके इत्यस्य विशेषणं तेन यस्मिन् विधिस्तदादावल्ग्रहणे इत्यनया परिभाषया तदादिविधिः भवति, तेन अजादौ लसार्वधातुके इति प्राप्यते। तेन सूत्रार्थो भवति इड्भिन्ने अजादिलसार्वधातुके परे अभ्यस्तसंज्ञकानाम् आदिः अच् उदात्तः भवति।

**उदाहरणम्-** अस्य उदाहरणं भवति - बिभ्र॑ती ज॒राम्।(तै.सं-४-३-११-५)। यदा॑ह॒वनी॒ये जु॒ह्व॑ति। (तै.ब्रा.१-१-१०-५)।

**सूत्रार्थसमन्वयः-** बिभ्र॑ती इत्यत्र डुभृञ् धारणपोषणयोः इति धातोः शतृप्रत्ययेऽनुबन्धलोपे कर्तरि शप् इत्यनेन शप्प्रत्यये जुहोत्यादिभ्यः श्लुः इत्यनेन शपः लोपे श्लौ इत्यनेन सूत्रेण धातोः द्वित्वं भवति। तेन समुदायस्य अभ्यस्तसंज्ञा भवति। ततः पूर्वोऽभ्यासः इत्यनेन पूर्वस्य अभ्याससंज्ञायां भृञामित् इत्यनेन अभ्यस्तस्य अचः ऋकारस्य इकारे अभ्यासे चर्च इत्यनेन भकारस्य जश्त्वे वकारे बिभृ



अत् इति स्थिते इको यणचि इत्यनेन ऋकारस्य रकारे निष्पन्नस्य बिभ्रत् इत्यस्य शत्रन्तत्वात् स्त्रियाम् उगितश्च इत्यनेन ङीपि अनुबन्धलोपे ईकारे बिभ्रती इति रूपम्। अत्र अस्य धातोः अभ्यस्तत्वात् प्रकृतसूत्रेण आदिस्वरः उदात्तः भवति।

जुह्वति इत्यत्र हु दानादनयोः इति धातोः लट्-लकारे प्रथमपुरुषस्य बहुवचने झिप्रत्यये पूर्ववत् श्लुप्रत्यये पूर्ववद् द्वित्वं भवति। तेन अयं धातुः अभ्यस्तसंज्ञकः। ततः अभ्याससंज्ञायां च हु हु झि इति स्थिते कुहोश्चुः इत्यनेन हकारस्य झकारे अभ्यासे चर्च इत्यनेन झकारस्य जकारे  जु हु झि इति स्थिते अदभ्यास्तात् इत्यनेन झकारस्य अदादेशे जुहु अति इति स्थिते हुश्नुवोः सार्वधातुके इत्यनेन हु-इत्यस्य उकारस्य स्थाने वकारे जुह्वति इति सिध्यति। अत्र प्रकृतसूत्रेण अस्य धातोः आदिः अच् उदात्तः भवति।

ये दर्दति प्रिया वसु इति दधाना इन्द्रं इत्यादीन्यपि अस्य उदाहरणानि। अत्र दधाना इत्यत्र चितः इत्यनेन  अन्तोदात्तस्वरः विहितः। परन्तु अष्टाध्याय्यां चितः इति सूत्रापेक्षया अस्य सूत्रस्य परत्वात् अन्तोदात्तस्वरं बाधित्वा अनेन सूत्रेण आद्युदात्तस्वरः।

**विशेषः-** आदिः सिचोऽन्यतरस्याम् इत्यस्मात् सूत्रात् अस्मिन् सूत्रे आदिः इति पदम् अनुवर्तते तथापि अत्र आदि इति पदग्रहणम् आद्युदात्तस्वरस्य नित्यविधानार्थम्, अन्यथा आदिग्रहणाभावे तस्मादेव सूत्राद्( आदिः सिचोऽन्यतरस्याम् ) अन्यतरस्याम् इति आगमिष्यति, तेन अनेन सूत्रेण आद्युदात्तस्वरः विकल्पेन भविष्यति, तद्यथा न स्यात् तदर्थम् आदिग्रहणमिति बोध्यम्।

## १०.४)  अनुदात्ते च॥ (६.१.१९०)

**सूत्रार्थः-** अविद्यमानोदात्ते लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तः।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन सूत्रेण उदात्तस्वरो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। अनुदात्ते इति सप्तम्यन्तं पदम्। च इति अव्ययपदम्। न उदात्तः अनुदात्तः तस्मिन् अनुदात्ते इति अविद्यमानोदात्ते इत्यर्थः। अभ्यस्तानामादिः इत्यस्मात् सूत्रात् अभ्यस्तानाम् इति षष्ठीबहुवचनान्तम्, आदिः इति च प्रथमान्तं पदमत्र अनुवर्तते। धातोः यदा द्वित्वं भवति तदा समुदायः अभ्यस्तसंज्ञकः। अस्मिन् सूत्रे कर्षात्वतो घञोऽन्त उदात्तः इत्यस्मात् सूत्रात् उदात्तः इति प्रथमान्तं पदम् अनुवर्तते। उदात्तानुदात्तादिकम् अचः एव सम्भवति अतः अच् इति लभ्यते। तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः इत्यस्मात् सूत्रात् लसार्वधातुकम् इति पदम् अनुवर्तते तच्चात्र सप्तम्यन्ततया विपरिणम्यते। लसार्वधातुकम् इत्यस्य लकारस्य स्थाने जातमित्यर्थः। तेन तिङ्- शतृ-शानच्-इत्येते गृह्यन्ते। लसार्वधातुकम् इत्यत्र सप्तमीनिर्देशात् तस्मिन्निति निर्दिष्टे पूर्वस्य इत्यनेन तस्मिन् परे सति पूर्वस्य कार्यम् इति ज्ञायते। एवम् अस्य सूत्रस्य अर्थः भवति यत्र उदात्तस्वरः नास्ति तादृशे लसार्वधातुके परे अभ्यस्तसंज्ञकानां धातूनाम् आदिः अच् उदात्तः भवति।

**उदाहरणम्-** अस्य उदहरणं भवति दधासि रत्नं द्रविणं च दाशुषे इति।

**सूत्रार्थसमन्वयः-** अत्र दधासि इत्यत्र धाधातोः मध्यमपुरुषैकवचने सिप्प्रत्यये धा सिप् इति स्थिते शपि तस्य च जुहोत्यादिभ्यः श्लुः इत्यनेन लोपे श्लौ इत्यनेन धाधातोः द्वित्वं सम्भवति तेन अस्य



धातोः द्वित्वत्वाद् अयं धातुः अभ्यस्तसंज्ञकः। ततः पूर्ववत् अस्य अभ्याससंज्ञायां ह्रस्वः इत्यनेन अभ्यासस्य अचः ह्रस्वे ततः जश्त्वे च दधा सिप् इति स्थिते सिपः पित्त्वात् अनुदात्तौ सुप्पितौ इत्यनेन सकारोत्तरः इकारः अनुदात्तसंज्ञकः। तेन ति-इति उदात्तभिन्नस्य लसार्वधातुकस्य परत्वात् पूर्वस्य अभ्यस्तसंज्ञकस्य धाधातोः आदेः अचः दकारोत्तरस्य अकारस्य प्रकृतसूत्रेण उदात्तस्वरः सिध्यति।

## १०.५) भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति॥ (६.१.१९२)

**सूत्रार्थः-** भीप्रभृतीनामभ्यस्तानां पिति लसार्वधातुके परे प्रत्ययात्पूर्वम् उदात्तं भवति।

**सूत्रव्याख्या-** विधिसूत्रमेतत्। अनेन सूत्रेण उदात्तस्वरो भवति। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। भीह्रीभृहुमदजनधनदरिद्राजागराम् इति षष्ठीबहुवचनान्तं, प्रत्ययात् इति पञ्चम्येकवचनान्तं, पूर्वमिति प्रथमैकवचनान्तं, पिति इति सप्तम्येकवचनान्तं पदम्। अस्मिन् सूत्रे कर्षात्वतो घञोऽन्त उदात्तः इत्यस्मात् सूत्रात् उदात्तः इति प्रथमान्तं पदम् अनुवर्तते। अभ्यस्तानामादिः इत्यस्मात् सूत्रात् अभ्यस्तानाम् इति षष्ठीबहुवचनान्तं पदमत्र अनुवर्तते। धातोः यदा द्वित्वं भवति तदा द्वित्वविशिष्टधातुः अभ्यस्तसंज्ञकः। तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः इत्यस्मात् सूत्रात् लसार्वधातुकम् इति पदम् अनुवर्तते तच्चात्र सप्तम्यन्ततया विपरिणम्यते। लसार्वधातुकम् इत्यस्य लकारस्य स्थाने जातमित्यर्थः। तेन तिङ्- शतृ-शानच्-इत्येते गृह्यन्ते। लसार्वधातुके इत्यत्र पिति इत्यत्र च सप्तमीनिर्देशात् तस्मिन्निति निर्दिष्टे पूर्वस्य इत्यनेन तस्मिन् परे सति पूर्वस्य कार्यम् इति ज्ञायते। तेन अस्य सूत्रस्य अर्थो भवति भीह्रीभृहुमदजनधनदरिद्राजागराम् अभ्यस्तानां पिति लसार्वधातुके परे प्रत्ययात्पूर्वम् उदात्तं भवति।

**उदाहरणम्-** अस्य उदहरणं भवति यौँऽग्निहो॒त्रं जु॒होति॑।

**सूत्रार्थसमन्वयः-** हुधातोः लटि प्रथमपुरुषैकवचे तिप्प्रत्यये पकारस्य हलन्त्यम् इत्यनेन इत्संज्ञायां तस्य लोपः इत्यनेन लोपे द्वित्वादिकार्ये जुहो ति इति स्थिते तिपः तिङ्प्रत्ययेषु पाठात् तिङ्शित्सार्वधातुकम् इत्यनेन तिपः सार्वधातुकसंज्ञा सिध्यति। एवञ्च पिति सार्वधातुकसंज्ञके तिप्प्रत्यये परे सति पूर्वस्य हकारोत्तस्य ओकारस्य प्रकृतसूत्रेण उदात्तस्वरः सिध्यति।

## १०.६) लिति॥ (६.१.१९३)

**सूत्रार्थः-** प्रत्ययात्पूर्वमुदात्तं भवति।

**सूत्रव्याख्या-** विधिसूत्रमेतत्। अनेन सूत्रेण उदात्तस्वरः भवति। अस्मिन् सूत्रे लिति इति सप्तम्यन्तम् एकमेव पदम् अस्ति। लकारः इत् यस्य सः लित् , तस्मिन् इत्यर्थः। लिति इत्यत्र सप्तमीनिर्देशात् तस्मिन्निति निर्दिष्टे पूर्वस्य इत्यनेन लिति परे पूर्वस्य कार्यमिति बोध्यम्। अस्मिन् सूत्रे कर्षात्वतो घञोऽन्त उदात्तः इत्यस्मात् सूत्रात् उदात्तः इति प्रथमान्तं पदम् अनुवर्तते। प्रथमान्तत्वाद् विधायकं पदमेतत्। भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति इत्यस्मात् सूत्रात् प्रत्ययाद् इति



पञ्चम्यन्तं, पूर्वमिति प्रथमान्तं पदं च अनुवर्तते। तेन सूत्रार्थो भवति लिति परे प्रत्ययस्य पूर्वस्वरः उदात्तः भवति।

**उदाहरणम्-** अस्य उदाहरणं भवति चिकीर्षकः इति, यत्र॑ बा॒णाः(तै.सं.-४-६-४-५) इति च।

**सूत्रार्थसमन्वयः-** कृधातोः सनि द्वित्वादिकार्ये चिकीर्ष इति स्थिते ततः ण्वुल्प्रत्ययेऽनुबन्धलोपे चिकीर्ष वु इति स्थिते युवोरनाकौ इत्यनेन वोः अकादेशे षकारोत्तरस्य अकारस्य लोपे चिकीर्ष् अक इति स्थिते ण्वुल्प्रत्ययस्य लित्त्वात् तस्मिन् परे पूर्वस्य ककारोत्तरस्य ईकारस्य प्रकृतसूत्रेण उदात्तस्वरः विधीयते। ततः सर्वसंयोगे विभक्त्यादिकार्ये चिकीर्षक इति रूपं सिध्यति। यच्छब्दात् सप्तम्यास्त्रल् इत्यनेन त्रल्प्रत्यये त्रल्प्रत्ययस्य लित्त्वात् ततः पूर्वस्य यकारोत्तस्य अकारस्य प्रकृतसूत्रेण उदात्तस्वरः सिद्धति।



## पाठगतप्रश्नाः-१

२९. धातोः अन्ते कः स्वरः भवति?.

३०. स्वपादिगणः कस्य गणस्य अन्तर्गतः गणः?

३१. अभ्यस्तानामादिः इति सूत्रस्य कोऽर्थः?

३२. अनुदात्ते च इत्यस्य कोऽर्थ?

३३. जुहोति इत्यत्र हकारोत्तरस्य ओकारस्य कः स्वरः?

३४. यत्र इत्यत्र यकरोत्तरस्य अकारस्य उदात्तस्वरः केन सूत्रेण भवति?

# अथ प्रातिपदिकस्वराः

## १०.७) कर्षात्वतो घञोऽन्त उदात्तः॥ (६.१.१५९)

**सूत्रार्थः-** कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तः स्यात्।

**सूत्रव्याख्या-** विधिसूत्रमेतत्। अनेन सूत्रेण उदात्तस्वरः विधीयते। अस्मिन् सूत्रे चत्वारि पदानि विद्यन्ते। कर्षात्त्वतः इति षष्ठ्येकवचनान्तं, घञः इत्यपि षष्ठ्येकवचनान्तम्, अन्तः इति प्रथैकवचनान्तम्, उदात्तः इत्यपि प्रथमैकवचनान्तं पदम्। कर्षात्वतः इत्यत्र कर्षश्च आत्वतश्च इति विग्रह। कर्षधातोः आकारयुक्तस्य धातोः च इत्यर्थः। घञः इति कर्षात्वतः इत्यस्य विशेषणम्, तेन तदन्तविधिना घञन्तस्य कर्षात्वतः इति लभ्यते। उदात्तानुदात्तादिकं च अचः एव सम्भवति अतः अच् इत्यपि संयुज्यते। तेन अस्य सूत्रस्य अर्थो भवति घञन्तकर्षधातोः घञन्ताकारयुक्तधातोश्च अन्तः अच् उदात्तः भवति इति।



**उदाहरणम्-** अस्य उदाहरणं भवति कर्षः इति, दायः इति च।

**सूत्रार्थसमन्वयः-** कृष विलेखने इति धातोः घञ्प्रत्यये कर्षः इति रूपम्। अत्र घञन्तस्य कर्ष-इत्यस्य अन्तस्य षकारोत्तस्य अकारस्य प्रकृतसूत्रेण उदात्तस्वरः।

दा दाने इति आकारयुक्तधातोः आतो युक्चिण्कृतोः इत्यनेन घञ्प्रत्यये दायः इति रूपम्। अत्र आत्वतः घञन्तस्य दाय-इत्यस्य अन्तस्य यकारोत्तरस्य अकारस्य प्रकृतसूत्रेण उदात्तस्वरः सिध्यति।

**विशेषः-** घञन्तशब्दानां ञ्नित्यादिर्नित्यम् इत्यनेन आदेः अचः उदात्तस्वरः भवति। परन्तु इदं सूत्रं बाधित्वा घञन्तस्य कर्षधातोः घञन्ताकारयुक्तधातोश्च प्रकृतसूत्रेण अन्तः अच् उदात्तः भवति।

प्रकृतसूत्रे कर्ष-इत्यत्र शप्प्रत्ययेन (कृ+शप्) निर्देशः न तु घञ्प्रत्ययेन, तेन तुदादिगणीयः यः कृधातुः तस्माद् घञ्प्रत्यये तदन्तस्य शब्दस्य अन्तस्य अचः प्रकृतसूत्रेण न उदात्तस्वरः अपि च ञ्नित्यादिर्नित्यम् इत्यनेन आदेः अचः उदात्तस्वरः इति बोध्यम्।

## १०.८) उञ्छादीनाञ्च॥ (६.१.१६०)

**सूत्रार्थः-** अन्त उदात्तः स्यात्।

**सूत्रव्याख्या-** विधिसूत्रमेतत्। अनेन सूत्रेण उदात्तस्वरो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः, उञ्छादीनाम् इति षष्ठीबहुवचनान्तं, च इति अव्ययपदम्। अस्मिन् सूत्रे कर्षात्वतो घञोऽन्त उदात्तः इत्यस्मात् सूत्रात् अन्तः इति प्रथमान्तम्, उदात्तः इति प्रथमान्तञ्च पदमनुवर्तते। उदात्तानुदात्तादिकं च अचः एव सम्भवति अतः अच् इति संयुज्यते। उञ्छः आदिः यस्य स उञ्छादिः तेषाम् उञ्छादीनाम् इति। उञ्छादिरेकः गणः तत्र उञ्छ-म्लेच्छ-जञ्ज-जल्प-जप-वध-युग-वेग-वेद-इत्येते शब्दाः सन्ति। अस्मिन् गणे अष्टौ गणसूत्राण्यपि सन्ति। एवम् अस्य सूत्रस्य अर्थो भवति उञ्छादिगणपठितानां शब्दानां अन्तः अच् उदात्तः भवति।

**उदाहरणम्-** अस्य सूत्रस्य उदाहरणानि भवन्ति सत्यं ब्रवीमि वध इत् स तस्य(तै. ब्रा.२-८-८-७) इति। वैश्वानरः कुशिकेभिर्युगेयुगे इति, गावः सोमस्य प्रथमस्य भक्षः इति च।

**सूत्रार्थसमन्वयः-** वध-इति शब्दः उञ्छादिगणे पठितः अतः अत्र प्रथमे वाक्ये तावत् वध इत्यत्र धकारोत्तरस्य अकारस्य उदात्तस्वरः। युगशब्दः उञ्छादिगणे पठितः तेन कुशिकेभिर्युगेयुगे इत्यत्र गकारोत्तरस्य एकारस्य प्रकृतसूत्रेण उदात्तस्वरः सिध्यति। घञन्तः भक्षशब्दोऽपि उञ्छादिगणे पठितः, तेन गावः प्रथमस्य भक्ष इत्यत्र षकारोत्तरस्य अकारस्य प्रकृतसूत्रेण उदात्तस्वरः।

**विशेषः-** युञ्ज्-धतोः घञ्प्रत्यये निष्पन्नः युग-इति शब्दः उञ्छादिगणे पठितः। अत्र घञ्प्रत्यये परे पूर्वस्य पुगन्तलघूपदस्य च इति गुणः प्राप्त आसीत् परन्तु गणपाठे एवमेव पाठात् गुणनिषेधः निपात्यते।

## १०.९) ञ्नित्यादिर्नित्यम्॥ (६.१.१९७)

**सूत्रार्थः-** ञिदन्तस्य निदन्तस्य चादिरुदात्तः स्यात्।



**सूत्रव्याख्या-** विधिसूत्रमेतत्। अनेन सूत्रेण उदात्तस्वरः विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। अत्र ञ्निति इति सप्तम्येकवचनान्तं, आदिः इति प्रथमैकवचनान्तं, नित्यम् इति प्रथमैकवचनान्तं पदम्। ञ्निति इत्यस्य सप्तम्यन्तत्वात् तस्मिन्निति निर्दिष्टे पूर्वस्य इत्यनेन पूर्वस्य कार्यमिति बोध्यम्। ञ्निति इत्यत्र ञ् च न् च ञ्नौ, ञ्नौ इतौ यस्य स ञ्नित् इति तस्मिन् ञ्निति इति ञिति निति च इत्यर्थः। अस्मिन् सूत्रे कर्षात्वतो घञोऽन्त उदात्तः इत्यस्मात् सूत्रात् उदात्तः इति प्रथमान्तं पदमनुवर्तते। उदात्तः इत्यत्र प्रथमान्तत्वाद् इदं विधायकपदमिति ज्ञायते। तेन अस्य सूत्रस्यार्थो भवति ञिति निति च परे तदन्तस्य शब्दस्य नित्यम् आदिः उदात्तः भवति।

**उदाहरणम्-** अस्य उदहरणं भवति यस्मि॒न् विश्वा॑नि पौंस्या॑(ऋ.१.६.९) इति, सु॒ते द॑धिष्व नश्चनः(ऋ.१-३-६)इति।

**सूत्रार्थसमन्वयः-** पुंसः कर्माणि इत्यर्थे गुणवचनब्राह्मणादिभ्यः ष्यञ्कर्मणि च इत्यनेन पुंस्-शब्दात् ष्यञ्प्रत्यये पौंसानि इति पदं निष्पद्यते। ष्यञ्प्रत्ययस्य ञकारस्य इत्संज्ञा तथा तस्य लोपः इत्यनेन लोपश्च भवति अतः अवशिष्टं यत् ष्य-इति तत् ञिद् इत्युच्यते। एवं ञिति परे तदन्तस्य पौंस्यानि इत्यस्य आदेः अचः औकारस्य प्रकृतसूत्रेण उदात्तस्वरो भवति। वेदे पौंस्यानि इत्यत्र सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः इत्यनेन प्रथमाबहुवचने डाप्रत्यत्ये प्रक्रियाकार्ये च पौंस्या इति रूपम्।

चायृ पूजानिशामनयोः इति धातोः चायतेरन्ने ह्रस्वश्च इत्यौणादिकसूत्रेण असुन्प्रत्यये आकारस्य अकारे नुडागमेऽनुबन्धलोपे चय् न् अस् इति स्थिते लोपो व्योर्वलि इत्यनेन यकारस्य लोपे प्रक्रियायां चनः इति रूपम्। अत्र असुन्प्रत्ययस्य नकारस्य इत्संज्ञा भवति अतः असुन्प्रत्ययः नित् भवति, तेन निति असुन्प्रत्यये परे तदन्तस्य चनः इत्यस्य आदेः अचः अकारस्य प्रकृतसूत्रेण उदात्तस्वरः भवति।

**विशेषः-** पुंस्-शब्दस्य यद्यपि ब्राह्मणादिगणे पाठः नास्ति तथापि ब्राह्मणादेराकृतिगणत्वात् पुंस्-शब्दस्य अत्रैव ग्रहणम्। आकृत्या स्वरूपेण यत्र शब्दनां ग्रहणं भवति स आकृतिगणः।

## १०.१०) अन्तश्च तवै युगपत्॥ (६.१.२००)

**सूत्रार्थः-** तवै-प्रत्ययान्तस्याद्यन्तौ युगपदादुदात्तौ स्तः।

**सूत्रव्याख्या-** विधिसूत्रमेतत्। अनेन सूत्रेण उदात्तस्वरो भवति। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। अन्तः इति प्रथमैकवचनान्तं, च इति अव्ययपदं, तवै इत्यत्र लुप्तप्रथमान्तनिर्देशः, युगपद् इति अव्ययपदम्। अत्र तवै-इति प्रत्ययविशेषस्य ग्रहणम्, तेन प्रत्ययग्रहणे तदन्ताः ग्राह्याः इति परिभाषया तवै-प्रत्ययान्तस्य इति लभ्यते। ञ्नित्यादिर्नित्यम् इत्यस्मात् सूत्राद् आदिरिति अनुवर्तते। अस्मिन् सूत्रे कर्षात्वतो घञोऽन्त उदात्तः इत्यस्मात् सूत्रात् उदात्तः इति प्रथमान्तं पदमनुवर्तते। उदात्तः इत्यत्र प्रथमान्तत्वाद् इदं विधायकपदमिति ज्ञायते। तेन अस्य सूत्रस्यार्थो भवति तवै-प्रत्ययान्तस्य आदिः अन्तश्च युगपद् उदात्तः भवति इति।

**उदाहरणम्-** अस्य उदहरणं भवति नान्॑से॒ यातवै (तै. सं ६-२-६-१)। इति।



**सूत्रार्थसमन्वयः-** अत्र याधातोः कृत्यार्थे तवैकेन्केन्यत्वनः इत्यनेन तवै-प्रत्ययेन यातवै इति रूपम् अभवत्। एवं यातवै इत्यस्य तवै-प्रत्ययान्तत्वात् तस्य आदिः स्वरः यकारोत्तरः अकारः अन्तः स्वरः वकारोत्तरः ऐकारश्च युगपद् अनेन सूत्रेण उदात्तसंज्ञकः।

**विशेषः-** अस्मिन् सूत्रे युगपद् ग्रहणं पर्यायनिवृत्यर्थम्। तेनात्र एकस्मिन् पक्षे आदिः उदात्तः अपरस्मिन् पक्षे अन्तः उदात्तः इति पर्यायेण अत्र विधानं न भविष्यति अपि च युगपदेव आदौ अन्ते च उदात्तस्वरस्य विधानं भविष्यति।

## १०.११) क्षयो निवासे॥ (६.१.२०१)

**सूत्रार्थः-** आद्युदात्तः स्यात्।

**सूत्रव्याख्या-** विधिसूत्रमेतत्। अनेन सूत्रेण उदात्तस्वरः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। क्षयः प्रथमैकवचनान्तं, निवासे इति सप्तम्येकवचनान्तं पदम्। क्षय इति शब्दस्वरूपस्य ग्रहणम्। निवास इति अर्थनिर्देशः। ञ्नित्यादिर्नित्यम् इत्यस्मात् सूत्राद् आदिरिति अनुवर्तते। अस्मिन् सूत्रे कर्षात्वतो घञोऽन्त उदात्तः इत्यस्मात् सूत्रात् उदात्तः इति प्रथमान्तं पदमनुवर्तते। उदात्तः इत्यत्र प्रथमान्तत्वाद् इदं विधायकपदमिति ज्ञायते। तेन अस्य सूत्रस्य अर्थो भवति क्षयशब्दस्य आदिः उदात्तः भवति निवासे अर्थे इति।

**उदाहरणम्-** स्वे क्षयै॑ शुचिव्रत।(तै.ब्रा. १-४-१-७)।

**सूत्रार्थसमन्वयः-** क्षि निवासगत्योः इति क्षिधातोः अर्थद्वयमस्ति। तत्र निवासेऽर्थे क्षियन्ति निवसन्ति अस्मिन् इति विग्रहे अधिकरणे क्षिधातोः पुंसि संज्ञायां घः प्रायेण इत्यनेन घप्रत्यये प्रक्रियायां क्षयशब्दः निष्पद्यते। अत्र क्षयशब्दस्य निवासेऽर्थे विद्यमानत्वात् प्रकृतसूत्रेण आदेः षकारोत्तरस्य अकारस्य उदात्तस्वरः सिध्यति।

## १०.१२) वृषादीनां च॥ (६.१.२०३)

**सूत्रार्थः-** वृषादिगणपठिताः शब्दाः आद्युदात्ताः स्युः।

**सूत्रव्याख्या-** विधिसूत्रमेतत्। अनेन सूत्रेण उदात्तस्वरः भवति। अस्मिन् सूत्रे द्वे पदे स्तः। वृषादीनाम् इति षष्ठीबहुवचनान्तं, च इत्यव्ययपदम्। वृषः आदिः यस्य स वृषादिः, तेषामिति। वृषादिः एकः गणः।

वृषादिगणे तावत् वृष-जन-त्वर-हय-गय-नय-तय-अंश-वेद-सूद-पद-गुहाः इत्यादयः शब्दाः सन्ति। ञ्नित्यादिर्नित्यम् इत्यस्मात् सूत्राद् आदिरिति अनुवर्तते। अस्मिन् सूत्रे कर्षात्वतो घञोऽन्त उदात्तः इत्यस्मात् सूत्रात् उदात्तः इति प्रथमान्तं पदम् अनुवर्तते। उदात्तः इत्यत्र प्रथमान्तत्वाद् इदं विधायकपदमिति ज्ञायते। तेन अस्य सूत्रस्य अर्थः भवति वृषादिगणे पठितानां शब्दानाम् आदिस्वरः उदात्तः भवति।

**उदाहरणम्-** अस्य उदहरणं भवति वृषो॑ अ॒ग्निः समि॑ध्यते।(तै.ब्रा. २-४-६-१०)।



**सूत्रार्थसमन्वयः-** वृषु सेचने इति धातोः इगुपधज्ञाप्रीकिरः कः इत्यनेन सूत्रेण कप्रत्यये वृषशब्दः निष्पद्यते। अत्र प्रत्ययस्वरः अर्थात् आद्युदात्तश्च इत्यनेन ककारोत्तस्य अकारस्य उदात्तः प्राप्तः आसीत् तेन वृषशब्दः अन्तोदात्तः अभवत्। परन्तु तं बाधित्वा वृषशब्दस्य वृषादिगणे पाठात् वृषादीनां च इत्यनेन अस्य आदेः वकारोत्तरस्य ऋकारस्य आद्युदात्तस्वरः भवति।

**विशेषः-** वृषदिगणः एकः आकृतिगणः। तेन यस्य शब्दस्य अत्र पाठः नास्ति अपि च केनापि सूत्रेण आद्युदात्तस्वरः न विहितः। तथापि आद्युदात्तस्वरः अस्ति। अतः तस्यापि आकृत्या अत्र वृषादिगणे पाठः स्वीकर्तव्यः इति बोध्यम्।



## पाठगतप्रश्नाः २

३५. कर्षात्वतः इत्यत्र कर्षशब्देन कथं तुदादिगणीयधातोः ग्रहणं न?

३६. उञ्छादिगणे कति गणसूत्राणि सन्ति?

३७. पंस्-शब्दस्य कथं ब्राह्मणादिगणे पाठः?

३८. अन्तश्च तवै युगपद् इत्यत्र युगपद्ग्रहणं किमर्थम्?

३९. क्षयशब्दस्य कस्मिन् अर्थे आदिः उदात्तः भवति?

४०. वृषौ अ॒ग्निः समिंध्यते इत्यत्र वकारोत्तरस्य ऋकारस्य केन सूत्रेण उदात्तस्वरः?

---

## १०.१३) संज्ञायामुपमानम्॥ (६.१.२०४)

**सूत्रार्थः-** उपमानशब्दः संज्ञायामाद्युदात्तः स्यात्।

**सूत्रव्याख्या-** विधिसूत्रमेतत्। अस्मिन् सूत्रे द्वे पदे स्तः। संज्ञायाम् इति सप्तम्येकवचनान्तं, उपमानम् इति प्रथमैकवचनान्तं पदम्। अस्मिन् सूत्रे ञ्नित्यादिर्नित्यम् इत्यस्मात् सूत्राद् आदिरिति अनुवर्तते। अत्र कर्षात्वतो घञोऽन्त उदात्तः इत्यस्मात् सूत्रात् उदात्तः इति प्रथमान्तं पदमनुवर्तते। उदात्तः इत्यत्र प्रथमान्तत्वाद् इदं विधायकपदमिति ज्ञायते। तेन अस्य सूत्रस्यार्थः भवति संज्ञायाम् उपमानशब्दस्य आदिः अच् उदात्तः भवति।

**उदाहरणम्-** चञ्चेव चञ्चा इति।

**सूत्रार्थसमन्वय-** चञ्चा-शब्दस्य तृणनिर्मितपुरुषः इत्यर्थः। चञ्चासदृशः पुरुषः अपि चञ्चा इति भवति। तत्र चञ्चा-शब्दात् इवे प्रतिकृतौ इति सूत्रेण विहितस्य कन्प्रत्ययस्य लुम्मनुष्ये इति सूत्रेण लोपः। एवमत्र चञ्चा-शब्दस्य उपमानवाचकत्वात् संज्ञावाचकत्वाच्च प्रकृतसूत्रेण तस्य आदेः अचः चाकारोत्तरस्य अकारस्य उदात्तस्वरो भवति।



**विशेषः-** ननु चञ्चा-शब्दात् कन्प्रत्यये अनुबन्धलोपे च चञ्चा क(कन्) इति स्थिते कन्प्रत्ययस्य नकारस्य इत्संज्ञकत्वात् तस्य लोपे च प्रत्ययलोपे प्रत्ययलक्षणम् इत्यनेन कन्प्रत्ययः नित् भवति। तस्मिन् निति परे पूर्वस्य चकारोत्तरस्य अकारस्य तु ञ्नित्यादिर्नित्यम् इत्यनेनैव आद्युदात्तस्वरः सिध्यति तेन प्रकृत-सूत्रेण आद्युदात्तस्वरविधानस्य का आवश्यकता इति चेदुच्यते- एतदेव ज्ञापकं यत् वेदे क्वचित्स्वरविधौ प्रत्ययलोपे प्रत्ययलक्षणमिति न गृह्यते। एवम् अत्र प्रत्ययलोपे प्रत्ययलक्षणम् इत्यस्य ग्रहणाभावे चञ्चा क इत्यत्र नित्त्वाभावात् न चाकारोत्तरस्य अकारस्य ञ्नित्यादिर्नित्यम् इत्यनेन आद्युदात्तस्वरः सिध्यति। तेन आद्युदात्तस्वरस्य विधानाय प्रकृतसूत्रं प्रारभ्यते।

अस्मिन् सूत्रे संज्ञायामित्युक्तत्वात् यत्र संज्ञा नास्ति तत्र नेदं सूत्रं प्रवर्तते यथा अग्निर्माणवकः इति । अत्र उपमानत्वे अपि संज्ञा नास्ति अतः मकारोत्तरस्य अकारस्य न उदात्तस्वरः। यत्र च उपमानं नास्ति तत्रापि नेदं सूत्रं प्रवर्तते यथा चैत्रः इति, अत्र संज्ञात्वे अपि उपमानत्वं नास्ति। अतः अत्र न चकारोत्तरस्य ऐकारस्य उदात्तस्वरः।

## १०.१४) अशितः कर्ता॥ (६.१.२०७)

**सूत्रार्थः-** कर्तृवाची अशितशब्दः आद्युदात्तः।

**सूत्रव्याख्य-** विधिसूत्रमेतत्। अनेन सूत्रेण उदात्तस्वरो भवति। अस्मिन् सूत्रे द्वे पदे स्तः। अशितः इति प्रथमैकवचनान्तं कर्ता इत्यपि प्रथमैकवचनान्तं पदम्। अस्मिन् सूत्रे ञ्नित्यादिर्नित्यम् इत्यस्मात् सूत्राद् आदिरिति अनुवर्तते। अत्र कर्षात्वतो घञोऽन्त उदात्तः इत्यस्मात् सूत्रात् उदात्तः इति प्रथमान्तं पदमनुवर्तते। उदात्तः इत्यत्र प्रथमान्तत्वाद् इदं विधायकपदमिति ज्ञायते। तेन अस्य सूत्रस्य अर्थो भवति अशितशब्दः यदा कर्ता तदा अस्य शब्दस्य आदिः अच् उदात्तः भवति।

**उदाहरणम्-** कृषन्नित्फाल आशितम् इत्यस्य उदाहरणम्।

**सूत्रार्थसमन्वयः-** आङ्पूर्वकात् अश्धातोः कर्तरि क्तप्रत्यये आशितम् इति रूपम्। अत्र आशितशब्दः कर्तृवाचकः विद्यते। अतः अस्य आदेः अचः अकारस्य प्रकृतसूत्रेण उदात्तस्वरः भवति।

**विशेषः-** ननु आङ्पूर्वकात् अश्-धातोः कर्तरि क्तप्रत्ययविधानस्य किमपि सूत्रं नास्ति तर्हि कथं क्तप्रत्ययः इति चेदुच्यते अत्र क्तप्रत्ययः निपात्यते इति।

अत्र अन्ये वैयाकरणाः अश्-धातोः कर्तरि क्तप्रत्यये अशितशब्दं निष्पादयन्ति। तदा तु क्तप्रत्ययः उपधादीर्घश्च उभौ एव निपात्येते इति।

## १०.१५) युष्मदस्मदोर्ङसि॥ (६.१.२११)

**सूत्रार्थः-** आदिरुदात्तः स्यात्।

**सूत्रव्याख्या-** विधिसूत्रमेतत्। अनेन सूत्रेण उदात्तस्वरः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। युष्मदस्मदोः इति षष्ठ्येकवचनान्तं, ङसि इति सप्तम्येकवचनान्तं पदम्। ङसि इत्यत्र सप्तमीनिर्देशात् तस्मिन्निति निर्दिष्टे पूर्वस्य इत्यनया परिभाषया षष्ठ्येकवचने परे सति पूर्वस्य कार्यमिति बोध्यम्। अस्मिन्



सूत्रे ञ्नित्यादिर्नित्यम् इत्यस्मात् सूत्राद् आदिरिति अनुवर्तते। अत्र कर्षात्वतो घञोऽन्त उदात्तः इत्यस्मात् सूत्रात् उदात्तः इति प्रथमान्तं पदमनुवर्तते। उदात्तः इत्यत्र प्रथमान्तत्वाद् इदं विधायकपदमिति ज्ञायते। तेन अस्य सूत्रस्य अर्थः भवति ङसि परे सति पूर्वयोः युष्मदस्मदोः आदिः अच् उदात्तः भवति इति।

**उदाहरणम्-** अस्य सूत्रस्य उदाहरणं भवति नहिषस्तव नो मम इति।

**सूत्रार्थसमन्वयः-** युष्मत्-शब्दात् अस्मत्- शब्दाच्च ङस्-प्रत्यये यष्मदस्मद्भ्यां ङशोऽश् इत्यनेन ङशः अशादेशे तवममौ ङसि इत्यनेन युष्मदः मपर्यन्तस्य तव इत्यादेशे अस्मदः मपर्यन्तस्य च मम इत्यादेशे प्रक्रियाकार्ये तव मम इति रूपद्वयं सिध्यति। अत्र तव मम इत्यनयोः ङसन्तत्वात् तस्मिन परे तकारोत्तरस्य अकारस्य मकारोत्तरस्य अकारस्य च प्रकृतसूत्रेण उदात्तस्वरः सिध्यति।

## १०.१६) ङयि च॥ (६.१.२११)

**सूत्रार्थः-** युष्मदस्मदोः आदिरुदात्तः स्यात्।

**सूत्रव्याख्या-** विधिसूत्रमेतत्। अनेन सूत्रेण उदात्तस्वरः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। ङयि इति सप्तम्येकवचनान्तम्। च इति अव्ययपदम्। ङयि इत्यत्र सप्तमीनिर्देशात् तस्मिन्निति निर्दिष्टे पूर्वस्य इत्यनया परिभाषया चतुर्थ्येकवचने परे सति पूर्वस्य कार्यमिति बोध्यम्। अस्मिन् सूत्रे ञ्नित्यादिर्नित्यम् इत्यस्मात् सूत्राद् आदिरिति अनुवर्तते। अत्र कर्षात्वतो घञोऽन्त उदात्तः इत्यस्मात् सूत्रात् उदात्तः इति प्रथमान्तं पदमनुवर्तते। उदात्तः इत्यत्र प्रथमान्तत्वाद् इदं विधायकपदमिति ज्ञायते। तेन अस्य सूत्रस्य अर्थः भवति ङयि परे सति पूर्वयोः युष्मदस्मदोः आदिः अच् उदात्तः भवति इति।

**उदाहरणम्-** अस्य सूत्रस्य उदाहरणं भवति तुभ्यं हिन्वानः इति। मह्यं वातः पवताम् इति च।

**सूत्रार्थसमन्वयः-** युष्मत्-शब्दात् अस्मत्- शब्दाच्च ङे इति प्रत्यये ङे-प्रथमयोरम् इत्यनेन ङे इत्यस्य अमादेशे तुभ्यमह्यौ ङयि इत्यनेन युष्मदः मपर्यन्तस्य तुभ्य इत्यादेशे अस्मदः मपर्यन्तस्य च मह्य इत्यादेशे प्रक्रियाकार्ये तुभ्यं मह्यम् इति रुपद्वयं सिध्यति। अत्र तुभ्यं, मह्यम् इत्यनयोः ङे इति प्रत्ययौ अन्ते विद्येते। ङे इति परे तुभ्यम् इत्यत्र तकारोत्तरस्य आदेः अचः उकारस्य मह्यम् इत्यत्र मकारोत्तरस्य आदेः अचः अकारस्य च प्रकृतसूत्रेण उदात्तस्वरः सिध्यति।

## १०.१७) यतोऽनावः॥ (६.१.११३)

**सूत्रार्थः-** यत्प्रत्ययान्तस्य द्व्यचः आदिः उदात्तः नावं विना इति।

**सूत्रव्याख्या-** विधिसूत्रमेतत्। अनेन सूत्रेण उदात्तस्वरो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। यतः, अनावः इति सूत्रगतपदच्छेदः। यतः इति षष्ठ्येकवचनान्तम्। अनावः इति पञ्चम्येकवचनान्तं पदम्। अत्र यत् इति प्रत्ययः। तस्मात् प्रत्ययग्रहणे तदन्तग्रहणम् इत्यनेन तदन्तग्रहणं भविष्यति। तेन यत्प्रत्ययान्तस्य इत्यर्थः। अनावः इत्यस्य नौ इति शब्दं विना इत्यर्थः। अस्मिन् सूत्रे निष्ठा च द्व्यजनात् इत्यस्मात् सूत्रात् द्व्यच् इत्यनुवर्तते। तच्चात्र पञ्चम्यन्ततया विपरिणम्यते। एवम् अस्य सूत्रस्य अर्थो भवति यत्प्रत्ययान्तस्य अज्द्वययुक्तस्य शब्दस्य आदिः अच् उदात्तः भवति नौशब्दस्य तु न भवति इति।

**उदाहरणम्-** युञ्जन्त्यस्य काम्यां इति।

**सूत्रार्थसमन्वयः-** कमु कान्तौ इति धातोः कमेर्णिङ् इत्यनेन स्वार्थे णिङ्प्रत्ययेऽनुबन्धलोपे अत उपधायाः इत्यनेन कम्-धातोः ककारोत्तरस्य अकारस्य वृद्धौ आकारे निष्पन्नस्य कामि इत्यस्य सनाद्यन्ता धतवः इत्यनेन धातुसंज्ञा सिध्यति। ततः अजन्तस्य कमि-धातोः अचो यत् इत्यनेन यत्प्रत्ययेऽनुबन्धलोपे णेरनिटि इत्यनेन मकारोत्तरस्य णिङः इकारस्य लोपे प्रथमाद्विवचने प्रक्रियाकार्ये काम्या इति सिध्यति। अत्र काम्या इत्यस्य यत्प्रत्ययान्तत्वात् यत्प्रत्ययस्य च तकारस्य इत्संज्ञकत्वात् तित्स्वरितम् इत्यनेन स्वरितस्वरः प्राप्तः आसीत्। परन्तु तं बाधित्वा प्रकृतसूत्रेण अज्द्वययुक्तस्य काम्या इत्यस्य आदेः अचः ककारोत्तरस्य आकारस्य उदात्तस्वरः भवति।

नवतिं नाव्यानाम् इत्यादिषु नावा तार्यम् इति विग्रहे नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्य-वध्यानाम्यसमसमितसम्मितेषु इत्यनेन यत्प्रत्यये निष्पन्नस्य नाव्यशब्दस्य षष्ठीबहुवचनान्तं रूपमस्ति। परन्तु प्रकृतसूत्रे अनावः इत्युक्तत्वात् नाव्यानामित्यस्य आदेः अचः नकारोत्तरस्य आकारस्य प्रकृतसूत्रेण न उदात्तस्वरः।

**विशेषः-** अष्टाध्याय्यां निष्ठा च द्व्यजनात् इत्यस्मात् परम् सप्त सूत्राणि सन्ति ततः परं यतोऽनावः इति प्रकृतसूत्रं विद्यते। एवं मध्यवर्तिसूत्रेषु निष्ठा च द्व्यजनात् इत्यस्मात् सूत्रात् द्व्यच् इत्यस्य अनुवृत्तिः न भवति परन्तु अस्मिन् सूत्रे कथं द्व्यच् इत्यस्य अनुवृत्तिः इति चेदुच्यते मण्डूकप्लुत्या अत्र अनुवृत्तिः इति। मण्डूकः यथा उत्प्लुत्य किञ्चित् किञ्चित् स्थानं परित्यज्य गच्छति तद्वद् इदम् अपि किञ्चित् किञ्चित् सूत्रं परित्यज्य उत्तरोत्तरसूत्रे प्रवर्तते इति ज्ञेयम्।



## पाठगतप्रश्नाः-३

४१. उपमानशब्दः कदा आद्युदात्तः?

४२. कीदृशः अशितशब्दः आद्युदात्तः?

४३. मम इत्यत्र मकारोत्तरस्य अकारस्य उदात्तस्वरः केन सिध्यति?

४४. ङयि च इति सूत्रस्य कोऽर्थः?

४५. यतोऽनावः इति सूत्रे अनावः इत्यत्र का विभक्तिः?



## पाठसारः

धातोः प्रातिपदिकस्य च स्वरम् अवलम्ब्य पाठोऽयं विरचितो भवति। धातोः विहितानां स्वराणां विषये कानिचित् सूत्राणि आलोचितानि। एवञ्च प्रातिपदिकात् विहितानां स्वराणां विषये कानिचित् सूत्राणि आलोचितानि सन्ति। धातोः विहितस्वराणां विषये सूत्राणि भवन्ति, यथा- धातोः, स्वपादिर्हिंसामच्यनिटि



इत्यादीनि सूत्राणि। धातोः इति सूत्रेण धातोः अन्तः उदात्तः भवति। अस्य उदाहरणं भवति गोपायतं नः इति, असि सत्यः इति च। अत्र गुप्-इति धातोः आयप्रत्ययः विहितः तेन निष्पन्नस्य गोपाय इत्यस्य पकारोत्तस्य आकारस्य आद्युदात्तश्च इत्यनेन आद्युदात्तस्वरः। सनाद्यन्ता धातवः इत्यनेन गोपाय इति धातुसंज्ञकः, अतः तस्य अन्तस्य अकारस्यापि प्रकृतसूत्रेण उदात्तस्वरः भवति। प्रातिपदिकात् विहितस्वराणां विषये सूत्राणि भवन्ति, यथा- कर्षात्वतो घञोऽन्त उदात्तः, उञ्छादीनाञ्च इत्यादीनि सूत्राणि। अस्य उदाहरणं भवति कर्षः इति, दायः इति च। कृष विलेखने इति धातोः घञ्प्रत्यये कर्षः इति रूपम्। अत्र घञन्तस्य कर्ष-इत्यस्य अन्तस्य षकारोत्तस्य अकारस्य प्रकृतसूत्रेण उदात्तस्वरः। दा दाने इति आकारयुक्तधातोः आतो युक्चिण्कृतोः इत्यनेन घञ्प्रत्यये दायः इति रूपम्। अत्र आत्वतः घञन्तस्य दाय-इत्यस्य अन्तस्य यकारोत्तरस्य अकारस्य प्रकृतसूत्रेण उदात्तस्वरः सिध्यति।



## पाठान्तप्रश्नाः

१. स्वपादिर्हिंसामच्यनिटि इति सूत्रं व्याख्यात।
२. अभ्यस्तानामादिः इति सूत्रं व्याख्यात।
३. कर्षात्वतो घञोऽन्त उदात्तः इति सूत्रं व्याख्यात।
४. ञ्नित्यादिर्नित्यम् इति सूत्रं व्याख्यात।
५. वृषादीनां च इति सूत्रं व्याख्यात।
६. संज्ञायामुपमानम् इत्यनेन उदात्तस्वरविधानस्य फलं वर्णयत।
७. यतोऽनावः इत्यस्य एकमुदाहरणं प्रदर्श्य समन्वयत।



## पा५ठगतप्रश्नानामुत्तराणि

**उत्तराणि-१**

१. उदात्तस्वरः।
२. अदादिगणान्तर्गतः एकः गणः।
३. अनिट्यजादौ लसार्वधातुके परे अभ्यस्तानामादिरुदात्तः।
४. अविद्यमानोदात्ते इत्यर्थः।
५. उदात्तस्वरः।
६. लिति इति सूत्रेण।

**उत्तराणि-२**



७. शप्प्रत्येन निर्देशात्।

८. अष्टौ।

९. ब्राह्मणादेराकृतिगणत्वात्।

१०. पर्यायनिवृत्यर्तम्।

११. निवासे अर्थे।

१२. वृषादीनां च इति सूत्रेण।

**उत्तराणि-३**

१३. उपमानशब्दः यदा संज्ञावाचकः तदा इति।

१४. कर्तृवाची अशितशब्दः इति।

१५. युष्मदस्मदोर्ङसि इत्यनेन।

१६. ङयि परे सति युष्मदस्मदोः आदिः उदात्तः भवति इत्यर्थः।

१७. पञ्चमीविभक्तिः।

## ।।इति दशमः पाठः।।



# ११

# फिट्-स्वराः

## प्रस्तावना-

अस्मिन् पाठे फिट्सूत्राणि आलोचितानि। फिट् इति संज्ञावाचकं पदम्। एषा च संज्ञा महर्षिपाणिनेः पूर्वकालादेव प्रवर्तमाना अस्ति। एतानि सूत्राणि फिषम् अर्थात् प्रातिपदिकम् आश्रित्यैव प्रवर्तन्ते। एतैः च फिट्- सूत्रैः प्रधानतया शब्दानां स्वरविधानं शास्यते। कस्य शब्दस्य कदा कस्मिंश्च अर्थे कुत्र कः स्वरः स्यात् इति सर्वमेव विस्तृततया एषु सूत्रेषु आलोचितानि। अतः अस्मात् पाठात् भवान् भवती वा कस्य शब्दस्य कदा कुत्र कः स्वरः भवति इति विषये विस्तरेण ज्ञास्यति।



## उद्देश्यानि-

इमं पाठं पठित्वा भवान् वा-

- लोके वेदे च शब्दानां स्वरव्यवस्था कथं भवति इति विषये अधिकतया ज्ञातुं शक्नुयात्।
- फिट्सूत्राणां विषये विशेषरूपेण ज्ञातुं शक्नुयात्।
- अपाणिनीयत्वे अपि फिट्सूत्राणि कथं प्रमाणरूपेण स्वीकृतानि इति विषये ज्ञातुं शक्नुयात्।
- विभिन्नासु अवस्थासु विभिन्नानां शब्दानाम् आद्युदात्तत्वविषये अन्तोदात्तत्वविषये सर्वोदात्तत्वविषये च अधिकतया ज्ञातुं शक्नुयात्।
- सूत्राणाम् अर्थनिर्णयं कर्तुं समर्थो भवेत्।
- सूत्राणां व्याख्यानं कर्तुं स्वयमपि योग्यो भवेत्।
- अनुवृत्त्यादीनां ज्ञानं भवितुं शक्नुयात्।

## अथ फिट्स्वराः

### ११.१) फिषोऽन्त उदात्तः

**सूत्रार्थः-** प्रातिपदिकं फिट् स्यात्। तस्यान्त उदात्तः स्यात्।

**सूत्रावतरणम्-** फिट्-रूपस्य प्रातिपदिकस्य अन्त्यस्य उदात्तविधानार्थं सूत्रमिदं प्रणीतम्।



**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन फिषः प्रातिपदिकस्य वा अन्तस्य उदात्तस्वरः विधीयते। अस्मिन् सूत्रे फिषः अन्तः उदात्तः इति पदच्छेदः। त्रिपदात्मके अस्मिन् सूत्रे फिषः इति षष्ठ्येकवचनान्तं पदम्, अन्तः इति प्रथमैकवचनान्तं पदम्, उदात्तः इत्यपि प्रथमैकवचनान्तं पदम्। एवञ्च अत्र पदान्वयः इत्थं - फिषः अन्तः उदात्तः इति। अयं च सूत्रार्थः- फिषः प्रातिपदिकस्य वा अन्त्यस्य उदात्तः स्यात् इति।

**उदाहरणम्-** उच्चैः।

**सूत्रार्थसमन्वयः-** उच्चैः इति पदं पाणिनीयैः सूत्रैः न प्रातिपदिकसंज्ञकम्, अपि तु पूर्वाचार्यैः प्रातिपदिकम् इत्युच्यते। अतः तस्य फिषः प्रातिपदिकस्य वा अन्त्यः ऐकारः प्रकृतसूत्रेण उदात्तः भवति।

**विशेषः-** फिट्- संज्ञा न हि पाणिनिना विहिता। अपि तु बहुपूर्वकालात् एव पूर्वाचार्यैः एषा संज्ञा विहिता। अत एव उच्यते आचार्येण वासुदेवदीक्षितेन- 'फिडिति पूर्वाचार्यप्रसिद्ध्या प्रातिपदिकमुच्यते' इति। एतानि सूत्राण्यपि यद्यपि अपाणिनीयानि तथापि भाष्यप्रामाण्यात् एतानि सूत्राणि महर्षिणा पाणिनिना स्वीकृतानि इति ज्ञायते। तथाहि भाष्यादिषु आद्युदात्तश्च इत्यादिषु सूत्रेषु प्रकृतेः अन्तोदात्तत्वं शास्यते। एताश्च अन्तोदात्तादिस्वरव्यवस्थाः फिट्- सूत्राणि विना न सम्भवन्ति। अतः एतेषां सूत्राणाम् अपाणिनीयत्वे अपि पाणिनीयैः प्रमाणत्वेन आश्रियन्ते।

## ११.२) छन्दसि च।

**सूत्रार्थः-** छन्दसि दक्षिणस्य आदिः अन्तः च उदात्तः भवति।

**सूत्रावतरणम्-** छन्दसि दक्षिणशब्दस्य आदेः अन्तस्य च स्थाने उदात्तत्वं विधीयते.

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अत्र छन्दसि इति विषयसप्तम्यन्तं पदम्, च इति अव्ययम्। अनेन सूत्रेण दक्षिणशब्दस्य अन्तस्य आदेः च उदात्तत्वं विधीयते। अस्मिन् सूत्रे दक्षिणस्य साधौ इति सूत्रात् दक्षिणस्य इति षष्ठ्येकवचनान्तं पदम्, स्वाङ्गाख्यायामादिर्वा इति सूत्रात् आदिः इति प्रथमैकवचनान्तं पदम्, फिषोऽन्त उदात्तः इति सूत्रात् अन्तः इति च प्रथमैकवचनान्तं पदम्, उदात्तः इत्यपि प्रथमैकवचनान्तं पदमत्र अनुवर्तन्ते। तेन अत्र पदान्वयः भवति- छन्दसि दक्षिणस्य आदिः अन्तः उदात्तः इति। अत्र दक्षिणशब्देन न हि दक्षिणशब्दस्य अर्थः ग्राह्यः अपि तु दक्षिण इति शब्दस्वरूपमेव ग्राह्यम्। ततश्च सूत्रार्थः प्राप्यते- छन्दसि विषये दक्षिणशब्दस्य आदेः अन्तस्य च उदात्तः भवति इति।

**उदाहरणम्-** दक्षिणः।

**सूत्रार्थसमन्वयः-** दक्षिणः इति वैदिकप्रयोगः। अतः प्रकृतसूत्रेण तस्य दक्षिणशब्दस्य अन्तस्य अकारस्य आदेः अकारस्य च उदात्तत्वं विधीयते।

## ११.३) घृतादीनां च

**सूत्रार्थः-** घृतादीनां शब्दानाम् अन्त्यस्वरः उदात्तः स्यात्।



**सूत्रावतरणम्-** घृतादीनां शब्दानाम् अन्त्यस्वरस्य स्थाने उदात्तस्वरस्य विधानार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या-** सूत्रम् इदं विधायकम्। अनेन सूत्रेण घृतादीनां शब्दानाम् अन्त्यस्वरस्य स्थाने उदात्तस्वरस्य विधानं भवति। अत्र द्वे पदे स्तः। तत्र च घृतादीनाम् इति षष्ठीबहुवचनान्तं पदम्, च इति अव्ययपदम्। अस्मिन् सूत्रे अङ्गुष्ठोदकवकवशानां छन्दस्यन्तः इति सूत्रात् अन्तः इति प्रथमैकवचनान्तं पदम्, फिषोऽन्त उदात्तः इति सूत्रात् उदात्तः इति विधेयस्वरबोधकं पदं च अनुवर्तते। अत्र घृतादीनाम् इति विशेषणपदसामर्थ्यात् शब्दानाम् इति विशेष्यबोधकं पदम् आक्षिप्यते। तेन अत्र पदान्वयः भवति- घृतादीनां शब्दानां च उदात्तः इति। ततश्च अत्र सूत्रार्थः भवति- घृतादीनां शब्दानाम् अन्त्यस्वरः उदात्तः स्यात् इति।

**उदाहरणम्-** घृतं मिमिक्षे।

**सूत्रार्थसमन्वयः-** घृतं मिंमिक्षे इत्युदाहरणे घृतम् इति पदस्य अन्त्यः अकारः उदात्तः अस्ति। अत्र प्रकृतसूत्रेण एव घृतशब्दस्य अन्त्यस्य अकारस्य उदात्तत्वं विधीयते।

एवम् अन्यत्रापि प्रकृतसूत्रेण घृतादीनां शब्दानाम् अन्त्यस्य स्वरस्य उदात्तत्वं विधीयते। अत्र अयं घृतादिगणो हि आकृतिगणः भवति।

## ११.४) ज्येष्ठकनिष्ठयोर्वयसि

**सूत्रार्थः-** वयसि अर्थे ज्येष्ठकनिष्ठयोः शब्दयोः अन्तः उदात्तः स्यात्।

**सूत्रावतरणम्-** वयसि अर्थे ज्येष्ठकनिष्ठयोः शब्दयोः अन्त्यस्य स्वरस्य उदात्तत्वविधानार्थं सूत्रमदं प्रणीतमाचार्येण।

**सूत्रव्याख्या-** सूत्रमिदं विधायकम्। अनेन उदात्तः स्वरः विधीयते। ज्येष्ठकनिष्ठयोः वयसि इति अत्र पदच्छेदः। एवञ्च अत्र ज्येष्ठकनिष्ठयोः इति षष्ठीद्विवचनान्तं पदम्, वयसि इति च सप्तम्येकवचनान्तं पदम्। फिषोऽन्त उदात्तः इति सूत्रात् अत्र अन्तः इति प्रथमैकवचनान्तं पदम्, उदात्तः इति च प्रथमैकवचनान्तं पदम् अनुवर्तते। ततश्च अत्र सूत्रस्य पदान्वयः भवति- वयसि ज्येष्ठकनिष्ठयोः अन्तः उदात्तः इति। अत्रापि ज्येष्ठकनिष्ठयोः इति पदेन ज्येष्ठ, कनिष्ठ इति शब्दस्वरूपमेव ग्राह्यम्, न च तयोः शब्दयोः अर्थः ग्राह्यः। एवञ्च अत्र सूत्रस्यास्य अर्थोऽयं लभ्यते- वयसि अर्थे ज्येष्ठकनिष्ठयोः शब्दयोः अन्तः उदात्तः स्यात् इति।

**उदाहरणम्-** ज्येष्ठ आंह चमसा। कनिष्ठ आंह चमसा।

**सूत्रार्थसमन्वयः-** ज्येष्ठ आंह चमसा इति प्रयोगः वेदे लभ्यते। अत्र ज्येष्ठ इति शब्दस्य प्रयोगः वयसि अर्थे वर्तते। तेन अत्र प्रकृतसूत्रेण ज्येष्ठशब्दस्य अन्तः स्वरः अकारः उदात्तो भवति।

कनिष्ठ आंह चमसा इति प्रयोगः अपि वेदे लभ्यते। किञ्च अत्रापि कनिष्ठशब्दस्य वयसि अर्थे प्रयोगः अस्ति। ततश्च प्रकृतसूत्रेण अत्रापि कनिष्ठशब्दस्य अन्त्यः स्वरः अकारः उदात्तो भवति।



## ११.५) अथादिः प्राक् शकटेः

**सूत्रार्थः-** अधिकारोऽयम्। शकटिशकट्योरिति यावत्।

**सूत्रावतरणम्-** अस्मात् सूत्रात् आरभ्य शकटिशकटयोरिति सूत्रं यावत् आदिः- इति पदस्य अधिकारार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** अधिकारसूत्रमिदम्। अनेन आदिः इति पदम् अधिक्रियते। अथ आदिः प्राक् शकटेः इति सूत्रगतपदच्छेदः। चतुष्पदात्मके अस्मिन् सूत्रे अथ इति अव्ययपदम्, आदिः इति प्रथमैकवचनान्तं पदम्, प्राक् इत्यपि प्रथमैकवचनान्तं पदम्, शकटेः इति च पञ्चम्येकवचनान्तं पदम्। अधिक्रियते इति पदमत्र आक्षिप्यते। एवञ्च अत्र पदान्वयः भवति- अथ प्राक् शकटेः आदिः अधिक्रियते इति। ततश्च अयं सूत्रार्थो लभ्यते- शकटिशकटयोरिति सूत्रात् पूर्वं यावत् आदिः इति पदम् अधिक्रियते इति।

**उदाहरणम्-** न संख्यायाः इति सूत्रे प्रकृतसूत्रेण विहितः आदिः इति प्रथमैकवचनान्तं पदम् अधिकृतं भवति।

## ११.६) ह्रस्वान्तस्य स्त्रीविषयस्य

**सूत्रार्थः-** ह्रस्वान्तस्य स्त्रीविषयस्य आदिः उदात्तः स्यात्।

**सूत्रावतरणम्-** स्त्रीविषयस्य ह्रस्वान्तस्य शब्दस्य आदेः उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या-** विधायकं सूत्रमिदम्। अनेन सूत्रेण ह्रस्वान्तस्य स्त्रीविषयस्य शब्दस्य आदिः स्वरः उदात्तो भवति। अस्मिन् सूत्रे द्वे पदे स्तः। तत्र च ह्रस्वान्तस्य इति षष्ठ्येकवचनान्तं पदम्, स्त्रीविषयस्य इत्यपि षष्ठ्येकवचनान्तं पदम्। अथादिः प्राक् शकटेः इति अधिकारसूत्रात् आदिः इति पदम् अत्र अधिकृतं वर्तते। फिषोऽन्त उदात्तः इति सूत्रात् अत्र उदात्तः इति विधेयस्वरबोधकं पदमनुवर्तते। ततश्च अत्र पदान्वयः भवति- ह्रस्वान्तस्य स्त्रीविषयस्य आदिः उदात्तः इति। तेन अयं सूत्रार्थः लभ्यते- ह्रस्वान्तस्य स्त्रीविषयस्य आदिः उदात्तो भवति इति।

**उदाहरणम्-** बलिः। तनुः।

**सूत्रार्थसमन्वयः-** बलिः इति शब्दः स्त्रीविषयः अस्ति किञ्च अयं शब्दः ह्रस्वान्तः अपि अस्ति। तस्मात् प्रकृतसूत्रेण तस्य बलिशब्दस्य आदेः स्वरस्य अकारस्य उदात्तत्वं विधीयते।

एवं तनुः इत्यत्रापि तनुशब्दस्य स्त्रीविषयत्वात् किञ्च ह्रस्वान्तत्वात् प्रकृतसूत्रेण तस्य शब्दस्य आदेः स्वरस्य अकारस्य उदात्तत्वं विधीयते।

## ११.७) तृणधान्यानां च द्व्यषाम्।

**सूत्रार्थः-** द्व्यचामित्यर्थः। द्व्यषां तृणधान्यानां च आदिः उदात्तः भवति।



**सूत्रावतरणम्-** द्व्यचां तृणधान्यानां च आदेः उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या-** षड्विधेषु पाणिनीयसूत्रेषु इदं विधायकम्। अनेन द्व्यज्विशिष्टानां तृणधान्यानां च शब्दानाम् आदिः स्वरः उदात्तः भवति। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। तत्र च तृणधान्यानाम् इति षष्ठीबहुवचनान्तं पदम्, च इति अव्ययपदम्, द्व्यषाम् इति च षष्ठीबहुवचनान्तं पदम्। अथादिः प्राक् शकटेः इति सूत्रात् अत्र आदिः इति प्रथमैकवचनान्तं पदम् अधिकृतम्, उदात्तः इति प्रथमैकवचनान्तं च पदं फिषोऽन्त उदात्तः इति सूत्रात् अनुवर्तते। द्व्यचां तृणधान्यानां चेति पदानां विशेष्यरूपेण शब्दानाम् इति षष्ठीबहुवचनान्तं पदम् अत्र आक्षिप्यते। एवञ्च अत्र पदान्वयः इत्थं भवति- द्व्यचां तृणधान्यानां च शब्दानाम् आदिः उदात्तः इति। अत्र तृणधान्यपदेन न हि तयोः शब्दयोः स्वरूपं ग्राह्यम्, अपि तु तयोः अर्थः एव ग्राह्यः। ततश्च अत्र सूत्रार्थः भवति- द्व्यज्विशिष्टानां तृणधान्यवाचकानां च शब्दानाम् आदिः उदात्तो भवति इति।

**उदाहरणम्-** कुशाः। काशाः। माषाः। तिलाः।

**सूत्रार्थसमन्वयः-** कुश-इति शब्दे अज्द्वयं वर्तते। किञ्च अयं कुशशब्दः तृणवाची। तस्मात् अनेन प्रकृतसूत्रेण तस्य कुश- शब्दस्य आदेः स्वरस्य उकारस्य उदात्तत्वं विधीयते।

एवं काशाः इति शब्दे अज्द्वयं वर्तते। किञ्च अयं काश- शब्दः धान्यवाची। तस्मात् अनेन प्रकृतसूत्रेण तस्य काश- शब्दस्य आदेः स्वरस्य आकारस्य उदात्तत्वं विधीयते।

एवं माषाः इति शब्दे द्वौ अचौ स्तः। किञ्च अयं माष- शब्दः धान्यवाची। तस्मात् अनेन प्रकृतसूत्रेण तस्य माष- शब्दस्य आदेः स्वरस्य आकारस्य उदात्तत्वं विधीयते।

एवं तिलाः इति शब्देऽपि द्वौ अचौ स्तः। किञ्च अयं तिल- शब्दः धान्यवाची। तस्मात् अनेन प्रकृतसूत्रेण तस्य तिल- शब्दस्य आदेः स्वरस्य इकारस्य उदात्तत्वं विधीयते।

**विशेषः-** अत्रेदम् अवधेयं यत् तृणधान्यवाचकानि पदानि द्व्यज्विशिष्टानि स्युः, अन्यथा यदि तानि पदानि बह्वज्विशिष्टानि एकाज्विशिष्टानि वा स्युः तर्हि प्रकृतसूत्रेण तत्र तेषां शब्दानाम् आदिः स्वरः उदात्तो न भवति। तत्र उदाहरणं यथा- गोधूमाः। अत्र गोधूम इति शब्दस्य तृणवाचकत्वात् अपि, तस्य गोधूमशब्दस्य बह्वज्विशिष्टत्वात् प्रकृतसूत्रेण गोधूमशब्दस्य आदिः स्वरः ओकारः न उदात्तो भवति।

अपि च अत्र पदं यदि केवलं द्व्यच्-विशिष्टमेव भवति, तृणवाचकं धान्यवाचकं वा न भवति तर्हि तत्र प्रकृतसूत्रेण तस्य शब्दस्य आदिः स्वरः उदात्तो न भवति। तत्र उदाहरणं यथा- आम्रः इति। अत्र आम्रशब्दस्य द्व्यविशिष्टत्वादपि तृणवाचकत्वाभावात् धान्यवाचकत्वाभावाच्च प्रकृतसूत्रेण तस्य आम्र-शब्दस्य आदिः स्वरः आकारः उदात्तो न भवति।

## ११.८) अक्षस्यादेवनस्य।

**सूत्रार्थः-** अदेवनार्थे अक्षशब्दस्य आदिः उदात्तो भवति।

**सूत्रावतरणम्-** अदेवनस्य अक्षशब्दस्य आदेः उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतमाचार्येण।



**सूत्रव्याख्या-** इदं सूत्रं विधायकम्। अनेन अक्षशब्दस्य आदिः स्वरः उदात्तो भवति। अस्मिन् सूत्रे पदद्वयं वर्तते। तत्र अक्षस्य इति षष्ठ्येकवचनान्तं पदम्, अदेवनस्य इत्यपि षष्ठ्येकवचनान्तं पदम्। अस्मिन् सूत्रे अथादिः प्राक्ः शकटेः इति सूत्रात् आदिः इति प्रथमैकवचनान्तं पदम् अधिकृतम्, उदात्तः इति च प्रथमैकवचनान्तं पदं फिषोऽन्त उदात्तः इति सूत्रात् अनुवर्तते। ततश्च अत्र पदान्वयः भवति- अदेवनस्य अक्षस्य आदिः उदात्तः इति। अत्र अदेवन-शब्देन तदर्थः गृह्यते, अदेवनं नाम अद्यूतक्रिया। अपि च अत्र अक्ष-शब्देन तस्य शब्दस्य स्वरूपमेव ग्राह्यम्। तस्मात् प्रकृतसूत्रेण विहितं कार्यम् अदेवनार्थे प्रवर्तमानस्य अक्षशब्दस्य भवति। ततश्च अयं सूत्रार्थः अत्र लभ्यते- अदेवनार्थे अक्षशब्दस्य आदिः उदात्तो भवति इति।

**उदाहरणम्-** तेन नाक्षः।

**सूत्रार्थसमन्वयः-** तेन नाक्षः इति उदाहरणवाक्ये अक्ष- शब्दस्य अदेवनार्थे प्रयोगः अस्ति, तस्मात् प्रकृतसूत्रेण तस्य अक्षशब्दस्य आदेः स्वरस्य आकारस्य उदात्तत्वं विधीयते।

**विशेषः-** अत्रेदम् अवधेयं यत् प्रकृतसूत्रेण अदेवनार्थे प्रवर्तमानस्य अक्षशब्दस्य आदेः स्वरस्य अकारस्य उदात्तत्वं विधीयते। न हि देवनार्थे अपि प्रवर्तमानस्य अक्षशब्दस्य। अस्मात् एव कारणात् अक्षैर्मा दीव्यः इत्युदाहरणे अक्षशब्दस्य आदेः स्वरस्य अकारस्य उदात्तत्वं नास्ति। यतो हि अत्र अक्षशब्दः देवनार्थे प्रवर्तमानः अस्ति।

## ११.९) छन्दसि च।

**सूत्रार्थः-** छन्दसि विषये मकर-वरूढ-पारेवत-वितस्तेक्ष्वार्जि-द्राक्षा-कलोमा-काष्ठा-पेष्ठा-काशीनाम् अन्येषां च शब्दानाम् आदिः द्वितीयः च स्वरः वा उदात्तः भवति।

**सूत्रावतरणम्-** छन्दसि मकर-वरूढ-पारेवत-वितस्तेक्ष्वार्जि-द्राक्षा-कलोमा-काष्ठा-पेष्ठा-काशीनां शब्दानाम् अन्येषां च शब्दानाम् आदेः द्वितीयस्य वा स्वरस्य विकल्पेन उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या-** सूत्रमिदं विधायकम्। अनेन सूत्रेण मकरादीनां शब्दानाम् अन्येषां च शब्दानाम् आदिः द्वितीयश्च स्वरः विकल्पेन उदात्तो भवति। द्विपदात्मकमिदं सूत्रम्। अस्मिन् सूत्रे छन्दसि इति विषयसप्तम्यन्तं पदम्, च इति अव्ययपदम्। मकर-वरूढ-पारेवत-वितस्तेक्ष्वार्जि-द्राक्षा-कलोमा-काष्ठा-पेष्ठा-काशीनामादिर्वा इति सूत्रात् अत्र मकर-वरूढ-पारेवत-वितस्तेक्ष्वार्जि-द्राक्षा-कलोमा-काष्ठा-पेष्ठा-काशीनाम् इति षष्ठीबहुवचनान्तं पदम्, आदिः इति प्रथमैकवचनान्तं पदम्, वा इति अव्ययपदं च अनुवर्तन्ते। अथ द्वितीयां प्रागीषात् इति सूत्रात् द्वितीयाम् इति पदम् अधिकृतम्। तच्च पदम् अत्र प्रथमैकवचनान्ततया विपरिणम्यते। अतादिः प्राक् शकटेः इति सूत्रात् अत्र आदिः इति प्रथमैकवचनान्तं पदम् अत्र अधिकृतम्। फिषोऽन्त उदात्तः इति सूत्रात् उदात्तः इति प्रथमैकवचनान्तं पदमत्र अनुवर्तते। च इति अव्ययपदेन अत्र अन्येषामपि शब्दानां ग्रहणं भवति। ततश्च अत्र पदान्वयः भवति- छन्दसि मकर-वरूढ-पारेवत-वितस्तेक्ष्वार्जि-द्राक्षा-कलोमा-काष्ठा-पेष्ठा-काशीनां च आदिः द्वितीयः वा उदात्तः इति। तेन



अयं सूत्रार्थः अत्र लभ्यते- छन्दसि विषये मकर-वरूढ-पारेवत-वितस्तेक्ष्वार्जि-द्राक्षा-कलोमा-काष्ठा-पेष्ठा-काशीनाम् अन्येषां च शब्दानाम् आदिः द्वितीयः च स्वरः वा उदात्तः भवति इति।

**उदाहरणम्-** मकरः, वरूढः।

**सूत्रार्थसमन्वयः-** मकरः इति प्रयोगः वेदे दृश्यते, अतः प्रकृतसूत्रेण मकरशब्दस्य छन्दसि प्रवर्तमानत्वात् मकरादिगणे अन्तर्गतत्वात् च प्रकृतसूत्रेण तस्य मकरशब्दस्य आदिः स्वरः उदात्तो भवति।

एवं वरूढः इति प्रयोगः अपि वेदे दृश्यते,. किञ्च अस्य वरूढशब्दस्य मकरादिगणे अन्तर्गतत्वात् प्रकृतसूत्रेण तस्य वरूढशब्दस्य आदिः स्वरः उदात्तो भवति। एवंप्रकारेण अन्यत्रापि पारेवतादिषु शब्देषु अवगन्तव्यम्।

**विशेषः-** मकर-वरूढ-पारेवत-वितस्तेक्ष्वार्जि-द्राक्षा-कलोमा-काष्ठा-पेष्ठा-काशीनामादिर्वा इति सूत्रेणैव अत्र छन्दसि मकरादिशब्दानाम् आदेः द्वितीयस्य च स्वरस्य उदात्तत्वं सम्भवति। तथापि प्रकृतसूत्रेण मकरादिभिः सह अन्येषाम् अपि शब्दानाम् आदिः द्वितीयश्च स्वरः उदात्तो भवति। अस्मादेव कारणात् इदं प्रकृतसूत्रं पृथक्तया उपन्यस्तम्।

## ११.१०) सुगन्धितेजनस्य ते वा।

**सूत्रार्थः-** सुगन्धितेजनस्य ते इति शब्दस्य च आदिः द्वितीयः च विकल्पेन उदात्तः स्यात्।

**सूत्रावतरणम्-** सुगन्धितेजनस्य प्रथमस्य द्वितीयस्य च स्वरस्य, ते शब्दस्य च स्वरस्य विकल्पेन उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** सूत्रमिदं विधायकम्। अनेन उदात्तस्वरः विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। तत्र सुगन्धितेजनस्य इति षष्ठ्येकवचनान्तं पदम्, ते इति षष्ठ्यन्तानुकरणकं प्रथमैकवचनान्तं पदम्, वा इति अव्ययपदम्। अथ द्वितीयां प्रागीषात् इति सूत्रात् द्वितीयाम् इति पदम् अधिकृतम्। तच्च पदम् अत्र प्रथमैकवचनान्ततया विपरिणम्यते। अतादिः प्राक् शकटेः इति सूत्रात् अत्र आदिः इति प्रथमैकवचनान्तं पदम् अत्र अधिकृतम्। फिषोऽन्त उदात्तः इति सूत्रात् उदात्तः इति प्रथमैकवचनान्तं पदमत्र अनुवर्तते। ततश्च अत्र पदान्वयः भवति- सुगन्धितेजनस्य ते आदिः द्वितीयः वा उदात्तः इति। ततश्च अत्र सूत्रार्थः भवति- सुगन्धितेजनस्य ते- इति शब्दस्य च आदिः द्वितीयः विकल्पेन उदात्तः स्यात् इति।

**उदाहरणम्-** सुगन्धितेजनाः।

**सूत्रावतरणम्-** प्रकृतसूत्रेण एव सुगन्धितेजनशब्दस्य आदेः उकारस्य द्वितीयस्य अकारस्य च स्वरस्य उदात्तत्वं विकल्पेन विधीयते। एवं ते इत्यत्रापि प्रकृतसूत्रेण विकल्पेन उदात्तः अस्ति।





## पाठगतप्रश्नाः-१

१. फिट् नाम किम् ?

२. दक्षिणस्य आदिः अन्तः च केन सूत्रेण उदात्तः भवति ?

३. घृतादीनां च इति सूत्रेण किं भवति ?

४. वयसि अर्थे ज्येष्ठकनिष्ठयोः शब्दयोः अन्त्यस्य स्वरस्य उदात्तत्वं केन सूत्रेण?

५. अथादिः प्राक् शकटेः इति सूत्रेण किं पदम् अधिक्रियते ?

६. आम्रः इत्यत्र तृणधान्यानां च द्व्यषाम् इति सूत्रेण कथं न आद्युदात्तत्वम्?

७. अदेवनार्थे अक्षशब्दस्य आदिः उदात्तः केन सूत्रेण ?

८. सुगन्धितेजनशब्दस्य पर्यायेण उदात्तस्वरः केन सूत्रेण ?

## ११.११) शकटिशकट्योरक्षरमक्षरं पर्यायेण।

**सूत्रार्थः-** शकटिशकट्योः शब्दयोः अक्षरम् अक्षरं पर्यायेण उदात्तो भवति।

**सूत्रावतरणम्-** शकटिशकट्योः शब्दयोः स्वराणां पर्यायेण उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** सूत्रमिदं विधायकम्। अनेन पर्यायेण उदात्तस्वरः विधीयते। शकटिशकट्योः अक्षरम् अक्षरं पर्यायेण इति सूत्रगतपदच्छेदः। चतुष्पदात्मकेऽस्मिन् सूत्रे शकटिशकट्योः इति षष्ठीद्विवचनान्तं पदम्, अक्षरम्, अक्षरं चेति पदद्वयं प्रथमैकवचनान्तं, पर्यायेण इति च तृतीयैकवचनान्तं पदम्। फिषोऽन्त उदात्तः इति सूत्रात् अत्र उदात्तः इति विधेयस्वरबोधकं प्रथमैकवचनान्तं पदम् अनुवर्तते। ततश्च अत्र सूत्रस्यस्य पदान्वयः भवति- शकटिशकट्योः अक्षरम् अक्षरं पर्यायेण उदात्तः इति। अत्र शकटिशकट्योः इति पदस्य विशेष्यरूपेण शब्दयोः इति पदम् आक्षिप्यते। ततश्च अत्र सूत्रार्थो भवति- शकटिशकट्योः शब्दयोः अक्षरम् अक्षरं पर्यायेण उदात्तो भवति इति

**उदाहरणम्-** शकटी। शकटिः।

**सूत्रार्थसमन्वयः-** शकटी इत्यस्मिन् पदे प्रत्येकं स्वराः उदात्ताः सन्ति। अथ प्रकृतसूत्रेण एव पर्यायक्रमेण अत्र स्वराः उदात्ताः भवन्ति। एवं शकटिः इत्यत्रापि प्रकृसूत्रेण एव पर्यायक्रमेण स्वरवर्णाः उदात्ताः सन्ति।

**विशेषः-** अथादिः प्राक् शकटेः इति अधिकारसूत्रे प्राक् शकटेः इति वचनात् तेन सूत्रेण विहितः आदिः इति पदस्य अधिकारः प्रकृतसूत्रात् पूर्वं यावत् एव वर्तते। अस्मात् एव कारणात् अत्र पर्यायेण शकटिशकट्योः शब्दयोः स्वराः उदात्ताः भवन्ति।



## ११.१२) गोष्ठजस्य ब्राह्मणनामधेयस्य।

**सूत्रार्थः-** अक्षरमक्षरं पर्यायेणोदात्तम्।

**सूत्रावतरणम्-** ब्राह्मणनामधेयस्य गोष्ठजशब्दस्य स्वराणां पर्यायेण उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन उदात्तस्वरः विधीयते। अत्र द्वे पदे स्तः। गोष्ठजशब्दस्य ब्राह्मणनामधेयस्य चेति सूत्रगतपदच्छेदः। तत्र गोष्ठजशब्दस्य इति षष्ठ्येकवचनान्तं पदम्, ब्राह्मणनामधेयस्य इत्यपि षष्ठ्येकवचनान्तं पदम्। शकटिशकट्योरक्षरमक्षरं पर्यायेण इति सूत्रात् अक्षरम्, अक्षरं चेति प्रथमैकवचनान्तं पदद्वयम्, पर्यायेण इति तृतीयैकवचनान्तं पदम् अत्र अनुवर्तन्ते। ततश्च अत्र सूत्रस्यास्य पदान्वयः भवति- गोष्ठजशब्दस्य ब्राह्मणनामधेयस्य अक्षरमक्षरं पर्यायेण उदात्तः इति। प्रकृतसूत्रविहितं कार्यं गोष्ठज इति शब्दस्वरूपस्य भवति। किञ्च प्रकृतसूत्रविहितं कार्यं तदैव सम्भवति यदा गोष्ठजशब्दः कस्यापि ब्राह्मणस्य नाम भवति। अत एव सूत्रे ब्राह्मणनामधेयस्य इति पदम् उपन्यस्तमस्ति। एवम् अत्र अयं सूत्रार्थः लभ्यते ब्राह्मणनामधेयस्य गोष्ठजशब्दस्य प्रत्येकं स्वराः उदात्ताः भवन्ति इति।

**उदाहरणम्-** गोष्ठजो ब्राह्मणः।

**सूत्रार्थसमन्वयः-** गोष्ठजो ब्राह्मणः इत्यत्र गोष्ठज इति शब्दः कस्यचित् ब्राह्मणस्य नाम अस्ति। अतः प्रकृतसूत्रेण तस्य गोष्ठजशब्दस्य स्वरवर्णानाम् पर्यायक्रमेण उदात्तत्वं विधीयते।

**विशेषः-** अत्रेदम् अवधेयं यत् अयं गोष्ठजशब्दः ब्राह्मणस्य नाम भवति। अन्यथा तत्र प्रकृतसूत्रेण उदात्तत्वं न विधीयते। अत एव गोष्ठजः पशुः इत्यादौ गोष्ठजशब्दस्य ब्राह्मणस्य नामधेयत्वाभावात् प्रकृतसूत्रेण तत्र स्वराः उदात्ताः न भवन्ति। तत्र च कृदुत्तरप्रकृतिस्वरेण अन्तोदात्तः भवति।

## ११.१३) निपाता आद्युदात्ताः।

**सूत्रार्थः-** निपाता आद्युदात्ताः स्युः।

**सूत्रावतरणम्-** निपातसंज्ञकानाम् आद्यानां स्वराणाम् उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** षड्विधेषु पाणिनीसूत्रेषु इदं विधिसूत्रम्। अनेन उदात्तः स्वरः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः, तत्र निपाताः इति प्रथमाबहुवचनान्तं पदम्, आद्युदात्ताः इत्यपि प्रथमाबहुवचनान्तं पदम्। अत्र निपात इति संज्ञाबोधकं पदम्। च, वा, ह, अह, एव, एवम्, नूनम्, शश्वत्, युगपत्, भूयस्, कूपत्, कुवित्, नेत्, चेत्, चणकच्चित्, यत्र, नह, हन्त, माकिः, माकिम्, नकिः नकिम्, माङ्, नञ्, यावत्, तावत्, त्वै, द्वै, न्वै, रै, श्रौषट्, वौषट्, स्वाहा, स्वधा, वषट्, तुम्, तथाहि, खलु, किल, अथो, अथ, सुष्ठु, स्म, आदह – इत्यादयः निपातसंज्ञकाः।

तथाहि पाणिनीयशास्त्रे निपात इति संज्ञाबोधकं पदम्। तत्र निपातसंज्ञाविधायकानि नैकानि सूत्राणि सन्ति। यथा- चादयोऽसत्त्वे, प्रादयः इत्यादीनि। तेषु अद्रव्यवाचिनः शब्दाः ये च चादिगणे पठिताः



तेषां चादयोऽसत्त्वे इति सूत्रेण निपातसंज्ञा विधीयते। अद्रव्यवाचिनां प्रादिगणे पठितानां शब्दानां प्रादयः इति सूत्रेण निपातसंज्ञा भवति। एवमत्र पदान्वयः निपाताः आद्युदात्ताः इति। ततश्च अयं सूत्रार्थः लभ्यते- निपाताः आद्युदात्ताः स्युः इति। ततश्च सूत्रार्थः भवति- निपाताः आद्युदात्ताः स्युः इति।

**उदाहरणम्-** स्वाहा।

**सूत्रार्थसमन्वयः-** स्वाहा इति चादयोऽसत्त्वे इति सूत्रेण निपातसंज्ञकः। अतः तस्य निपातत्वात् प्रकृतसूत्रेण स्वाहा इति अस्य आदेः आकारस्य उदात्तत्वं विधीयते। एवं स्वधा, वषट्, पम्, तथाहि इत्यादीनां निपातानाम् आदीनां स्वराणाम् उदात्तत्वं विधीयते।

**विशेषः-** प्रकृतसूत्रे छन्दसि इति पदं न अनुवर्तते, आद्युदात्तश्च इति भाष्यकारोक्तस्य प्रामाण्यात्। तेन प्रकृतसूत्रेण विहितं कार्यं लोके अपि भवति वेदे अपि भवति।

## ११.१४) उपसर्गश्चाभिवर्जम्।

**सूत्रार्थः-** अभिशब्दं वर्जयित्वा उपसर्गाः आद्युदात्ताः स्युः।

**सूत्रावतरणम्-** अभिवर्जानाम् उपसर्गानाम् आदीनां स्वराणाम् उदात्तविधानार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या-** सूत्रमिदं विधायकम्। अनेन अभिवर्जाः उपसर्गाः आद्युदात्ताः विधीयन्ते। अत्र त्रीणि पदानि सन्ति, उपसर्गः च अभिवर्जम् इति सूत्रगतपदच्छेदः। तत्र उपसर्गः इति प्रथमैकवचनान्तं पदम्, च इति अव्ययम्, अभिवर्जम् इति प्रथमैकवचनान्तं पदम्। अस्मिन् सूत्रे आदिः, उदात्तः इति प्रथमैकवचनान्तं पदद्वयम् अनुवर्तते। एवञ्च तत्र पदान्वयः भवति- अभिवर्जम् उपसर्गाः च आदिः उदात्तः इति। अत्र आदिः उदात्तः चेति पदद्वयम् आद्युदात्ताः इत्येवंरूपेण उपसर्गाः इति पदेन सह अन्वेति। प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप – एते प्रादयः। ततश्च अत्र सूत्रार्थः भवति- अभि इत्युपसर्गं वर्जयित्वा अन्ये उपसर्गाः आद्युदात्ताः स्युः इति।

**उदाहरणम्-** उर्द्दुत्तमं वंरुण।

**सूत्रार्थसमन्वयः-** उद्धतः इत्यत्र उत् इति उपसर्गसंज्ञकः। अतः प्रकृतसूत्रेण अत्र उत् इत्यस्य स्वरस्य प्रकृतसूत्रेण उदात्तत्वं विधीयते। अत्र यदि अभि इत्युपसर्गः स्यात् तर्हि प्रकृतसूत्रेण तत्र न तस्य अभ्युसर्गस्य आद्युदात्तत्वम्। तत्र उदाहरणं यथा- अभ्यंभिहि, अभराममस्थानम् इत्यदीनि।

ननु पूर्वसूत्रेण निपाता आद्युदात्ताः इत्यनेन एव अत्र उपादीनाम् उपसर्गानाम् आद्युदात्तत्वं सिध्यति, तथापि अत्र पृथक्तया कथं सूत्रमिदमुपन्यन्तम् ? इति प्रश्ने सति उच्यते यत् पूर्वसूत्रेण एव उपादीनाम् उपसर्गानाम् आद्युदात्तत्वं सम्भवति, तथापि उपसर्गेषु अभि इत्युपसर्गस्य आद्युदात्तत्वं न स्यात् तदर्थं सूत्रमिदम् उपन्यस्तम्।



## ११.१५) एवादीनामन्तः।

**सूत्रार्थः-** एवादयः अन्तोदात्ताः स्युः।

**सूत्रावतरणम्-** एवादीनां शब्दानाम् अन्त्यस्य स्वरस्य उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** सूत्रमिदं विधायकम्। अनेन एवादीनां शब्दानाम् अन्तः उदात्तः भवति। एव आदीनाम् अन्तः इति सूत्रगतपदच्छेदः। तत्र एवादीनाम् इति षष्ठीबहुवचनान्तं पदम्, अन्तः इति च प्रथमैकवचनान्तं पदम्। निपाता आद्युदात्ताः इति सूत्रात् उदात्तः इति प्रथमैकवचनान्तं पदम् अत्र अनुवर्तते। ततश्च अत्र पदान्वयः भवति- एवादीनाम् अन्तः उदात्तः इति। एव, एवम्, नूनम्, शश्वत्, युगपत्, भूयस्, कूपत्, कुवित्, नेत्, चेत्, चणकच्चित्, यत्र, नह, हन्त, माकिः, माकिम्, नकिः नकिम्, माङ्, नञ्, यावत्, तावत्, त्वै, द्वै, न्वै, रै, श्रौषट्, वौषट्, स्वाहा, स्वधा, वषट्, तुम्, तथाहि, खलु, किल, अथो, अथ, सुष्ठु, स्म, आदह इत्यादयः एवादयः। तेन अत्र सूत्रार्थः भवति- एवादीनाम् अन्तः उदात्तः स्यात् इति।

एवमादीनामन्तः इति च सूत्रस्यास्य पाठान्तरम्। तस्मिन् पक्षे एवम् इति अव्ययपदम्, आदीनाम् इति षष्ठीबहुवचनान्तं पदम्, अन्तः इति प्रथमैकवचनान्तं पदं भवति। अत्रापि उदात्तः इति प्रथमैकवचनान्तं पदं पूर्वसूत्रात् अनुवर्तते। ततश्च अत्र पदान्वयः भवति- एवम् आदीनाम् अन्तः उदात्तः इति। तेन च अत्र सूत्रार्थः भवति- एवम् इत्यदीनां शब्दानाम् अन्तः उदात्तः स्यात् इति।

**उदाहरणम्-** सह॑ ते पुत्र सू॒रिभिः॑, एव, एवम्, नूनम्।

**सूत्रार्थसमन्वयः-** आलोचिते सूत्रे एव इत्यादयः शब्दाः एवादौ अन्तर्भवन्ति, अतः प्रकृतसूत्रेण एव इत्यस्य अन्तः स्वरः उदात्तो भवति।

सह॑ ते पुत्र सू॒रिभिः॑ इत्यादिषु सह इति अन्तोदात्तत्वेन पठितम्। परन्तु षष्ठाध्यायस्य तृतीयपादे सहस्य सः इति सूत्रे सहशब्दः आद्युदात्तत्वेन पठितः। अतः इदं चिन्त्यम् इति आचार्याः।

## ११.१६) वाचादीनामुभावुदात्तौ।

**सूत्रार्थः-** ( वाच्- इत्यादीनां शब्दानाम् उभौ एव वर्णौ उदात्तौ स्तः)।

**सूत्रावतरणम्-** वाचादीनां शब्दानाम् उभयोः वर्णयोः उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या-** षड्विधेषु पाणिनीयसूत्रेषु इदं विधायकम्। अनेन सूत्रेण वाचादीनां शब्दानाम् उभौ वर्णौ उदात्तौ भवतः।

अस्मिन् सूत्रे वाचादीनाम् उभौ उदात्तौ इति सूत्रगतपदच्छेदः। किञ्च अत्र वाचादीनाम् षष्ठीबहुवचनान्तं पदम्, उभौ इति प्रथमाद्विवचनान्तं पदम्, उदात्तौ इत्यपि प्रथमाद्विवचनान्तं पदम्। अत्र सूत्रस्यास्य पदान्वयः इत्थं- वाचादीनाम् उभौ उदात्तौ इति। ततश्च अयं सूत्रार्थः अत्र प्राप्यते- वाचादीनां शब्दानाम् उभौ वर्णौ उदात्तौ भवतः इति।

**उदाहरणम्-** वाचौ।

**सूत्रार्थसमन्वयः-** वाचौ इति वाच्-शब्दस्य प्रथमाद्विवचने रूपम्। अतः प्रकृतसूत्रेण वाच्-शब्दात् प्रथमाद्विवचने निष्पन्नस्य वाचौ इति शब्दस्य उभौ एव स्वरौ उदात्तौ भवतः। एवं वाचादिगणे पठितानाम् अन्येषां शब्दानाम् अन्यान्यपि रूपाणि अत्र उदाहरणानि।

अत्र अनुदात्तं पदमेकवर्जम् इति सूत्रेण प्राप्तस्य अनुदात्तस्य स्वरस्य बाधार्थम् अस्मिन् सूत्रे उभौ इति पदस्य ग्रहणम् अस्ति।

## ११.१७) चादयोऽनुदात्ताः।

**सूत्रार्थः-** चादयः निपाताः अनुदात्ताः स्युः।

**सूत्रावतरणम्-** अत्र चादीनां निपातानाम् आद्युदात्ताः इति सूत्रेण प्राप्तस्य आद्युदात्तत्वस्य बाधार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या-** संज्ञा-परिभाषा-विधि-नियमातिदेशाधिकारात्मकेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन अनुदात्तस्वरः विधीयते। अस्मिनि सूत्रे द्वे पदे स्तः, चादयः अनुदात्ताः इति। निपाताः इति प्रथमाबहुवचनान्तं पदम् तत्तु पूर्वसूत्रात् अनुवर्तते। ततश्च अत्र सूत्रस्यास्य पदान्वयः इत्थं -- चादयः निपाताः अनुदात्ताः इति। च, वा, ह, अह, एव, एवम्, नूनम्, शश्वत्, युगपत्, भूयस्, कूपत्, कुवित्, नेत्, चेत्, चणकच्चित्, यत्र, नह, हन्त, माकिः, माकिम्, नकिः नकिम्, माङ्, नञ्, यावत्, तावत्, त्वै, द्वै, न्वै, रै, श्रौषट्, वौषट्, स्वाहा, स्वधा, वषट्, तुम्, तथाहि, खलु, किल, अथो, अथ, सुष्ठु, स्म, आदह इत्यादयः चादयः। अयं च चादिगणः आकृतिगणः भवति। ततश्च अत्र अयं सूत्रार्थः लभ्यते -- चादयः निपातसंज्ञकाः अनुदात्ताः स्युः इति।

**उदाहरणम् --** उत त्वः।

**सूत्रार्थसमन्वयः-** उत इति निपातसंज्ञकः शब्दः। तस्य च चादिगणे पाठः वर्तते। अतः प्रकृतसूत्रेण चादिगणे पठितस्य उत इति निपातस्य आदेः उकारस्य अनुदात्तत्वं विधीयते। एवं वा, ह, अह, एव, एवम्, नूनम्, शश्वत्, युगपत्, भूयस् -- इत्यादिषु अपि सूत्रस्यास्य उदाहरणं बोध्यम्।

## ११.१८) यथेति पादान्ते।

**सूत्रार्थः-** ( पादान्ते यथेति अनुदात्तो भवति) ।

**सूत्रावतरणम्-** पादान्ते यथा इत्यस्य अनुदात्तस्वरविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्यख्या-** संज्ञा-परिभाषा-विधि-नियमातिदेशाधिकारात्मकेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन अनुदात्तस्वरः विधीयते। अस्मिन् सूत्रे यथा, इति, पादान्ते इति पदच्छेदः। पदत्रयात्मके अस्मिन् सूत्रे यथा इति अव्ययपदम्, इति इत्यपि अव्ययपदम्, पादान्ते इति च सप्तम्येकवचनान्तं पदम्। पूर्वसूत्रात् चादयोऽनुदात्ताः इति सूत्रात् अनुदात्ताः इति प्रथमाबहुवचनान्तं पदम् प्रकृतसूत्रे अनुवर्तते। ततश्च अत्र



पदान्वयः भवति -- पादान्ते यथा इति अनुदात्तः इति। एवञ्च अत्र सूत्रार्थः इत्थं सिध्यति -- पादान्ते यथा इति अनुदात्तो भवतीति।

**उदाहरणम्-** तन्नेमिमृभवौ यथा।

**सूत्रार्थसमन्वयः-** तन्नेमिमृभवौ यथा -- इति उदाहरणे अनुष्टुप्- छन्दः वर्तते। किञ्च अत्र यथा इति शब्दः पादस्य अन्ते अस्ति। अतः प्रकृतसूत्रेण तदन्त्यस्य आकारस्य अनुदात्तत्वं विधीयते।

## ११.१९) प्रकारादिद्विरुक्तौ परस्यान्त उदात्तः।

**सूत्रार्थः-** द्विरुक्तौ प्रकारादिशब्दानां परस्य अन्तः उदात्तो भवति।

**सूत्रावतरणम्-** प्रकारादि शब्दानां द्विरुक्तौ तत्र द्वितीयस्य प्रकारादिशब्दस्य अन्तस्य स्वरस्य उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्यख्या-** संज्ञा-परिभाषा-विधि-नियमातिदेशाधिकारात्मकेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन उदात्तस्वरः विधीयते। अस्मिन् सूत्रे पञ्च पदानि सन्ति। तत्र प्रकारादि इति प्रथमैकवचनान्तं पदम्, द्विरुक्तौ इति सप्तम्येकवचनान्तं पदम्, परस्य इति षष्ठ्येकवचनान्तं पदम्, अन्तः इति प्रथमैकवचनान्तं पदम्, उदात्तः इत्यपि च प्रथमैकवचनान्तं पदम्। ततश्च सूत्रस्यास्य पदान्वयः भवति -- प्रकारादिद्विरुक्तौ परस्य अन्तः उदात्तः इति। एवञ्च अत्र सूत्रार्थो लभ्यते -- प्रकारादिशब्दानां द्विरुक्तौ सत्यां तत्र द्वितीयस्य प्रकारादेः अन्तस्य अचः उदात्तस्वरः भवति इति।

**उदाहरणम्-** पटुपटुः।

**सूत्रार्थसमन्वयः-** अयं पटु- शब्दः प्रकारादिगणे पठितः। अतः पटुपटुः इति उदाहरणे प्रकारादिगणे पठितस्य पटु शब्दस्य प्रकारे गुणवचनस्य इति सूत्रेण द्वित्वे पटु पटु इति स्थिते प्रकृतसूत्रेण द्वितीयस्य पटुशब्दस्य अन्त्यस्य उकारस्य उदात्तत्वं भवति। ततश्च विभक्तिकार्ये पटुपटुः इति रूपं सिध्यति।

**विशेषः-** इदं च प्रकृतसूत्रविहितं कार्यं कर्मधारयवदुत्तरेषु इति कर्मधारयवद्भावादेव सिध्यति, तेन इदं सूत्रं व्यर्थम् इति शङ्का अत्र न कर्तव्या। यतो हि प्रकृतं सूत्रमिदं पाणिनीयसूत्रात् पूर्वमेव प्रवर्तमानम्। अतः अस्य पाणिनीयात्पूर्वप्रवृत्तत्वेन नास्ति कोऽपि दोषः। अत एव उच्यते आयार्यैः यत् इदं सूत्रं कर्मधारयवद्भावसिद्धस्य अन्तोदात्तत्वस्य अनुवादकम् इति।

## ११.२०) शेषं सर्वमनुदात्तम्।

**सूत्रार्थः-** शेषं नित्यादिद्विरुक्तस्य परमित्यर्थः।

**सूत्रावतरणम्-** प्रकारादिशब्दानां द्वित्वाद् अन्यस्मिन् द्वित्वे सर्वस्य अनुदात्तस्वरविधानार्थं सूत्रमिदं प्रणीतमाचार्येण।



**सूत्रव्याख्या-** षड्विधेषु पाणिनीयसूत्रेषु इदं विधायकम्। अनेन अनुदात्तस्वरः विधीयते। शेषं सर्वम् अनुदात्तम् इति सूत्रगतपदच्छेदः। शेषम् इति प्रथमैकवचनान्तं पदम्, सर्वम्, अनुदात्तं इति पदद्वयमपि प्रथमैकवचनान्तम्। उक्तादन्यः शेषः। ननु अत्र कः शेषः ? इति जिज्ञासायामुच्यते शेषं प्रकारादिद्वित्वाद् अन्यत् इति। अर्थात् प्रकारादिद्विरुक्तौ परस्यान्त उदात्तः इति सूत्रे प्रकारादिशब्दानां यद् द्वित्वमुक्तं तस्मात् अन्यद् द्वित्वम् अत्र शेषपदवाच्यम्। एवञ्च अत्र पदान्वयः इत्थं- शेषं सर्वम् अनुदात्तम् इति। ततश्च अयं सूत्रार्थः अत्र लभ्यते- प्रकारादि- शब्दानां द्वित्वाद् अन्यस्मिन् द्वित्वे परस्य सर्वस्य अनुदात्तः स्यात् इति।

**उदाहरणम्-** प्रप्रा॒यम्।

**सूत्रार्थसमन्वयः-** प्रप्रायम् इत्युदाहरणे प्र इति शब्दस्य द्वित्वं भवति। अपि च प्र इति शब्दः प्रकारादिभिन्नः। अतः तस्य शब्दस्य द्वित्वे प्र प्र इति स्थिते परस्य प्र इति शब्दस्य अकारस्य प्रकृतसूत्रेण अनुदात्तत्वं विधीयते।



## पाठगतप्रश्नाः-२

९. शकटिशकट्योरक्षरमक्षरं पर्यायेण इति सूत्रेण कः स्वरः विधीयते ?

१०. ब्राह्मणनामधेयस्य गोष्ठजशब्दस्य अक्षरमक्षरं पर्यायेण उदात्तत्वं केन सूत्रेण ?

११. निपाताः आद्युदात्ताः केन सूत्रेण ?

१२. कम् उपसर्गं वर्जयित्वा अन्येषाम् उपसर्गाणाम् आद्युदात्तत्वम् ?

१३. एवादयः अन्तोदात्ताः केन सूत्रेण ?

१४. चादिगणः आकृतिगणः न वा ?

१५. द्विरुक्तौ प्रकारादिशब्दानां परस्य अन्तः उदात्तः केन सूत्रेण भवति ?



## पाठसारः

प्रातिपदिकम् फिट् इत्युच्यते प्राचीनैः आचार्यैः। फिट् इति संज्ञावाचकं पदम्। एषा च संज्ञा महर्षिपाणिनेः पूर्वकालादेव प्रवर्तमाना अस्ति। एतानि सूत्राणि फिषम् अर्थात् प्रातिपदिकम् आश्रित्यैव प्रवर्तन्ते। फिट्-स्वराणां विषये पाठोऽयं वर्तते। छन्दसि च, घृतादीनां च, जेष्ठकनिष्ठयोर्वयसि, तृणधान्यानां च द्व्यषाम् इत्यादिशास्त्रेण फिट्-स्वराः प्रतिपाद्यन्ते। अस्मिन् पाठे फिट्-स्वरविधायकानि कानिचित् विशेषसूत्राणि आलोच्यन्ते। यतो हि पाठवृद्धिभयात् प्रसिद्धानि एव सूत्राणि अस्माभिः स्वीकृतानि सन्ति। यथा - फिषोन्तः उदात्तः इति सूत्रेण फिषः प्रातिपदिकस्य वा अन्त्यस्य उदात्तः विधीयते। उच्चैः इति पदं पाणिनीयैः सूत्रैः न प्रातिपदिकसंज्ञकम्, अपि तु पूर्वाचार्यैः प्रातिपदिकम् इत्युच्यते। अतः तस्य फिषः



प्रातिपदिकस्य वा उच्चैः इत्यस्य अन्त्यः ऐकारः प्रकृतसूत्रेण उदात्तः भवति। अपरञ्च छन्दसि च इति सूत्रेण दक्षिणशब्दस्य आदिः अन्तः च उदात्तः भवति। दक्षिणः इति वैदिकप्रयोगः। अतः प्रकृतसूत्रेण तस्य दक्षिणशब्दस्य अन्तस्य अकारस्य आदेः अकारस्य च उदात्तत्वं विधीयते। एवञ्च घृतादीनां च इति शास्त्रेण घृतादीनां शब्दानाम् अन्त्यस्वरः उदात्तः विधीयते। एवञ्च ज्येष्ठकनिष्ठयोर्वयसि इति सूत्रेण वयसि अर्थे ज्येष्ठकनिष्ठयोः शब्दयोः अन्त्यस्य स्वरस्य उदात्तत्वं भवति। पुनश्च तृणधान्यानां च द्व्यषाम् इति सूत्रेण द्व्यचां तृणधान्यवाचकानां शब्दानां च आदेः स्वरस्य उदात्तत्वं विधीयते। कुश इति शब्दे अज्द्वयं वर्तते। किञ्च अयं कुशशब्दः तृणवाची। तस्मात् अनेन प्रकृतसूत्रेण तस्य कुश-शब्दस्य आदेः स्वरस्य उकारस्य उदात्तत्वं विधीयते। एवं काशाः इति शब्दे अज्द्वयं वर्तते। किञ्च अयं काश-शब्दः धान्यवाची। तस्मात् अनेन प्रकृतसूत्रेण तस्य काश-शब्दस्य आदेः स्वरस्य आकारस्य उदात्तत्वं विधीयते। एवमेव अन्यानि फिट्-स्वरविधायकानि अपि वर्णितानि। पाठे अस्मिन् तेषां सूत्राणां व्याख्यानम्, उदाहरणम्, उदाहरणसङ्गतिश्च प्रदर्श्यते।

##  पाठान्तप्रश्नाः

१. फिषोऽन्त उदात्तः इति सूत्रं व्याख्यात।
२. छन्दसि च इति सूत्रं व्याख्यात।
३. ज्येष्ठकनिष्ठयोर्वयसि इति सूत्रं व्याख्यात।
४. तृणधान्यानां च द्व्यषाम् इति सूत्रं व्याख्यात।
५. गोष्ठजस्य ब्राह्मणनामधेयस्य इति सूत्रं व्याख्यात।
६. एवादीनामन्तः इति सूत्रं व्याख्यात।
७. चादयोऽनुदात्ताः इति सूत्रं व्याख्यात।

##  पाठगतप्रश्नानामुत्तराणि

**उत्तराणि-1**

१. प्रातिपदिकम्।
२. छन्दसि च।
३. घृतादीनां शब्दानाम् अन्त्यस्वरः उदात्तः भवति।
४. ज्येष्ठकनिष्ठयोर्वयसि इति सूत्रेण।
५. आदिः इति पदम्।
६. तृणवाचकत्वाभावात् धान्यवाचकत्वाभावाच्च।
७. अक्षस्यादेवनस्य।



८. सुगन्धितेजनस्य ते वा इति सूत्रेण।

**उत्तराणि-२**

९. उदात्तः स्वरः।

१०. गोष्ठजस्य ब्राह्मणनामधेयस्य इति सूत्रेण।

११. निपाता आद्युदात्ताः इति सूत्रेण।

१२. अभि- इत्युपसर्गं वर्जयित्वा।

१३. एवादीनामन्तः।

१४. आम्, आकृतिगणः।

१५. प्रकारादिद्विरुक्तौ परस्यान्त उदात्तः इति सूत्रेण।

## ।।इति एकादशः पाठः।।



# १२

# प्रत्ययस्वराः

## प्रस्तावना-

अस्मिन् प्रत्ययस्वराख्ये प्रकरणे प्रत्ययानां स्वरविषये संक्षेपेण किञ्चित् विवरणं कृतम्। वेदे उदात्तस्वरः, अनुदात्तस्वरः, स्वरितस्वरश्च इति सामान्यतः त्रयः स्वराः विद्यन्ते। उदात्त-अनुदात्त-स्वरितसंज्ञाः अष्टाध्याय्यां विहिताः। तत्र उदात्तसंज्ञाविधायकं पाणिनीयसूत्रं हि उच्चैरुदात्तः इति। अनुदात्तसंज्ञाविधायकं सूत्रं नीचैरनुदात्तः इति। स्वरितसंज्ञाविधायकं सूत्रं हि समाहारः स्वरितः इति। तत्र अनुदात्तस्वरस्य बोधनार्थं ◌॒ इति सङ्केतः स्वीक्रियते। स्वरितस्वरस्य बोधनार्थं ◌॑ इति सङ्केतः स्वीक्रियते। किन्तु उदात्तस्वरस्य बोधनार्थम् एतादृशः कश्चन विशेषः प्रयत्नः न क्रियते। प्रकृतपाठे अस्मिन् उदात्तस्वरस्य अनुदात्तस्वरस्य च आलोचनं क्रियते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान्-

- प्रत्ययानां स्वरविधानविषये ज्ञातुं शक्नुयात्।
- अग्निशब्दस्य नकारोत्तरस्य इकारस्य कः स्वरः इति विषये ज्ञातुं शक्नुयात्।
- पित्प्रत्ययानां कः स्वरः भवति इति ज्ञातुं शक्नुयात्।
- तद्धितप्रत्ययानां कः स्वरः भवति इति ज्ञातुं शक्नुयात्।
- सूत्राणाम् अर्थनिर्णयं कर्तुं समर्थो भवेत्।
- सूत्राणां व्याख्यानं कर्तुं स्वयमपि योग्यो भवेत्।
- अनुवृत्त्यादीनां ज्ञानं भवितुं शक्नुयात्।

## १२.१) आद्युदात्तश्च (३.१.३)

**सूत्रार्थः** - प्रत्ययः आद्युदात्त एव स्यात्।

**सूत्रावतरणम्**- प्रत्ययस्य आद्युदात्तत्वविधानार्थमिदं सूत्रं प्रणीतम्।

**सूत्रव्याख्या**- संज्ञा- परिभाषा- विधि- नियमातिदेशाधिकारात्मकेषु षड्विधेषु पाणिनीयसूत्रेषु इदम् अधिकारसूत्रम्। अत्र पदद्वयं विराजते। आद्युदात्तः च इति सूत्रगतपदच्छेदः। आद्युदात्तः इति प्रथमान्तं पदम्, च इति अव्ययपदम्। प्रत्ययः इति प्रथमैकवचनान्तं पदम् अत्र अधिक्रियते। ततश्च सूत्रार्थो भवति - प्रत्ययः आद्युदात्तः एव भवति इति।

**उदाहरणम्**-अग्निः। क॒र्तव्य॑म् इति।



**सूत्रार्थसमन्वयः-** गत्यर्थकस्य अगिधातोः इकारः उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञकः, अतः एष धातुः इदित्। अत एव धातोरस्य इदित्त्वात् अङ्गेर्नलोपश्च इति सूत्रेण अगिधातोः परं प्रकृतसूत्रेण निप्रत्यये अग् नि इति स्थिते सर्वसंयोगे अग्नि इति स्थिते शब्दस्वरूपस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङ्सोसांङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिषु स्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य उकारस्य उपदेशेऽजनुनासिकः इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण इत्संज्ञकस्य उकारस्य लोपे अग्नि स् इति स्थिते संयोगे निष्पन्नस्य अग्निस् इति शब्दस्वरूपस्य सुबन्तत्वात् तदन्तस्य सकारस्य स्थाने ससजुषोः रुः इति आदेशे रोः उकारस्य उपदेशेऽजनुनासिक इत् इति इत्संज्ञायां लोपे च कृते अग्नि र् इति स्थिते रेफोच्चारणात् परस्य वर्णाभावस्य विरामोऽवसानम् इति सूत्रेण अवसानसंज्ञायां तत्परकत्वात् पूर्वस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इति सूत्रेण रेफस्य स्थाने विसर्गे अग्निः इति सुबन्तं रूपं सिद्ध्यति। अग्निशब्दः निप्रत्ययान्तः। अत एव प्रकृतसूत्रेण निप्रत्ययस्य इकारस्य उदात्तत्वं विधीयते।

**विशेषः-** आद्युदात्तः स एव भवति यः प्रत्ययसंज्ञः भवति, तन्नाम यः यः शब्दः प्रत्ययाधिकारे पठितः, तस्य तस्य शब्दस्य आदिः स्वरः उदात्तः भवति।

## १२.२) अनुदात्तौ सुप्पितौ(३-१-४)

**सूत्रार्थः-** सुप्पितौ प्रत्ययौ अनुदात्तौ भवतः।

**सूत्रावतरणम्-** सुप्प्रत्ययानां पित्प्रत्ययानां च स्वराणाम् अनुदात्तत्वविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** संज्ञा- परिभाषा- विधि- नियमातिदेशाधिकारात्मकेषु षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सुप्प्रत्ययानां पित्प्रत्ययानां च स्वराणाम् अनुदात्तत्वं विधीयते। अस्मिन् सूत्रे द्वे पदे विद्येते। अनुदात्तौ, सुप्पितौ इति पदगतच्छेदः ज्ञायते। यमुद्दिश्य यत् किञ्चित् कार्यं विधीयते तत् कार्यम् उद्देश्यम् इति कथ्यते, अतः सुप्पितौ इति प्रथमाद्विवचनान्तम् उद्देश्यबोधकं पदम्। यत् विधीयते तत् विधेयम् इत्युच्यते, अतः अनुदात्तौ इति च विधेयबोधकं प्रथमाद्विवचनान्तं पदम्। अत्र सुप्प्रत्ययमुद्दिश्य पित्प्रत्ययञ्च उद्दिश्य अनुदात्तत्वविधिः भवति। अत्र सूत्रस्यास्य पदान्वयः च इत्थम्- सुप्पितौ अनुदात्तौ इति। ततश्च अयं सूत्रार्थः अत्र लभ्यते- सुप्प्रत्ययः पित्प्रत्ययः च अनुदात्तौ भवतः इति।

**उदाहरणम्-** यज्ञस्य। न यो युच्छति।

**सूत्रार्थसमन्वयः-** रूढिपक्षे यज्ञशब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इत्यनेन सूत्रेण तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङ्सोसांङ्योस्सुप् इति सूत्रेण एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु षष्ठ्येकवचनविवक्षायां ङस्प्रत्यये यज्ञ ङस् इति स्थिते ङसः ङकारस्य लशक्वतद्धिते इति सूत्रेण इत्संज्ञायाम् तस्य लोपः इति सूत्रेण च इत्संज्ञकस्य ङकारस्य लोपे कृते यज्ञ अस् इति स्थिते अदन्तात् प्रातिपदिकात् परस्य असः स्थाने टाङसिङसामिनात्स्याः इति सूत्रेण स्य



इत्यादेशे यज्ञ स्य इति स्थिते सर्वसंयोगे यज्ञस्य इति रूपं सिद्ध्यति। यज्ञस्य इत्यत्र यः ङसः स्थाने विहितः स्यादेशः, तस्मिन् स्थानिवद्भावेन सुप्त्वधर्मस्यारोपः क्रियते। तेन स्यप्रत्यये सत्यपि सुप्त्वं सिद्ध्यति। ततश्च प्रकृतसूत्रेण स्यप्रत्ययस्य यकारोत्तरस्य अकारस्य अनुदात्तत्वं सिद्ध्यति।

इदानीं द्वितीयोदाहरणस्य विषये आलोचना विधीयते। द्वितीयमुदाहरणमस्ति पित्प्रत्ययस्य विषये। अस्योदाहरणं हि युच्छति इति अत्र युच्छ प्रमादे इति धातोः वर्तमाने लट् इति लटि लटः अकारटकारयोः इत्संज्ञायां लोपे च कृते युच्छ् ल् इति स्थिते लकारस्य स्थाने तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथान्ध्वमिड्वहिमहिङ् इति सूत्रेण अष्टादशसु तिप्प्रत्ययेषु प्राप्तेषु प्रथमपुरुषैकवचनविवक्षायां तिप्प्रत्यये युच्छ् तिप् इति स्थिते पकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायाम् इत्संज्ञकस्य पकारस्य तस्य लोपः इति सूत्रेण लोपे कर्तरि शप् इति सूत्रेण धातोः शप्प्रत्यये शप्प्रत्ययस्य आदेः शकारस्य लशक्वतद्धिते इति सूत्रेण इत्संज्ञायां पकारस्य च हलन्त्यम् इति सूत्रेण इत्संज्ञायां ततश्च उभयोः इत्संज्ञकयोः लकारपकारयोः तस्य लोपः इति लोपे कृते युच्छ् अ ति इति स्थिते सर्वसंयोगे युच्छति इति रूपं सिद्ध्यति। तिप्प्रत्ययस्य पित्त्वात् प्रकृतसूत्रेण समुदायस्य अन्तस्य स्वरस्य उदात्तत्वं सिध्यति। अर्थात् युच्छति इत्यत्र अन्तिमस्य अचः इकारस्य उदात्तत्वं सिद्ध्यति।

**विशेषः-** एतत् सूत्रं पूर्वस्य आद्युदात्तश्च इति सूत्रस्य अपवादभूतम् अस्ति। तेन च एतत् सूत्रं यत्र प्रवर्तते तत्र आद्युदात्तश्च इति सामान्यसूत्रं न प्रवर्तते।

## १२.३) चितः- (६.१.१६३)

**सूत्रार्थः-** चितः अन्तः उदात्तः स्यात्।

**सूत्रावतरणम्-** चित्प्रत्ययानाम् अन्तस्य स्वरस्य उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** संज्ञा- परिभाषा- विधि- नियमातिदेशाधिकारात्मकेषु षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन चित्प्रत्ययान्तस्य प्रकृतिप्रत्ययसमुदास्य अन्त्यस्य स्वरस्य उदात्तत्वं विधीयते। चितः इत्यत्र षष्ठ्यर्थे प्रथमैकवचनम्। कर्षात्वतो घञः अन्त उदात्तः इति सूत्रात् अन्तः इति उदात्तः चेति प्रथमैकवचनान्तं पदद्वयम् अत्र अनुवर्तते। इदानीम् अत्र चितः सप्रकृतेर्बह्वकजर्थम् इति वार्तिकेन चित्प्रत्ययवतः समुदायस्य इत्यर्थः लभ्यते। तथाहि चकारः इत् यस्य स चित् इति बहुव्रीहिसमासः। ततः चित् अस्य अस्ति इति चित्-प्रातिपदिकात् मत्वर्थीये अच्प्रत्यये चितः इति रूपम्। अतः पदान्वयः इत्थं सम्भवति- चितः अन्तः उदात्तः इति। ततश्चायम् अत्र सूत्रार्थः- चित्प्रत्ययवतः प्रकृतिप्रत्ययसमुदायस्य अन्तः स्वरः उदात्तः स्यात् इति।

**उदाहरणम्-** नभ॑न्तामन्य॒के स॑मे।

**सूत्रार्थसमन्वयः-** नभ॑न्तामन्य॒के स॑मे इत्यत्र अन्यके इत्यत्र अकच्प्रत्ययः विहितः। स च अकच्प्रत्ययः चित् अस्ति। अतः अकज्रूपचित्प्रत्ययान्तत्वात् अन्यके इति प्रकृतिप्रत्ययवतः समुदायस्य अन्तः स्वरः एकारः प्रकृतसूत्रेण उदात्तो भवति।



## १२.४) तद्धितस्य (६.१.१६४)

**सूत्रार्थः-** चितः तद्धितस्य अन्तः उदात्तः स्यात्।

**सूत्रावतरणम्-** तद्धितचित्प्रत्ययान्तस्य प्रकृतिप्रत्ययसमुदायस्य अन्तिमस्वरस्य उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या-** संज्ञा- परिभाषा- विधि- नियमातिदेशाधिकारात्मकेषु षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन तद्धितचित्प्रत्ययान्तस्य प्रकृतिप्रत्ययसमुदायस्य अन्तिमस्वरस्य उदात्तत्वं विधीयते। अस्मिन् सूत्रे एकमेव तद्धितस्य इति पदं वर्तते। तच्च तद्धितस्य इति षष्ठ्येकवचनान्तं पदम्। कर्षात्वतो घञः अन्त उदात्तः इति सूत्रात् अन्तः इति उदात्तः चेति प्रथमैकवचनान्तं पदद्वयम् अत्र अनुवर्तते। चितः इति पूर्वसूत्रात् चितः इति षष्ठ्यर्थे प्रथमैकवचनान्तं पदमत्र अनुवर्तते। अत्र चितः इति पदस्य अनुवर्तनात् चित्प्रत्ययवतः प्रकृतिप्रत्ययसमुदायस्य इत्यर्थो लभ्यते। ततश्च अत्र पदान्वयः इत्थं भवति- चितः तद्धितस्य प्रकृतिप्रत्ययसमुदायस्य अन्तः उदात्तः इति। तेन अत्रायं सूत्रार्थः भवति - तद्धितचित्प्रत्ययान्तस्य प्रकृतिप्रत्ययसमुदायस्य अन्तिमस्वरस्य उदात्तत्वं स्यात् इति।

**उदाहरणम्-** कौञ्जायनाः।

**सूत्रार्थसमन्वयः-** कौञ्जायनाः इत्यत्र च्फञ् इति तद्धितप्रत्ययः विहितः। तथाहि कुञ्जशब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञायां ततः च्फञ् इति तद्धितप्रत्यये कुञ्ज च्फञ् इति स्थिते च्फञ्-प्रत्ययाद्यस्य चकारस्य चुटू इति सूत्रेण इत्संज्ञायाम्, ञकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण तयोः इत्संज्ञकयोः चकारञकारयोः लोपे कुञ्ज फ इति स्थिते फकारस्य स्थाने आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् इति सूत्रेण आयन् इत्यादेशे कुञ्ज आयन् अ इति स्थिते च्फञ्-प्रत्ययस्य ञित्त्वात् तद्धितेष्वचामादेः इति सूत्रेण कुञ्जशब्दस्य आदेः उकारस्य वृद्धौ औकारे भसंज्ञकस्य कौञ्जायनशब्दस्य अन्त्यस्य अकारस्य च यस्येति च इति सूत्रेण लोपे सर्वसंयोगे निष्पन्नस्य कौञ्जायन इति शब्दस्वरूपस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण तस्य प्रातिपदिकसंज्ञायां ततः ङ्याप्प्रातिपदिकात्, प्रत्ययः परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसांङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिषु स्वादिप्रत्ययेषु प्राप्तेषु प्रथमाबहुवचनविवक्षायां जस्प्रत्यये जस्प्रत्ययादेः जकारस्य चुटू इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण च तस्य इत्संज्ञकस्य जकारस्य लोपे कौञ्जायन अस् इति स्थिते संयोगे निष्पन्नस्य कौञ्जायनास् इति शब्दस्वरूपस्य सुबन्तत्वात् तदन्तस्य सकारस्य स्थाने ससजुषोः रुः इति आदेशे रोः उकारस्य उपदेशेऽजनुनासिक इत् इति इत्संज्ञायां लोपे च कृते कौञ्जायनार् इति स्थिते रेफोच्चारणात् परस्य वर्णाभावस्य विरामोऽवसानम् इति सूत्रेण अवसानसंज्ञायां तत्परकत्वात् पूर्वस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इति सूत्रेण रेफस्य स्थाने विसर्गे कौञ्जायनाः इति सुबन्तं रूपं सिद्ध्यति। अत्र च्फञ् इति चित् तद्धितप्रत्ययश्च वर्तते। अतः तद्धितान्तस्य कौञ्जायन इति शब्दस्य अन्त्यस्य स्वरस्य अकारस्य उदात्तत्वं विधीयते।



## १२.५) कितः (६.१.१६६)

**सूत्रार्थः-** कितस्तद्धितस्यान्त उदात्तः।

**सूत्रावतरणरम्-** तद्धितकित्प्रत्ययान्तस्य शब्दस्य अन्तस्य स्वरस्य उदात्तविधानार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या-** संज्ञा-परिभाषा-विधि-नियमातिदेशाधिकारात्मकेषु षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण तद्धितकित्प्रत्ययान्तस्य शब्दस्य अन्त्यस्य स्वरस्य उदात्तत्वं विधीयते। कर्षात्वतो घञोऽन्त उदात्तः इति सूत्रात् अन्तः इति उदात्तः चेति प्रथमैकवचनान्तं पदद्वयम् अत्र अनुवर्तते। पूर्वसूत्रात् तद्धितस्य इति षष्ठ्येकवचनान्तं पदम् अनुवर्तते। ततश्च अत्र पदान्वयः इत्थं भवति- कितः तद्धितस्य अन्तः उदात्तः इति। तद्धितस्य इति पदस्य विशेष्यरूपेण प्रत्ययस्य इति पदमत्र अनुवर्तते। तेन अत्र सूत्रार्थः इत्थं भवति- तद्धितकित्प्रत्ययान्तस्य शब्दस्य अन्तः उदात्तो भवति इति।

**उदाहरणम्-** यदाग्नेयः।

**सूत्रार्थसमन्वयः-** अस्मिन् उदाहरणे आग्नेयः इति पदे ढक् इति तद्धितप्रत्ययः विद्यते। तथाहि अग्निशब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञायां ततः ढक्- इति तद्धितप्रत्यये अग्नि ढक् इति स्थिते ढक्- प्रत्ययान्तस्य ककारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण इत्संज्ञकस्य ककारस्य लोपे अग्नि ढ इति स्थिते ढकारस्य स्थाने आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् इति सूत्रेण एय् इत्यादेशे अग्नि एय् अ इति स्थिते ढक्प्रत्ययस्य कित्त्वात् किति च इति सूत्रेण अग्निशब्दस्य आदेः अकारस्य वृद्धौ आकारे भसंज्ञकस्य आग्नि इति शब्दस्य अन्त्यस्य इकारस्य यस्येति च इति सूत्रेण लोपे वर्णसंयोगे निष्पन्नस्य आग्नेय इति शब्दस्वरूपस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण तस्य प्रातिपदिकसंज्ञायां ततः ङ्याप्प्रातिपदिकात्, प्रत्ययः परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसांङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिषु स्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य उकारस्य उपदेशेऽजनुनासिकः इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण इत्संज्ञकस्य उकारस्य लोपे आग्नेय स् इति स्थिते संयोगे निष्पन्नस्य आग्नेयस् इति शब्दस्वरूपस्य सुबन्तत्वात् तदन्तस्य सकारस्य स्थाने ससजुषोः रुः इति आदेशे रोः उकारस्य उपदेशेऽजनुनासिक इत् इति इत्संज्ञायां लोपे च कृते आग्नेयर् इति स्थिते रेफोच्चारणात् परस्य वर्णाभावस्य विरामोऽवसानम् इति सूत्रेण अवसानसंज्ञायां तत्परकत्वात् पूर्वस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इति सूत्रेण रेफस्य स्थाने विसर्गे आग्नेयः इति सुबन्तं रूपं सिद्ध्यति।

## १२.६) तिसृभ्यो जसः (६.१.१६६)

**सूत्रार्थः-** त्रिसृशब्दात् परस्य जसः अन्तः उदात्तः स्यात्।

**सूत्रावतरणम्-** तिसृशब्दात् परस्य जसः अन्त्यस्वरस्य उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतम्।



**सूत्राव्याख्या-** षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन उदात्तस्वरः विधीयते। अत्र पदद्वयं वर्तते। तिसृभ्यः इति पञ्चमीबहुवचनान्तं पदम्, जसः इति षष्ठ्येकवचनान्तं पदम्। कर्षात्वतो घञोऽन्त उदात्तः इति सूत्रात् अन्तः, उदात्तः चेति प्रथमैकवचनान्तं पदद्वयम् अत्र अनुवर्तते। तिसृभ्य इत्यत्र पञ्चमीविधानात् तस्मादित्युत्तस्य इति परिभाषया अत्र परस्य इति पदमत्र उपतिष्ठते। ततश्च अत्र पदान्वयः भवति- तिसृभ्यः परस्य जसः अन्तः उदात्तः स्यात् इति। तिसृशब्दः नित्यं बहुवचनान्तः। एवञ्च अत्र सूत्रार्थो भवति- तिसृशब्दात् परस्य जसः अन्तः स्वरः उदात्तः स्यात् इति।

**उदाहरणम्-** ति॒स्रो द्याव॑ः स॒वि॒तुः।

**सूत्रार्थसमन्वयः-** तिसृशब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञायां ततः ङ्याप्प्रातिपदिकात्, प्रत्ययः परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसांङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिषु स्वादिप्रत्ययेषु प्राप्तेषु प्रथमाबहुवचनविवक्षायां जस्प्रत्यये जस्प्रत्ययादेः जकारस्य चुटू इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण च तस्य इत्संज्ञकस्य जकारस्य लोपे तिसृ अस् इति स्थिते अचि र ऋतः इति सूत्रेण अच्परकत्वात् तिसृशब्दस्य ऋकास्य स्थाने रेफादेशे तिस्रस् इति स्थिते तस्य शब्दस्य सुबन्तत्वात् तदन्तस्य सकारस्य स्थाने ससजुषोः रुः इति आदेशे रोः उकारस्य उपदेशेऽजनुनासिक इत् इति इत्संज्ञायां लोपे च कृते तिस्रर् इति स्थिते रेफोच्चारणात् परस्य वर्णाभावस्य विरामोऽवसानम् इति सूत्रेण अवसानसंज्ञायां तत्परकत्वात् पूर्वस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इति सूत्रेण रेफस्य स्थाने विसर्गे तिस्रः इति सुबन्तं रूपं सिद्ध्यति। अत एव तिसृभ्यः इत्यत्र प्रकृतसूत्रेण अन्तिमस्य अकारस्य उदात्तत्वं विधीयते



## पाठगतप्रश्नाः-१

१. अग्निशब्दात् निप्रत्ययस्य विधानं केन भवति?

२. आद्युदात्तश्च इति सूत्रेण किं विधीयते?

३. अग्निशब्दे नकारात् परः इकारः उदात्तः अनुदात्तो वा?

४. अग्निः इत्यत्र कः धातुः?

५. सुप्प्रत्ययस्य पित्प्रत्ययस्य च अनुदात्तत्वं केन विधीयते?

६. चितः अन्तः उदात्तः केन सूत्रेण भवति?

७. तद्धितस्य इति कीदृशं सूत्रम्?

८. कितस्तद्धितस्यान्त उदात्तः केन विहितः?

९. त्रिसृभ्यो जसः अन्तः उदात्तः केन विहितः?



## १२.७) सावेकाचस्तृतीयादिर्विभक्तिः (६.१.१८६)

**सूत्रार्थः-** सौ परे सति पूर्वस्मात् एकाचः शब्दात् परस्य तृतीयादिविभक्तेः स्वरः उदात्तः स्यात्।

**सूत्रावतरणम्-** सौ परे सति पूर्वस्मात् एकाचः शब्दात् परस्य तृतीयादिविभक्तेः उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन उदात्तस्वरः विधीयते। अत्र चत्वारि पदानि सन्ति। सौ एकाचः तृतीयादिः विभक्तिः इति च सूत्रगतपदच्छेदः। यद्यपि सु इत्यस्य सप्तमीबहुवचने सुषु इति एव रूपं स्यात्, तथापि व्याख्यनात् सौ इति पदमत्र सप्तमीबहुवचनान्तं बोध्यम्। एकाचः इति पञ्चम्येकवचनान्तं पदम्, तृतीयादिः, विभक्तिः चेति पदद्वयम् अत्र प्रथमैकवचनान्तम्। कर्षात्वतो घञोऽन्त उदात्तः इति सूत्रात् उदात्तः इति प्रथमैकवचनान्तं पदम् अत्र अनुवर्तते। सौ इत्यत्र सप्तमीविधानात् तस्मिन्निति निर्दिष्टे पूर्वस्य इति परिभाषया अत्र सौ इत्यस्य अव्यवहितपूर्वस्य इत्यर्थः लभ्यते। एकाचः इति पदस्य विशेष्यरूपेण शब्दस्य इति षष्ठ्येकवचनान्तं पदमत्र योज्यते। प्रकृतसूत्रेण विहितः उदात्तत्वधर्मश्च तृतीयादिविभक्तेः अचः भवति। तेन अत्रायं पदान्वयः भवति- सौ परे सति पूर्वस्मात् एकाचः शब्दात् परस्य तृतीयादिविभक्तेः स्वरः उदात्तः स्यात् इति।

**उदाहरणम्-** वाचा विरूपः।

**सूत्रार्थसमन्वयः-** वाचा विरूपः इति उदारहरणे विरूपः इति सुप्रत्ययान्तं पदम्। अतः तादृशसुपरकत्वात् पूर्वस्मात् एकाचः वाच्- शब्दात् परस्य टारूपस्य तृतीयाविभक्तेः स्वरस्य आकारस्य प्रकृतसूत्रेण उदात्तत्वं विधीयते।

## १२.८) अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे (६.१.१६९)

**सूत्रार्थः-** नित्याधिकारविहितसमासादन्यत्र यदुत्तरपदमन्तोदात्तमेकाच् ततः परा तृतीयादिविभक्तिरुदात्ता वा स्यात्।

**सूत्रावतरणम्-** अनित्यसमासे अन्तोदात्तात् उत्तरपदात् परस्य तृतीयादिविभक्तेः उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** संज्ञा- परिभाषा- विधि- नियमातिदेशाधिकारात्मकेषु षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन उदात्तस्वरः विधीयते। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। अन्तोदात्तात् उत्तरपदात् अन्यतरस्याम् अनित्यसमासे इति सूत्रगतपदच्छेदः। अन्तोदात्तात्, उत्तरपदात् चेति पदद्वयं पञ्चम्येकवचनान्तं पदद्वयम्, अन्यतरस्याम् इति सप्तमीबहुवचनान्तं पदम्, अनित्यसमासे इति च सप्तम्येकवचनान्तं पदम्। सावेकाचस्तृतीयादिर्विभक्तिः इति सूत्रात् अत्र एकाचः इति पञ्चम्येकवचनान्तं पदम्, तृतीयादिः विभक्तिः चेति प्रथमैकवचनान्तं पदद्वयमत्र अनुवर्तते। कर्षात्वतो घञोऽन्त उदात्तः इति सूत्रात् उदात्तः चेति प्रथमैकवचनान्तं पदम् अत्र अनुवर्तते। एकाचः इति अनुवर्तमानं पदमत्र उत्तरपदात्



इत्यस्य विशेषणम्, अन्तोदात्तात् इत्यपि उत्तरपदात् इत्यस्य विशेषणम्। एवञ्च अत्र पदान्वयः इत्थं भवति- अनित्यसमासे अन्तोदात्तात् एकाचः उत्तरपदात् तृतीयादिः विभक्तिः उदात्तः अन्यतरस्याम् इति। अत्र विधीयमानः उदात्तत्वधर्मः तृतीयादिविभक्तेः स्वरस्य भवति। एकाचः इति अनुवर्तमानस्य पदस्य विशेष्यरूपेण शब्दस्य इति षष्ठ्येकवचनान्तं पदमत्र ग्राह्यम्। तेन अयं सूत्रार्थः अत्र लभ्यते- अनित्यसमासे अन्तोदात्तात् उत्तरपदात् एकाचः शब्दात् परस्य तृतीयादिविभक्तेः उदात्तः स्यात् इति। अत्र अन्यतरस्याम् इति कथनात् प्रकृतसूत्रविहितं कार्यं विकल्पेन भवति।

**उदाहरणम्-** परमवा͟चा।

**सूत्रार्थसमन्वयः-** परमा च असौ वाक् चेति इति विग्रहे कर्मधारयसमासे निष्पन्नस्य परमावाच् इति शब्दस्य समासत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां ततः स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङस्ोसांङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिषु स्वादिप्रत्ययेषु प्राप्तेषु तृतीयैकवचनविवक्षायां टाप्रत्यये टाप्रत्ययाद्यस्य टकारस्य चुटू इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण तस्य इत्संज्ञकस्य टकारस्य लोपे सर्वसंयोगे परमवाचा इति रूपं सिध्यति। अत्र परमा इति पूर्वपदम्, वाक् इति च उत्तरपदम्। पूर्वपदं परमा इति च अन्तोदात्तम्। अतः तस्मात् परस्य वाच्- शब्दस्य एकाच्-त्वात् ततः परस्य तृतीयाविभक्तेः आकारस्य प्रकृतसूत्रेण उदात्तत्वं विधीयते।

## १२.९) ऊडिदम्पदाद्यपुप्पुम्रैद्युभ्यः (६.१.१७६)

**सूत्रार्थः-** एभ्योऽसर्वनामस्थानविभक्तिरुदात्ता।

**सूत्रावतरणम्-** ऊडिदम्पदाद्यपुप्पुम्रैद्युभ्यः परस्य असर्वनामस्थानविभक्तेः उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** संज्ञा- परिभाषा- विधि- नियमातिदेशाधिकारात्मकेषु षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन उदात्तस्वरः विधीयते। अस्मिन् सूत्रे एकमेव समस्तं पदं वर्तते। तत्र समस्ते पदे समासः इत्थम्- पद् आदिः येषां ते पदादयः इति बहुव्रीहिसमासः ,ऊट् च इदं च पदादयश्च अप् च पुम् च रै च दिव् च इति विग्रहे इतरेतरद्वन्द्वसमासे ऊडिदम्पदाद्यपुप्पुम्रैदिवः इति रूपं, तेभ्यः इति ऊडिदम्पदाद्यपुप्पुम्रैद्युभ्यः। अञ्चेश्छन्दस्यसर्वनामस्थानम् इति सूत्रात् अत्र असर्वनामस्थानम् इति प्रथमैकवचनान्तं पदम् अनुवर्तते। सावेकाचस्तृतीयादिर्विभक्तिः इति सूत्रात् अत्र विभक्तिः इति प्रथमैकवचनान्तं पदम् अनुवर्तते। कर्षात्वतो घञोऽन्त उदात्तः इति सूत्रात् उदात्तः चेति प्रथमैकवचनान्तं पदम् अत्र अनुवर्तते। असर्वनामस्थानम् इति च संज्ञाबोधकं पदम्, सुडनपुंसकस्य इति सूत्रेण सु, औ, जस्, अम्, औट् चेत्यादीनां सर्वनामस्थानसंज्ञा भवति, तद्भिन्नाश्च प्रत्ययाः असर्वनामस्थानम् इत्युच्यन्ते। तच्च अनुवर्तमानं पदमत्र लिङ्गविपरिणामेन असर्वनामस्थाना इति रूपं लभते। ततश्च अत्र पदान्वयः इत्थं भवति- ऊडिदम्पदाद्यपुप्पुम्रैद्युभ्यः असर्वनामस्थाना विभक्तिः उदात्ता इति। एवञ्च अयमत्र सूत्रार्थः भवति- ऊडिदम्पदाद्यपुप्पुम्रैद्युभ्यः परस्य असर्वनामस्थानविभक्तेः उदात्तत्वं भवति इति।

**उदाहरणम्-** अक्षद्युवे, प͟द्भ्यां भूमिः इत्यादीनि अत्र उदारहणानि।



**सूत्रार्थसमन्वयः-** पद्भ्यां भूमिः इति उदाहरणे पद्-शब्दस्य अर्थवदधातुरप्रत्ययः प्रादिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञायां ततः स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसांङ्योस्सुप् इति सूत्रेण एकविंशतिषु स्वादिप्रत्ययेषु प्राप्तेषु तृतीयाद्विवचनविवक्षायां भ्याम्- प्रत्यये पद् भ्याम् इति स्थिते ततश्च सर्वसंयोगे पद्भ्याम् इति रूपं सिध्यति। अत्र पद इति शब्दस्य पदादिगणे पाठात् ततः परस्य च भ्याम् इत्यस्य सर्वनामस्थानसंज्ञाभावात् प्रकृतसूत्रेण तदन्तस्य पद्भ्याम् इति पदस्य अन्तस्य स्वरस्य आकारस्य उदात्तत्वं विधीयते।

एवम् अक्षद्युवे इत्यदौ अपि समानरूपेण प्रक्रियाकार्यं बोध्यम्।

## १२.१०) अष्टनो दीर्घात् (६.१.१७२)

**सूत्रार्थः-** शसादिविभक्तिरुदात्ता।

**सूत्रावतरणम्-** दीर्घान्तात् अष्टन्-शब्दात् परेषां शसादीनाम् असर्वनामस्थानसंज्ञकानाम् उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन उदात्तस्वरः विधीयते। अत्र पदद्वयं वर्तते- अष्टनः इति, दीर्घात् इति। तत्र अष्टनः, दीर्घात् चेति पञ्चम्येकवचनान्तं पदद्वयम्। कर्षात्वतो घञोऽन्त उदात्तः इति सूत्रात् उदात्तः इति प्रथमैकवचनान्तं पदम् अत्र अनुवर्तते। पूर्वसूत्रात् सावेकाचस्तृतीयादिर्विभक्तिः इत्यस्मात् अत्र विभक्तिः इति प्रथमैकवचनान्तं पदम् अनुवर्तते। अञ्चेश्छन्दस्यसर्वनामस्थानम् इति सूत्रात् असर्वनामस्थानम् इति च प्रथमैकवचनान्तं संज्ञाबोधकं पदम् अनुवृत्तम्। तच्च लिङ्गविपरिणामेन असर्वनामस्थाना इति रूपं लभते। ततश्च अत्र पदान्वयः इत्थं भवति- दीर्घात् अष्टनः असर्वनामस्थानविशिष्टा विभक्तिः उदात्तः इति। अत्र दीर्घात् इति पदम् अष्टनः इत्यस्य विशेषणम् तदन्तविधिना अत्र दीर्घान्तात् अष्टनः इति अर्थः लभ्यते। ततश्च अयमत्र - दीर्घान्तात् अष्टन्-शब्दात् परं शसादयः असर्वनामस्थानाः विभक्तयः उदात्ताः स्युः इति।

**उदाहरणम्-** अष्टाभिर्दशभिः।

**सूत्रार्थसमन्वयः-** अष्टन्-शब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञायां ततः ङ्याप्प्रातिपदिकात्, प्रत्ययः परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसांङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिषु स्वादिप्रत्ययेषु प्राप्तेषु तृतीयाबहुवचनविवक्षायां भिसि अष्टन् भिस् इति स्थिते न लोपः प्रातिपदिकान्तस्य इति सूत्रेण अष्टन्-शब्दस्य नकारस्य लोपे अष्ट भिस् इति स्थिते सर्वसंयोगे निष्पन्नस्य अष्टभिस् इति शब्दस्वरूपस्य सुबन्तत्वात् तदन्तस्य सकारस्य स्थाने ससजुषोः रुः इति आदेशे रोः उकारस्य उपदेशेऽजनुनासिक इत् इति इत्संज्ञायां लोपे च कृते आत्वे अष्टाभिर् इति स्थिते रेफोच्चारणात् परस्य वर्णाभावस्य विरामोऽवसानम् इति सूत्रेण अवसानसंज्ञायां तत्परकत्वात् पूर्वस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इति सूत्रेण रेफस्य स्थाने विसर्गे अष्टाभिः इति सुबन्तं रूपं सिद्ध्यति। प्रकृतसूत्रेण अष्टाभिः इत्यत्र भकारोत्तरस्य अचः इकारस्य उदातत्वं प्रकृतसूत्रेण विधीयते।



## १२.११) शतुरनुमो नद्यजादी(६.१.१७३)

**सूत्रार्थः-** अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिश्च शसादिर्विभक्तिरुदात्ता स्यात्।

**सूत्रावतरणम्-** यस्य शतृप्रत्ययस्य नुमागमः न भवति तदन्तात् अन्तोदात्तात् परा या नदी अजादिश्च शसादिः विभक्तिः तस्य उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतं महर्षिणा पाणिनिना।

**सूत्रव्याख्या-** षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। शतुः अनुमः नद्यजादी इति सूत्रगतपदच्छेदः। शतुः इति अनुमः इति च पञ्चम्यन्तं पदम्। नद्यजादी इति प्रथमाद्विवचनान्तं पदम्। नदी च अजादिश्च इति कर्मधारयसमासः। कर्षात्वतो घञोऽन्त उदात्तः इति सूत्रात् उदात्तः प्रथमैकवचनान्तं पदम् अत्र अनुवर्तते। पूर्वसूत्रात् सावेकाचस्तृतीयादिर्विभक्तिः इत्यस्मात् अत्र विभक्तिः इति प्रथमैकवचनान्तं पदम् अनुवर्तते। अञ्चेश्छन्दस्यसर्वनामस्थानम् इति सूत्रात् असर्वनामस्थानम् इति च प्रथमैकवचनान्तं संज्ञाबोधकं पदम् अनुवृत्तम्। तच्च लिङ्गविपरिणामेन असर्वनामस्थाना इति रूपं लभते। ततश्च अत्र पदान्वयः इत्थं भवति- अनुमः शतुः अन्तोदात्तात् परा नदी अजादिः असर्वनामस्थाना विभक्तिः उदात्ता इति। ततश्च सूत्रार्थो भवति नुमागमरहितशतृप्रत्ययान्तात् अन्तोदात्तात् परेषां सर्वनामस्थानसंज्ञकभिन्नविभक्त्यवयवस्वराणां नदीसंज्ञकानां ङीप्-ङीष्-ङीन्-प्रत्ययानां ईकारस्य च उदात्तत्वं भवति इति।

**उदाहरणम्-** अच्छा रवं प्रथमा जानती।

**सूत्रार्थसमन्वयः-** जानती इत्यत्र जानत् इति शतृप्रत्ययान्तं रूपम्। ततश्च ऋन्नेभ्यो ङीप् इति सूत्रेण ङीप्प्रत्यये जानत् ङीप् इति स्थिते ङीप्प्रत्ययादेः ङकारस्य लशक्वतद्धिते इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण च तस्य लोपे जानत् ई इति स्थिते संयोगे निष्पन्नस्य जानती इति शब्दस्वरूपस्य ङीप्प्रत्ययान्तत्वात् ततः सौ विभक्तिकार्ये च जानती इति रूपम्। अत्र जानत् इति शतृप्रत्ययान्तं रूपम्, तत्र च शतृप्रत्ययस्य नुमागमो न भवति। अतः प्रकृतसूत्रेण अनुमः शतुः अन्तोदात्तात् परस्य नदीसंज्ञकस्य ङीप्प्रत्ययस्य ईकारस्य उदात्तत्वं विधीयते।

## १२.१२) उदात्तयणो हल्पूर्वात्(६.१.१७४)

**सूत्रार्थः-** उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी शसादिर्विभक्तिश्च उदात्ता स्यात्।

**सूत्रावतरणम्-** उदात्तस्वरस्य स्थाने विहितः यः यणादेशः तस्मात् पूर्वं नदीसंज्ञकस्य शसादीनां विभक्तीनां च उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** संज्ञा-परिभाषा-विधि-नियम-अतिदेश-अधिकाराख्येषु षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन उदात्तत्वस्य विधानं क्रियते। अस्मिन् सूत्रे द्वे पदे स्तः। उदात्तयणः इति पञ्चम्यन्तं पदम्, हल्पूर्वात् इत्यपि पञ्चम्यन्तं पदम्। उदात्तस्थाने यण् उदात्तयण् इति मध्यपदलोपी कर्मधारयसमासः, तस्य उदात्तयणः। हल् पूर्वे अस्ति यस्य स हल्पूर्वः इति बहुव्रीहिसमासः, तस्मात् हल्पूर्वात्। शतुरनुमो नद्यजादी इति सूत्रात् नद्यजादी इति प्रथमान्तं पदम् अनुवर्तते। कर्षात्वतो घञोऽन्त



उदात्तः इति सूत्रात् उदात्तः चेति प्रथमैकवचनान्तं पदम् अत्र अनुवर्तते तच्च लिङ्गविपरिणामेन उदात्ता इति भवति। पूर्वस्मात् सावेकाचस्तृतीयादिर्विभक्तिः इति सूत्रात् अत्र विभक्तिः इति प्रथमैकवचनान्तं पदम् अनुवर्तते। अञ्चेश्छन्दस्यसर्वनामस्थानम् इति सूत्रात् असर्वनामस्थानम् इति प्रथमैकवचनान्तं संज्ञाबोधकं पदम् अनुवृत्तम्। तच्च असर्वनामस्थानं विभक्तिः इति पदस्य विशेषणम् अतो लिङ्गविपरिणामेन असर्वनामस्थाना इति रूपं लभते। असर्वनामस्थानम् इति च संज्ञाबोधकं पदम्, सुडनपुंसकस्य इति सूत्रेण च सु, औ, जस्, अम्, औट् चेत्यादीनां सर्वनामस्थानसंज्ञा भवति, तद्भिन्नाश्च प्रत्ययाः असर्वनामस्थानम् इत्युच्यन्ते शसादयः विभक्तयः असर्वनामस्थान इत्यनेन उच्यन्ते। ततश्च अत्र पदान्वयः इत्थं भवति- हल्पूर्वात् उदात्तयणः नदी अजादिः असर्वनामस्थाना विभक्तिः उदात्ता इति। तेन च सूत्रस्यास्य अयमर्थो भवति हल्परकोदात्तस्थाने विहितः यः यण् ततः परेषां सर्वनामस्थानसंज्ञकविभक्त्यवयवस्वराणां नदीसंज्ञकानां ङीप्-ङीष्-ङीन्-प्रत्ययानां ईकारस्य च उदात्तत्वं भवति इति।

**उदाहरणम्-** चोदयित्री सूनृतानाम्।

**सूत्रार्थसमन्वयः-** चोदयित्री इत्यत्र चोदि- धातोः तृच्प्रत्यये चोदि तृ इति स्थिते तृच्प्रत्ययस्य च इडागमे चोदि इतृ इति स्थिते चोदि-धातोः इकारस्य गुणे एकारे चोदे इतृ इति स्थिते यथासंख्यमनुदेशः समानाम् इति परिभाषया परिष्कृतेन एचोऽयवायावः इति सूत्रेण एकारस्य स्थाने अय्-इत्यादेशे चोदयितृ इति स्थिते तस्य तृच्प्रत्ययान्तस्य चोदयितृशब्दस्वरूपस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां ततश्च ऋन्नेभ्यो ङीप् इति सूत्रेण ङीप्प्रत्यये चोदयितृ ङीप् इति स्थिते ङीप्प्रत्ययादेः ङकारस्य लशक्वतद्धिते इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण च तस्य लोपे चोदयितृ ई इति स्थिते ऋकारस्य स्थाने च रेफादेशे निष्पन्नस्य चोदयित्री इति शब्दस्वरूपस्य ङीप्प्रत्ययान्तत्वात् ततः ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसांङ्योस्सुप् इति सूत्रेण एकविंशतिषु स्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य उकारस्य उपदेशेऽजनुनासिकः इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण इत्संज्ञकस्य उकारस्य लोपे चोदयित्री स् इति स्थिते संयोगे चोदयित्री स् इति स्थिते हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् इति सूत्रेण ङ्यन्तात् परस्य सुप्रत्ययस्य सकारस्य लोपे चोदयित्री इति रूपं सिध्यति। अत्र चोदयित्री इत्यत्र चोदयितृ इति अवस्थायाम् उदात्तस्य ऋकारस्य स्थाने यण् रेफः विधीयते, स च रेफः हल्पूर्वः। अतः तस्मात् परस्य नदीसंज्ञकस्य ङीप्प्रत्ययस्य ईकारस्य प्रकृतसूत्रेण उदात्तत्वं विधीयते।

## १२.१३) ह्रस्वनुड्भ्यां मतुप् (६.१.१७६)

**सूत्रार्थः-** ह्रस्वान्तादन्तोदात्तान्नुटश्च परः मतुबुदात्तः।

**सूत्रावतरणम्-** ह्रस्वान्तात् अन्तोदात्तात् च परस्य मतुपः उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतम्।



**सूत्रव्याख्या-** षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन उदात्तस्वरः विधीयते। द्विपदात्मके अस्मिन् सूत्रे ह्रस्वनुड्भ्याम् इति पञ्चमीद्विवचनान्तं पदम्, मतुप् इति च प्रथमैकवचनान्तं पदम्। कर्षात्वतो घञोऽन्त उदात्तः इति सूत्रात् उदात्तः प्रथमैकवचनान्तं पदम् अत्र अनुवर्तते। अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे इति सूत्रात् अत्र अन्तोदात्तात् इति पञ्चम्येकवचनान्तं पदम् अत्र अनुवर्तते। ततश्च अत्र पदान्वयः भवति- ह्रस्वनुड्भ्याम् अन्तोदात्तात् मतुप् उदात्तः इति। अत्र अन्तोदात्तात् इति पदञ्च नुट् इत्यस्य विशेषणम्। तेन तदन्तविधिना च अन्तोदात्तान्तात् नुट्-प्रत्ययान्तात् इत्यर्थो भवति। ततश्च अयमत्र सूत्रार्थः भवति- ह्रस्वान्तात् अन्तोदात्तात् नुट्प्रत्ययान्तात् च परस्य मतुपः उदात्तत्वं भवति इति।

**उदाहरणम्-** अ॒क्ष॒ण्वन्तः॑ कर्णवन्तः सखा॑यः।

**सूत्रार्थसमन्वयः-** अक्षण्वन्तः इत्यत्र अन्तोदात्तनुडन्तात् मतुप्-प्रत्ययः विहितः। अतः अन्तोदात्तनुडन्तात् परस्य मतुपः अकारस्य प्रकृतसूत्रेण उदात्तत्वं विधीयते।

## १२.१४) ङ्याश्छन्दसि बहुलम्(६.१.१७८)

**सूत्रार्थः-** ङ्याः परो नामुदात्तो वा।

**सूत्रावतरणम्-** छन्दसि ङ्याः परस्य नामः विकल्पेन उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन उदात्तस्वरः विधीयते। ङ्याः छन्दसि बहुलम् इति सूत्रगतपदच्छेदः। त्रिपदात्मके अस्मिन् सूत्रे ङ्याः इति पञ्चम्येकवचनान्तं पदम्, छन्दसि इति सप्तम्येकवचनान्तं पदम्, बहुलम् इति च प्रथमैकवचनान्तं पदम्। नामन्यतरस्याम् इति सूत्रात् अत्र नाम् इति प्रथमैकवचनान्तं पदम्, कर्षात्वतो घञोऽन्त उदात्तः इति सूत्रात् उदात्तः चेति प्रथमैकवचनान्तं पदम्, पूर्वसूत्रात् सावेकाचस्तृतीयादिर्विभक्तिः इत्यस्मात् अत्र विभक्तिः इति प्रथमैकवचनान्तं पदम् अत्र अनुवर्तन्ते। ततश्च अत्र अयं पदान्वयः भवति- ङ्याः छन्दसि बहुलं नाम् उदात्तः इति। अत्र नाम् इति च नुडागमसहितस्य आम्-विभक्तेः रूपम्। तच्च अत्र षष्ठ्येकवचनान्ततया विपरिणम्यते। ततश्च अयमत्र सूत्रार्थो भवति- छन्दसि ङ्याः परस्य नामः उदात्तत्वं भवति इति।

**उदाहरणम्-** दे॒व॒से॒नाना॑मभिभञ्ज॒ती॒नाम्।

**सूत्रार्थसमन्वयः-** अभिभञ्जतीनाम् इत्यत्र अभिभञ्जती इति ङीप्प्रत्ययान्तं पदम्। अतः अभिभञ्जती इति ङ्यन्तं पदम्। तस्मात् प्रकृतसूत्रेण ङ्यन्तात् अभिभञ्जती इत्यस्मात् षष्ठीबहुवचनविवक्षायां विहितस्य नुडागमसहितस्य आम्प्रत्ययस्य आकारस्य उदात्तत्वं विधीयते।

## १२.१५) न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः(६.१.१८२)

**सूत्रार्थः-** एभ्यः प्रागुक्तं न।

**सूत्रावतरणम्-** छन्दसि गो, श्वन्- इत्यादिभ्यः परेषां हलादीनां विभक्तीनाम् उदात्तत्वनिषेधार्थं सूत्रमिदं प्रणीतमाचार्येण।



**सूत्रव्याख्या-** षड्विधेषु पाणिनीयसूत्रेषु इदं निषेधसूत्रम्। अनेन उदात्तस्वरः निषिध्यते। अस्मिन् सूत्रे द्वे एव पदे स्तः- न इति, गोश्वन्सावर्णराडङ्क्रुङ्कृद्भ्यः इति च। तत्र न इति अव्ययपदम्, गोश्वन्सावर्णराडङ्क्रुङ्कृद्भ्यः इति च समस्तं पञ्चमीबहुवचनान्तं पदम्। गौश्च श्वा च सावर्णश्च राट् च अङ् च क्रुङ् च कृत् च इति विग्रहे इतरेतरद्वन्द्वसमासे गोश्वन्सावर्णराडङ्क्रुङ्कृदः, तेभ्यः इति गोश्वन्सावर्णराडङ्क्रुङ्कृद्भ्यः। अत्र सावर्णः इत्यस्य सौ अवर्णः इत्यर्थः। षट्त्रिचतुर्भ्यो हलादिः इति सूत्रात् अत्र हलादिः इति प्रथमैकवचनान्तं पदम्, कर्षात्वतो घञोऽन्त उदात्तः इति सूत्रात् उदात्तः इति प्रथमैकवचनान्तं पदम्, सावेकाचस्तृतीयादिर्विभक्तिः इत्यस्मात् अत्र विभक्तिः इति प्रथमैकवचनान्तं पदम् अत्र अनुवर्तन्ते। ततश्च अयमत्र पदान्वयः भवति- गोश्वन्सावर्णराडङ्क्रुङ्कृद्भ्यः हलादिः विभक्तिः न उदात्तः इति। तेन अयं सूत्रार्थः लभ्यते- गोश्वन्सावर्णराडङ्क्रुङ्कृद्भ्यः परेषां हलादीनां विभक्तीनाम् उदात्तत्वं न स्यात् इति।

**उदाहरणम्-** गोभ्यौं गातुम्।

**सूत्रार्थसमन्वयः-** गोभ्यः इत्यत्र गोशब्दात् भ्यस् इति हलादिः विभक्तिः वर्तते। अतः प्रकृतसूत्रेण गोशब्दात् परस्य भिस् इति हलादिविभक्तेः उदात्तत्वं निषिध्यते।

## १२.१६) दिवो झल् (६.१.१८३)

**सूत्रार्थः-** दिवः परा झलादिविभक्तिः न उदात्ता।

**सूत्रावतरणम्-** दिव्-शब्दात् परेषां झलादिविभक्तीनाम् उदात्तत्वनिषेधार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** षड्विधेषु पाणिनीयसूत्रेषु इदं निषेधसूत्रम्। अनेन उदात्तस्वरः निषिध्यते। अस्मिन् सूत्रे द्वे एव पदे स्तः- दिवः इति, झल् इति। तत्र दिवः इति पञ्चम्येकवचनान्तं पदम्, झल् इति प्रथमैकवचनान्तं पदम्। न गोश्वन्सावर्णराडङ्क्रुङ्कृद्भ्यः इति सूत्रात् अत्र न इति अव्ययम्, कर्षात्वतो घञोऽन्त उदात्तः इति सूत्रात् उदात्तः इति प्रथमैकवचनान्तं पदम्, सावेकाचस्तृतीयादिर्विभक्तिः इत्यस्मात् अत्र विभक्तिः इति प्रथमैकवचनान्तं पदम् अत्र अनुवर्तन्ते। ततश्च अयमत्र पदान्वयः- दिवः झल् विभक्तिः न उदात्तः इति। अत्र झल् इति विभक्तेः विशेषणम्। अतः यस्मिन् विधिस्तदादावल्ग्रहणे इति परिभाषया तदादिविधिना झलादिः विभक्तिः इत्यर्थः लभ्यते। एवञ्च सूत्रार्थः भवति- दिव्-शब्दात् परेषां झलादिविभक्तीनाम् उदात्तत्वं न स्यात् इति।

**उदाहरणम्-** द्युभिर्रक्तुभिः।

**सूत्रर्थसमन्वयः-** दिव्-शब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञायां प्रत्ययः परश्च ङ्याप्प्रातिपदिकात् इति सूत्रत्रयम् अधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसांङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिषु स्वादिप्रत्ययेषु प्राप्तेषु तृतीयैकवचनविवक्षायां भिस्प्रत्यये दिव् भिस् इति स्थिते दिव्-शब्दस्य स्थाने अलोऽन्त्यस्य इति परिभाषया परिष्कृतेन दिव उत् इति सूत्रेण उत् इति अन्तादेशेऽनुबन्धलोपे दि उ भिस् इति स्थिते इकारस्य स्थाने इको यणचि इति सूत्रेण यणादेशे यकारे द् य् उ भिस् इति स्थिते



भिसः सकारस्य ससजुषो रः इति सूत्रेण रुत्वे विसर्गे द्युभिः इति रूपं सिद्ध्यति। द्युभिः इत्यत्र दिव्-शब्दात् भिस् इति प्रत्ययः वर्तते। स च भिस्प्रत्ययः झलादिः वर्तते। अतः प्रकृतसूत्रेण दिव्-शब्दस्य परस्य झलादेः भिसः प्रत्ययस्य उदात्तत्वं निषिध्यते।

## १२.१७) तित्स्वरितम् (६.१.१८५)

**सूत्रार्थः-** तित्प्रत्ययस्य स्वरितत्वम्।

**सूत्रावतरणम्-** तितः प्रत्ययस्य स्वरस्य स्वरितत्वविधानार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या-** षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन स्वरितस्वरः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। तित् इति, स्वरितम् इति। अत्र उभयमेव पदम् प्रथमैकवचनान्तं बोध्यम्। तित् इति पदस्य विशेष्यरूपेण प्रत्ययः इति पदमत्र योज्यम्। एवञ्च अत्र पदान्वयः भवति- तित् (प्रत्ययः) स्वरितम्। ततश्च सूत्रार्थः भवति- तित्प्रत्ययः स्वरितः स्यात् इति।

**उदाहरणम्-** क्व॑ नू॒नम्।

**सूत्रार्थसमन्वयः-** किम्-शब्दात् किमोऽत् इति सूत्रेण अत्प्रत्यये हलन्त्यम् इति सूत्रेण तकारस्य इत्संज्ञायां तस्य लोपः इति सूत्रेण च तस्य इत्संज्ञकस्य तकारस्य लोपे किम् अ इति स्थिते क्वाति इति सूत्रेण किम् इति शब्दस्य स्थाने क्व इत्यादेशे क्व अत् इति स्थिते अतो गुणो इति सूत्रेण क्व इत्यस्य अकारस्य अत् इत्यस्य अकारस्य च स्थाने पररूपे एकादेशे अकारे सर्वसंयोगे क्व इति रूपं सिध्यति। क्व इति तित्प्रत्ययान्तं विद्यते। अतः क्व इत्यत्र प्रकृतसूत्रेण अकारस्य स्वरितस्वरः भवति।

## १२.१८) उपोत्तमंरिति (६.१.१९७)

**सूत्रार्थः-** रित्प्रत्ययान्तस्योपोत्तममुदात्तं स्यात्।

**सूत्रावतरणम्-** रित्प्रत्ययान्तस्य उपोत्तमस्य उदात्तत्वविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन उदात्तस्वरः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः- उपोत्तमम् इति, रिति इति च। तत्र उपोत्तमम् इति अव्ययम्, रिति इति च सप्तम्येकवचनान्तं पदम्। कर्षात्वतो घञोऽन्त उदात्तः इति सूत्रात् उदात्तः इति प्रथमैकवचनान्तं पदम् अत्र अनुवर्तते। उपोत्तमं नाम द्विसंख्याधिकस्वरविशिष्टस्य पदस्य अन्तात् पूर्वस्वरः। ततश्च अत्र पदान्वयः भवति- रिति उपोत्तमं उदात्तम् इति। रिति इति पदस्य विशेष्यरूपेण प्रत्ययः इति पदस्य आक्षेपः कर्तव्यः। एवञ्च अत्र सूत्रार्थो भवति- रित्प्रत्ययान्तस्य उपोत्तमस्य उदात्तत्वं स्यात् इति।

**उदाहरणम्-** यदाहवनीये।

**सूत्रार्थसमन्वयः-** आहवनीये इत्यत्र आपूर्वकात् हुधातोः कृत्यल्युटो बहुलम् इति सूत्रेण बाहुलके अधिकरणार्थे अनीयर्- प्रत्यये अनीयर्-प्रत्ययान्तस्य रेफस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः





इति सूत्रेण इत्संज्ञकस्य रकारस्य लोपे आ हु अनीय इति जाते धातोः उकारस्य गुणे ओकारे आ हो अनीय इति जाते यथासंख्यमनुदेशः समानाम् इति परिभाषया परिष्कृतेन एचोऽयवायावः इति सूत्रेण ओकारस्य स्थाने अव् इत्यादेशे आहव् अनीय इति जाते संयोगे निष्पन्नस्य आहवनीय इति शब्दस्वरूपस्य कृदन्तत्वात् ततः ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङ्सोसांङ्योस्सुप् इति सूत्रेण एकविंशतिषु स्वादिप्रत्ययेषु प्राप्तेषु सप्तम्येकवचनविवक्षायां ङिप्रत्यये ङिप्रत्ययादेः ङकारस्य लशक्वतद्धिते इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण च इत्संज्ञकस्य ङकारस्य लोपे आहवनीय इ इति स्थिते एकः पूर्वपरयोः इत्यधिकारे पठितेन आद्गुणः इति सूत्रेण तयोः अकारस्य इकारस्य च स्थाने गुणे स्थानत आन्तर्यात् एकारे सर्वसंयोगे आहवनीये इति रूपं सिध्यति। प्रकृते उदाहरणे आहवनीये इति अनीयर्-प्रत्ययान्तं पदम्, स च अनीयर्-प्रत्ययः रिद् भवति। अतः प्रकृतसूत्रेण तदन्तस्य आहवनीये इति पदस्य अन्त्यात् पूर्वस्य एकारस्य उदात्तत्वं विधीयते।



## पाठगतप्रश्नाः-२

१०. सावेकाचस्तृतीयादिर्विभक्तिः इति सूत्रेण किं विधीयते?

११. अन्तोदात्तादुत्तरपदादन्यतरस्यमनित्यसमासे इति सूत्रेण किं विधीयते?

१२. ऊडिदम्पदाद्यपुप्पुम्रैद्युभ्यः इति सूत्रेण किं विधीयते?

१३. शसादिविभक्तिरुदात्ता इति कस्य सूत्रस्य अर्थः?

१४. अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिश्च शसादिर्विभक्तिरुदात्ता स्यात् इति कस्य सूत्रस्य अर्थः?

१५. चोदयित्री इत्यत्र ईकारस्य उदात्तत्वं केन विहितम्?



## पाठसारः

अत्र अष्टाध्याय्याः तृतीयाध्यायस्य षष्ठाध्यायस्य च सूत्राणि आलोचितानि। अत्र तु वैदिकव्याकरणं चर्च्यते। पाणिनिः लौकिकव्याकरणस्य कृते स्वरादिव्यवस्थां कृतवान्। परन्तु कालक्रमेण स्वरव्यवस्था प्रायः लुप्ता दृश्यते। परन्तु सम्प्रति अपि वेदे तु स्वरस्य माहात्म्यं भूयशः परिलक्ष्यते। पूर्वतने पाठद्वये धातुस्वरः प्रातिपदिकस्वरः फिट्-स्वरश्च आलोचिताः सन्ति। प्रकृतपाठे अस्मिन् प्रत्ययस्वराणां तु चर्चा क्रियते। सामान्यतः सवेषां प्रत्ययानां आदिः स्वरः उदात्तो भवति। आद्युदात्तश्च



इत्यादिना सूत्रेण प्रत्ययस्य आदिः स्वरः उदात्तः भवति। परन्तु सामान्यतः सुप्प्रत्ययाः अनुदात्ताः भवन्ति। अनुदात्तौ सुप्पितौ इति निर्देशात्। काञ्चित् विशेषप्रत्ययान् समाश्रित्य त्रिसृभ्यो जसः इत्यादिविशेषसूत्रं रचितं सूत्रकर्त्रा। उदात्तादिस्वराणां निषेधार्थम् अपि कानिचित् सूत्राणि प्रोक्तानि पाणिनिना। यथा- दिवो झल् इत्यादीनि सूत्राणि। दिव्-शब्दात् परेषां झलादिविभक्तीनाम् उदात्तत्वनिषेधार्थं सूत्रमिदं प्रणीतम्। एवञ्च अस्य पाठस्य मुख्यः विषयः भवति प्रत्ययस्वरः इति।

##  पाठान्तप्रश्नाः

१. आद्युदात्तश्च इति सूत्रं व्याख्यात।
२. तद्धितस्य इति सूत्रं व्याख्यात।
३. परमवाचा इति रूपं साधयत।
४. चोदयित्री इति रूपं ससूत्रं साधयत।
५. यज्ञस्य इति रूपं साधयत।
६. आहवनीये इति रूपं साधयत।
७. शतुरनुमो नद्यजादी इति सूत्रं व्याख्यात।
८. ङ्याश्छन्दसि बहुलम् इति सूत्रं व्याख्यात
९. न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः इति सूत्रं व्याख्यात।
१०. कौञ्जायनाः इति रूपं ससूत्रं साधयत।

##  पाठगतप्रश्नानामुत्तराणि

**पाठगतप्रश्नाः-१**

१. अग्निशब्दात् निप्रत्ययस्य विधानम् अङ्गेर्नलोपश्च इति सूत्रेण भवति
२. आद्युदात्तश्च इति सूत्रेण प्रत्ययस्य आद्युदात्तत्वं विधीयते
३. अग्निशब्दे नकारात् परः इकारः उदात्तः
४. अगिधातुः
५. अनुदात्तौ सुप्पितौ इति सूत्रेण
६. चितः इति सूत्रेण
७. तद्धितस्य इति अधिकारसूत्रम्।
८. कितः इति सूत्रेण



९. तिसृभ्यो जसः इति सूत्रेण

**उत्तराणि-२**

१०. उदात्तस्वरः

११. उदात्तस्वरः

१२. उदात्तस्वरः

१३. अष्टनो दीर्घात् इति सूत्रस्य

१४. शतुरनुमो नद्यजादी इति सूत्रेण

१५. उदात्तयणो हल्पूर्वात् इति सूत्रेण।

**इति प्रत्ययस्वराः**

## ।।इति द्वादशः पाठः।।



# १३

# समासस्वराः

## प्रस्तावना-

स्वरसहिततया वेदाः अध्येतव्याः। त्रयः स्वराः। उदात्तः, अनुदात्तः, स्वरितः च। प्रत्येकं स्वरेषु एकैकं चिह्नम् अस्ति। यथा अ॒ग्निमी॑ळे इत्यत्र अकारः अनुदात्तः। अकारस्य नीचैः विद्यमाना रेखा अकारस्य अनुदात्तत्वं बोधयति। ग्नि इत्यस्य इकारः उदात्तः। उदात्तस्य कृते किमपि चिह्नं नास्ति। चिह्नविहीनः उदात्तः भवति। मी इत्यत्र ईकारः स्वरितः। ईकारस्य उपरि विद्यमाना रेखा स्वरितस्य सूचिका। एवम् अचः त्रयः स्वराः सम्भवन्ति। प्रत्येकं वर्णानां स्वरः प्रत्यययोगात् समासकरणात् इत्यादिहेतोः परिवर्त्यते। अस्मिन् प्रकरणे समासस्वरविषये ज्ञास्यामः। अर्थात् समासकरणेन कुत्र कः स्वरः भवति तद् आलोचयामः।



## उद्देश्यानि-

इमं पाठं पठित्वा भवान्-

- समासस्य अन्ते जायमानं स्वरं ज्ञातुं शक्नुयात्।
- तत्पुरुषसमासे पूर्वपदस्य स्वरं विधातुं शक्नुयात्।
- कर्मधारयसमासे पूर्वपदस्य स्वरं निर्णेतुं योग्यो भविष्यति।
- बहुव्रीहिसमासे पूर्वपदस्य स्वरं निश्चेतुम् सामर्थ्यम् अर्जयेत्।
- द्विगुसमासे कस्य पदस्य कः स्वरः भवति इति ज्ञास्यति।
- प्रकृतिस्वरत्वं कुत्र कुत्र इति पठिष्यति।
- सूत्राणाम् अर्थनिर्णयं कर्तुं प्रभवेत्।
- सूत्राणां व्याख्यानं कर्तुं सिद्धो भविष्यति।

---

## १३.१) समासस्य॥ (६.१.२२३)

**सूत्रार्थः**- समासस्य अन्तः उदात्तः भवति।

**सूत्रव्याख्या**- इदं विधिसूत्रम्। अनेन सूत्रेण उदात्तस्वरः विधीयते। सूत्रेऽस्मिन् एकमेव पदम् अस्ति। समासस्य इति षष्ठ्यन्तं पदम्। "अन्त्योऽवत्याः" इति सूत्रात् अन्तः इति पदम् अनुवर्तते।



उदात्तः इति पदमत्रानुवर्तते। अतः सूत्रार्थः भवति- समासस्य अन्तः उदात्तः भवति इति। उदात्तादिकं तु अचः एव सम्भवति। अतः अन्त्यः अच् उदात्तः भवति इत्यर्थः।

**उदाहरणम्-** राजपुरुषः

**सूत्रार्थसमन्वयः-**राज्ञः पुरुषः इति विग्रहे "षष्ठी" इति सूत्रेण षष्ठीतत्पुरुषसमासे राजपुरुषः इति रूपं भवति। समासत्वात् प्रकृतसूत्रेण राजपुरुष इत्यस्य अन्त्यः अकारः उदात्तः भवति।

## १३.२) तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः॥ (६.२.२)

**सूत्रार्थः-** तत्पुरुषसमासे पूर्वपदं यदि तुल्यार्थवाचकं, तृतीयान्तं, सप्तम्यन्तं, उपमानवाचकम्, अव्ययं, कृत्यप्रत्ययान्तं वा भवति तर्हि पूर्वपदस्य प्रकृतिस्वरः भवति।।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनेन सूत्रेण प्रकृतिस्वरः विधीयते। प्रकृतिशब्दः स्वाभाविके वर्तते। प्रकृतिस्वरः नाम स्वाभाविकः स्वरः। प्रकृतिः स्वाभाविकः स्वरः यस्य सः प्रकृतिस्वरः। अर्थात् समासात् पूर्वं पदस्य यः स्वाभाविकः स्वरः भवति, समासात् परं स एव स्वरः तिष्ठति। सूत्रेऽस्मिन् पदद्वयम् अस्ति। तत्पुरुषे इति सप्तम्यन्तं पदम्। तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः इति प्रथमान्तं पदम्। "बहुव्रीहौ प्रकृत्या पूर्वपदम्" इति सूत्रात् प्रकृत्या इति पूर्वपदम् इति च पदद्वयम् अनुवर्तते। सूत्रार्थः भवति तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः पूर्वपदभूताः प्रकृत्या इति। प्रकृत्या इत्यस्य अर्थः स्वभावेन अवतिष्ठते इति। अर्थात् तत्पुरुषसमासे पूर्वपदं यदि तुल्यार्थवाचकं, तृतीयान्तं, सप्तम्यन्तं, उपमानवाचकम्, अव्ययं, कृत्यप्रत्ययान्तं वा भवति तर्हि पूर्वपदस्य प्रकृतिस्वरः भवति। पूर्वपदस्य स्वरपरिवर्तनं न भवति।

**उदाहरणम्-** तुल्यंश्वेतः। किरिकाणः। अक्षशौण्डः। शस्त्रीश्यामा।

**सूत्रार्थसमन्वयः-** तुल्यश्वेतः- अत्र कृत्यतुल्याख्या अजात्या इति सूत्रेण कर्मधारयसमासः जातः। अत्र पूर्वपदं तुल्यार्थवाचकम् अस्ति किञ्च यतोऽनावः इति सूत्रेण आद्युदात्तम्। अतः प्रकृतसूत्रेण तुल्यश्वेतः इति समस्तपदस्य तुल्य इति पदम् आद्युदात्तं भवति।

किरिकाणः- किरिणा काणः इति विग्रहे तृतीयातत्पुरुषसमासे किरिकाणः इति रूपं भवति। अत्र किरि इति अन्तोदात्तं पदम्। अतः प्रकृतसूत्रेण किरिकाणः इत्यत्र किरि इति अन्तोदात्तं भवति।

अक्षशौण्डः- अक्षेषु शौण्डः इति विग्रहे सप्तमीतत्पुरुषसमासे अक्षशौण्डः इति रूपम्। अक्षशब्दः अन्तोदात्तः। अतः अक्षशौण्डः इत्यत्र अक्षशब्दः अन्तोदात्तः एव तिष्ठति।

शस्त्रीश्यामा- शस्त्री इव श्यामा इति विग्रहे उपमानानि सामान्यवचनैः इति सूत्रेण तत्पुरुषसमासः जातः। शस्त्रीशब्दः अन्तोदात्तः। अतः प्रकृतसूत्रेण शस्त्रीश्यामा इत्यत्र शस्त्री इति अन्तोदात्तः एव तिष्ठति।



अब्राह्मणः- न ब्राह्मणः इति विग्रहे नञ्तत्पुरुषसमासे अब्राह्मणः इति रूपं भवति। अत्र पूर्वपदं नञ् इति निपातः, निपाताः आद्युदात्ताः इति सूत्रेण आद्युदात्तः च। अतः प्रकृतसूत्रेण अब्राह्मणः इत्यत्र पूर्वपदम् अद्युदात्तमेव तिष्ठति।

मुहूर्तसुखम्- मुहूर्तं सुखम् इति विग्रहे अत्यन्तसंयोगे च इति सूत्रेण द्वितीयातत्पुरुषसमासः जातः। अत्र पूर्वपदं द्वितीयान्तम्, अन्तोदात्तं च। अतः प्रकृतसूत्रेण मुहूर्तसुखम् इत्यत्र पूर्वपदम् अन्तोदात्तमेव तिष्ठति।

भोज्योष्णम्- भोज्यं च तत् उष्ण्यम् इति विग्रहे कर्मधारयसंज्ञकः तत्पुरुषसमासः जातः। भोज्यम् इति कृत्यप्रत्ययान्तं पदम्, स्वरितं च। अतः भोज्योष्णम् इति समस्तपदस्य भोज्यशब्दः स्वरितः एव तिष्ठति।

## १३.३) वा भुवनम्॥ (६.२.२०)

**सूत्रार्थः-** ऐश्वर्ये अर्थे तत्पुरुषे पत्यौ उत्तरपदे भुवनं पूर्वपदं वा प्रकृत्या।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। सूत्रेणानेन प्रकृतिस्वरः विधीयते। अस्मिन् सूत्रे पदद्वयम् अस्ति। वा इत्यव्ययपदम्। भुवनम् इति प्रथमान्तं पदम्। "पत्यावैश्वर्ये" इति अनुवर्तते। "बहुव्रीहौ प्रकृत्या पूर्वपदम्" इति सूत्रात् प्रकृत्या इति पूर्वपदम् इति च पदद्वयम् अनुवर्तते। "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" इति सूत्रात् तत्पुरुषे इति अनुवर्तते। ऐश्वर्ये इति तत्पुरुषे इत्यनेन सह अन्वेति। उत्तरपदे इति अध्याहार्यम्। तच्च पत्यौ इत्यनेन सह अन्वेति। अतः सूत्रार्थः भवति- ऐश्वर्यवाचिनि तत्पुरुषे पतिशब्दे उत्तरपदे सति पूर्वपदस्य भुवनशब्दस्य विकल्पेन प्रकृतिस्वरः भवति इति।

**उदाहरणम्-** भुवॅनपतिः। भुवनपतिः।

**सूत्रार्थसमन्वयः-** भुवनपतिः इत्यत्र भुवनस्य पतिः इति विग्रहे तत्पुरुषसमासः जातः। अत्र भुवनशब्दः पूर्वपदम्। पतिशब्दश्च उत्तरपदम् अस्ति। अतः प्रकृतसूत्रेण भुवनशब्दस्य विकल्पेन प्रकृतिस्वरः भवति। तेन प्रकृतिस्वरपक्षे आद्युदात्तः भवति।

## १३.४) पूर्वे भूतपूर्वे॥ (६.२.२२)

**सूत्रार्थः-** पूर्वशब्दे उत्तरपदे भूतपूर्वे अर्थे तत्पुरुषे पूर्वपदं प्रकृत्या भवति।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन सूत्रेण प्रकृतिस्वरः विधीयते। अस्मिन् सूत्रे पदद्वयं विराजते। पूर्वे इति सप्तम्यन्तं पदम्। भूतपूर्वे इत्यपि सप्तम्यन्तं पदम्। बहुव्रीहौ प्रकृत्या पूर्वपदम् इति सूत्रात् प्रकृत्या इति पूर्वपदम् इति च पदद्वयम् अनुवर्तते। उत्तरपदे इति अध्याहार्यम्। तच्च उत्तरपदं पूर्वे इत्यनेन सह अन्वेति। अतः सूत्रार्थः भवति- पूर्वशब्दे उत्तरपदे भूतपूर्ववाचिनि तत्पुरुषे समासे पूर्वपदस्य प्रकृतिस्वरः भवति इति।

**उदाहरणम्-** आढ्यपूर्वः।



**सूत्रार्थसमन्वयः-** आढ्यः भूतपूर्वः इति विग्रहे आढ्यपूर्वः इति रूपम्। अत्र पूर्वशब्दः भूतपूर्वे अर्थे वर्तते। पूर्वशब्दः उत्तरपदम् अपि वर्तते। अतः अत्र प्रकृतसूत्रेण आढ्य इति पूर्वपदस्य प्रकृतिस्वरत्वं भवति।



## पाठगतप्रश्नाः-१

१. समासस्य अन्तः किं भवति?

२. तुल्यशब्दः आद्युदात्तः अन्तोदात्तः वा?

३. अक्षशौण्डः इत्यस्य विग्रहवाक्यं किम्?

४. भौज्योष्णम् इत्यत्र पूर्वपदस्य प्रकृतिस्वरत्वं केन विधीयते?

५. वा भुवनम् इति सूत्रस्य अर्थः कः?

६. भुवनपतिः इत्यत्र भुवनशब्दस्य कः स्वरः?

७. पूर्वे भूतपूर्वे इति सूत्रेण किं विधीयते?

## १३.५) विस्पष्टादीनि गुणवचनेषु॥ (६.२.२४)

**सूत्रार्थः-** विस्पष्टादीनि पूर्वपदानि गुणवचनेषूत्तरपदेषु प्रकृतिस्वराणि भवन्ति।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन सूत्रेण पूर्वपदस्य प्रकृतिस्वरः विधीयते। सूत्रेऽस्मिन् पदद्वयं विराजते। विस्पष्टादीनि इति प्रथमान्तं पदम्। गुणवचनेषु इति सप्तम्यन्तं पदम्। बहुव्रीहौ प्रकृत्या पूर्वपदम् इति सूत्रात् प्रकृत्या इति पूर्वपदम् इति च पदद्वयम् अनुवर्तते। उत्तरपदेषु इति अध्याहार्यम्। अतः सूत्रार्थः भवति- गुणवचनेषु उत्तरपदेषु विस्पष्टादीनां पूर्वपदानां प्रकृतिस्वरः भवति इति।

**उदाहरणम्-** विस्पष्टकटुकम्।

**सूत्रार्थसमन्वयः-** विस्पष्टं कटुकम् इति विग्रहे अत्र समासः। कटुकम् इति गुणवाचकं पदम्। तच्च उत्तरपदम्। अतः प्रकृतसूत्रेण विस्पष्टम् इति अस्य प्रकृतिस्वरः भवति। विस्पष्टशब्दः गतिरनन्तरः इति सूत्रेण आद्युदात्तः। तस्मात् विस्पष्टकटुकम् इत्यत्र विस्पष्टशब्दः आद्युदात्तः एव तिष्ठति।

**विशेषः-** विस्पष्टकटुकम् इत्यत्र न कर्मधारयसमासः। कर्मधारयसमासः विशेष्यविशेषणयोः मध्ये भवति। अत्र विस्पष्टम् इति कटुकस्य यत् प्रवृत्तिनिमित्तं कटुकत्वं, तस्य विशेषणं, न तु कटुकस्य। अतः अत्र सामान्यसमासः एव स्वीकर्तव्यः।

## १३.६) कुमारश्च॥ (६.२.२७)

**सूत्रार्थः-** पूर्वपदस्थः कुमारशब्दः कर्मधारये समासे प्रकृत्या भवति।



**सूत्रव्याख्या**- विधिसूत्रमिदम्। अनेन सूत्रेण पूर्वपदस्य प्रकृतिस्वरः विधीयते। सूत्रेऽस्मिन् पदद्वयं विराजते। कुमारः इति प्रथमान्तं पदम्। च इत्यव्ययपदम्। बहुव्रीहौ प्रकृत्या पूर्वपदम् इति सूत्रात् प्रकृत्या इति पूर्वपदम् इति च पदद्वयम् अनुवर्तते। श्रज्यावमकन्पापवत्सु भावे कर्मधारये इति सूत्रात् कर्मधारये इति पदम् अनुवर्तते। अतः सूत्रार्थः भवति कर्मधारये समासे पूर्वपदस्य कुमारशब्दस्य प्रकृतिस्वरः भवति इति।

**उदाहरणम्-** कुमारश्रमणा। कुमारकुलटा। कुमारतापसी।

**सूत्रार्थसमन्वयः-** कुमारी च इयं कुलटा इति विग्रहे कर्मधारयसमासे कुमारी इत्यस्य पुंवद्भावे कुमारकुलटा इति रूपम्। अन्तोदात्तः कुमारशब्दः अत्र पूर्वपदम्। अतः प्रकृतसूत्रेण कुमारश्रमण इत्यत्र कुमारशब्दः अपि अन्तोदात्तः एव तिष्ठति।

## १३.७) बह्वन्यतरस्याम्॥ (६.२.३०)

**सूत्रार्थः-** द्विगौ समासे इगन्तादिषु उत्तरपदेषु पूर्वपदस्थः बहुशब्दः अन्यतरस्यां प्रकृत्या भवति।

**सूत्रव्याख्या**- विधिसूत्रमिदम्। अनेन सूत्रेण प्रकृतिस्वरः विधीयते। सूत्रेऽस्मिन् पदद्वयं विराजते। बहु इति प्रथमान्तं पदम्। अन्यतरस्याम् इति अव्ययपदम्। इगन्तकालकपालभगालशरावेषु द्विगौ इति सूत्रात् इगन्तकालकपालभगालशरावेषु इति द्विगौ इति च पदद्वयम् अत्र अनुवर्तते। बहुव्रीहौ प्रकृत्या पूर्वपदम् इति सूत्रात् प्रकृत्या इति पूर्वपदम् इति च पदद्वयम् अनुवर्तते। उत्तरपदेषु इति अध्याहार्यम्। अतः सूत्रार्थः भवति द्विगुसमासे इगन्तकालकपालभगालशरावेषु उत्तरपदेषु पूर्वपदस्य बहुशब्दस्य अन्यतरस्यां प्रकृतिस्वरः भवति इति। अत्र कालशब्देन कालवाचकस्य शब्दस्य ग्रहणं भवति।

**उदाहरणम्-** बह्वरत्निः।बह्वरत्निः। बहुमास्यः। बहुमास्यः। बहुकपालः। बहुकपालः। बहुभगालः। बहुभगालः। बहुशरावः। बहुशरावः।।

**सूत्रार्थसमन्वयः-**

बह्वरत्निः- बहवः अरत्नयः प्रमाणम् अस्य इति विग्रहे तद्धितार्थे तद्धितार्थोत्तरपदसमाहारे च इति सूत्रेण द्विगुसमासे बह्वरत्निः इति रूपम्। अत्र पूर्वपदं बहुशब्दः, उत्तरपदं च इगन्तम्। अतः प्रकृतसूत्रेण अत्र पूर्वपदस्य बहुशब्दस्य विकल्पेन प्रकृतिस्वरः भवति। पक्षे अनुदात्तस्वरः भवति। अत्र बहु+अरत्निः इत्यवस्थायां यणादेशे बह्वरत्निः इति भवति। बहुशब्दः अन्तोदात्तः। किन्तु यणादेशत्वात् प्रकृतिस्वरपक्षे उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य इति सूत्रेण स्वरितस्वरः भवति। तस्मात् बह्वरत्निः, बह्वरत्निः इति रूपद्वयं प्राप्यते।

बहुमास्यः- बहून् मासान् भृतः इति विग्रहे तद्धितार्थे द्विगुसमासे यप्प्रत्यये बहुमास्यः इति रूपम्। अत्र बहुशब्दः पूर्वपदम्। उत्तरपदञ्च कालवाचकम्। अतः प्रकृतसूत्रेण अत्र पूर्वपदस्य बहुशब्दस्य विकल्पेन प्रकृतिस्वरः भवति। पक्षे अनुदात्तस्वरः भवति। तेन बहुमास्यः, बहुमास्यः इति रूपद्वयं भवति।

बहुकपालः- बहुषु कपालेषु संस्कृतः इति विग्रहे द्विगुसमासे बहुकपालः इति रूपं भवति। अत्र अन्तोदात्तः बहुशब्दः पूर्वपदम्। उत्तरपदञ्च कपालशब्दः। अतः प्रकृतसूत्रेण अत्र पूर्वपदस्य बहुशब्दस्य



विकल्पेन प्रकृतिस्वरः भवति। पक्षे अनुदात्तस्वरः भवति। तेन बहुकंपालः, बहुकुपालः इति रूपद्वयं भवति।

बहुभगालः- बहुषु भगालेषु संस्कृतः इति विग्रहे द्विगुसमासे बहुभगालः इति रूपम्। अत्र अन्तोदात्तः बहुशब्दः पूर्वपदम्। उत्तरपदञ्च भगालशब्दः। अतः प्रकृतसूत्रेण अत्र पूर्वपदस्य बहुशब्दस्य विकल्पेन प्रकृतिस्वरः भवति। पक्षे अनुदात्तस्वरः भवति। तेन बहुभंगालः, बहुभगालः इति रूपद्वयं भवति।

बहुशरावः- बहुषु शरावेषु संस्कृतः इति विग्रहे द्विगुसमासे बहुशहावः इति रूपम्। अत्र अन्तोदात्तः बहुशब्दः पूर्वपदम्। उत्तरपदञ्च शरावशब्दः। अतः प्रकृतसूत्रेण अत्र पूर्वपदस्य बहुशब्दस्य विकल्पेन प्रकृतिस्वरः अन्तोदात्तः भवति। पक्षे अनुदात्तस्वरः भवति। तेन बहुभंगालः, बहुभगालः इति रूपद्वयं भवति।

## १३.८) कार्तकौजपादयश्च॥ (६.२.३७)

**सूत्रार्थः-** कार्तकौजपादयो ये द्वन्द्वास्तेषु पूर्वपदं प्रकृत्या भवति।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन सूत्रेण प्रकृतिस्वरः विधीयते। अस्मिन् सूत्रे पदद्वयं विराजते। कार्तकौजपादयः इति प्रथमान्तं पदम्। च इत्यव्ययपदम्। राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु इति सूत्रात् द्वन्द्वे इति पदम् अत्र अनुवर्तते। बहुव्रीहौ प्रकृत्या पूर्वपदम् इति सूत्रात् प्रकृत्या इति, पूर्वपदम् इति च पदद्वयम् अनुवर्तते। अतः सूत्रार्थः भवति- कार्तकौजपादीनां द्वन्द्वे पूर्वपदं प्रकृत्या भवति इति। अर्थात् कार्तकौजपादिशब्दानां मध्ये ये द्वन्द्वसमासनिष्पन्नाः तेषां पूर्वपदस्य प्रकृतिस्वरः भवति इत्यर्थः।

**उदाहरणम्-** कार्तकौंजपौ।

**सूत्रार्थसमन्वयः-** कृतस्य अपत्यम् इत्यर्थे कृतशब्दात् अण्प्रत्यये कार्तः इति रूपम्। कुजपस्य अपत्यम् इत्यर्थे कुजपशब्दात् अण्प्रत्यये कौजपः इति रूपम्। शब्दद्वयम् अण्प्रत्ययान्तम्। अतः अन्तोदात्तम्। कार्तश्च कौजपश्च इति विग्रहे द्वन्द्वसमासे कार्तकौजपौ इति रूपम्। द्वन्द्वसमासत्वात् प्रकृतसूत्रेण कार्त इति पूर्वपदम् अन्तोदात्तं भवति।



## पाठगतप्रश्नाः-२

८. विस्पष्टादीनि गुणवचनेषु इति सूत्रेण किं विधीयते?
९. विस्पष्टशब्दः आद्युदात्तः अन्तोदात्तः वा?
१०. कस्मिन् समासे पूर्वपदस्य कुमारशब्दस्य प्रकृतिस्वरः भवति?
११. कुमारश्च इति सूत्रस्य उदाहरणमेकं दीयताम्?
१२. बहुमास्य इत्यत्र पूर्वपदस्य प्रकृतिस्वरत्वं केन सूत्रेण विधीयते?
१३. कार्तकौजपादयश्च इति सूत्रेण किं विधीयते?



१४. कार्त इत्यस्य कः अर्थः?

## १३.९) चतुर्थी तदर्थे(६.२.४३)

**सूत्रार्थः-** चतुर्थ्यन्तार्थाय यत्तद्वाचिन्युत्तरपदे चतुर्थ्यन्तं प्रकृत्या।

**सूत्रव्याख्या-**विधिसूत्रमिदम्। अनेन सूत्रेण प्रकृतिस्वरः विधीयते। अस्मिन् सूत्रे पदद्वयं विराजते। चतुर्थी इति प्रथमान्तं पदम्। तदर्थे इति सप्तम्यन्तं पदम्। बहुव्रीहौ प्रकृत्या पूर्वपदम् इति सूत्रात् प्रकृत्या इति, पूर्वपदम् इति च पदद्वयम् अनुवर्तते। चतुर्थी इति प्रत्ययस्य ग्रहणम्। प्रत्ययग्रहणे तदन्ताः ग्राह्याः इति न्यायेन तदन्तग्रहणे चतुर्थ्यन्तम् इति भवति। अतः सूत्रार्थः भवति चतुर्थ्यन्तं पूर्वपदं तदर्थे उत्तरपदे प्रकृत्या भवति इति। तस्मै इदम् इति तदर्थम्। तच्छब्देनात्र चतुर्थ्यन्तार्थः उच्यते। अतः तदर्थ इत्यस्य चतुर्थ्यन्तार्थाय इदम् इत्यर्थः।

**उदाहरणम्-** यूपदारु।

**सूत्रार्थसमन्वयः-** यूपाय दारु इति विग्रहे यूपदारु इति रूपम्। अत्र यूपाय इति चतुर्थ्यन्तं पदम्। चतुर्थ्यन्तस्य यूप इत्यस्य यः अर्थः सः तच्छब्देन उच्यते। तस्मै यूपाय इदं दारु। अतः दारु इति तदर्थः भवति। एवं यूपदारु इत्यत्र पूर्वपदं यूपाय इति चतुर्थ्यन्तं पदम्। तदर्थः दारु उत्तरपदम्। अतः प्रकृतसूत्रेण यूपदारु इत्यत्र यूप इति पूर्वपदे प्रकृतिस्वरः भवति। यूपशब्दः आद्युदात्तः। अतः यूपदारु इत्यत्र समासे सत्यपि प्रकृतसूत्रेण यूपशब्दः आद्युदात्तः एव तिष्ठति।

**विशेषः-** तदर्थशब्देन अत्र प्रकृतिविकृतिभावः एव गृह्यते। तेन रन्धनाय स्थाली इत्यादौ स्थाली रन्धनस्य तदर्था भवितुं नार्हति यतः अत्र रन्धनस्थाल्योः मध्ये प्रकृतिविकृतिभावः नास्ति।

## १३.१०) अर्थे(६.२.४४)

**सूत्रार्थः-** अर्थशब्दे उत्तरपदे चतुर्थ्यन्तं पूर्वपदं प्रकृत्या भवति।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन सूत्रेण प्रकृतिस्वरः विधीयते। अस्मिन् सूत्रे एकमेव पदम् अस्ति। अर्थे इति सप्तम्यन्तं पदम्। चतुर्थी तदर्थे इति सूत्रात् चतुर्थी इति पदम् अनुवर्तते। बहुव्रीहौ प्रकृत्या पूर्वपदम् इति सूत्रात् प्रकृत्या इति, पूर्वपदम् इति च पदद्वयम् अनुवर्तते। चतुर्थी इति प्रत्ययस्य ग्रहणम्। प्रत्ययग्रहणे तदन्ताः ग्राह्याः इति न्यायेन तदन्तग्रहणे चतुर्थ्यन्तम् इति भवति। अतः सूत्रार्थः भवति - चतुर्थ्यन्तं पूर्वपदं अर्थे उत्तरपदे प्रकृत्या भवति इति।

**उदाहरणम्-** मात्रार्थम्।

**सूत्रार्थसमन्वयः-** मात्रे इदम् इति विग्रहे मात्रार्थम् इति रूपम्। मातृशब्दः अन्तोदात्तः। मात्रार्थम् इत्यत्र अर्थशब्दः उत्तरपदे वर्तते। अतः प्रकृतसूत्रेण मात्रार्थम् इत्यत्र समासे सत्यपि पूर्वपदं मातृशब्दः इति अन्तोदात्तः भवति।



## १३.११) क्ते च(६.२.४५)

**सूत्रार्थः-** क्तान्ते च उत्तरपदे चतुर्थ्यन्तं प्रकृत्या भवति।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन सूत्रेण प्रकृतिस्वरः विधीयते। अस्मिन् सूत्रे पदद्वयम् अस्ति। क्ते इति सप्तम्यन्तं पदम्। च इति अव्ययपदम्। चतुर्थी तदर्थे इति सूत्रात् चतुर्थी इति पदम् अनुवर्तते। बहुव्रीहौ प्रकृत्या पूर्वपदम् इति सूत्रात् प्रकृत्या इति, पूर्वपदम् इति च पदद्वयम् अनुवर्तते। चतुर्थी इति प्रत्ययस्य ग्रहणम्। प्रत्ययग्रहणे तदन्ताः ग्राह्याः इति न्यायेन तदन्तग्रहणे चतुर्थ्यन्तम् इति भवति। क्ते क्तप्रत्यये इत्यर्थः। अत्रापि प्रत्ययग्रहणे तदन्ताः ग्राह्याः इति न्यायेन तदन्तविधौ क्तान्ते इति रूपं भवति। उत्तरपदे इति अध्याहार्यम्। अतः सूत्रार्थः भवति - क्तान्ते उत्तरपदे चतुर्थ्यन्तस्य पूर्वपदं प्रकृत्या भवति इति।

**उदाहरणम्-** गोहि॑तम्। अश्व॑हितम्। मनु॒ष्य॑हितम्। गोर॑क्षितम्। अश्व॑रक्षितम्।

**सूत्रार्थसमन्वयः-** गोभ्यः हितम् इति विग्रहे चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः इति सूत्रेण चतुर्थीतत्पुरुषसमासे गोहितम् इति रूपम्। अत्र पूर्वपदं गवे इति चतुर्थ्यन्तम्। उत्तरपदं च हितम् इति क्तप्रत्ययान्तम्। गोशब्दः अन्तोदात्तः। अतः प्रकृतसूत्रेण गोहितम् इत्यत्र समासे सत्यपि गो इति अस्य प्रकृतिस्वरः भवति। तेन गोशब्दः अन्तोदात्तः एव तिष्ठति।

एवम् अश्व॑हितम्, मनु॒ष्य॑हितम्, गोर॑क्षितम् अश्व॑रक्षितम् इत्यादौ अपि भवति। अश्वशब्दः आद्युदात्तः। मनुष्यशब्दः अन्तस्वरितः।

## १३.१२) कर्मधारयोऽनिष्ठा(६.२.४६)

**सूत्रार्थः-** कर्मधारये समासे क्तान्ते उत्तरपदे अनिष्ठान्तं पूर्वपदं प्रकृत्या भवति।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन सूत्रेण प्रकृतिस्वरः विधीयते। अस्मिन् सूत्रे पदद्वयम् अस्ति। कर्मधारये इति सप्तम्यन्तं पदम्। अनिष्ठा इति प्रथमान्तं पदम्। न निष्ठा इति अनिष्ठा। क्ते च इति सूत्रात् क्ते इति पदम् अनुवर्तते। क्ते इति प्रत्ययः। प्रत्ययग्रहणे तदन्ताः ग्राह्याः इति न्यायेन तदन्तविधौ क्तान्ते इति रूपं भवति। निष्ठा इत्यनेन क्तप्रत्ययस्य क्तवतुप्रत्ययस्य च परामर्शः। क्तक्तवतू निष्ठा इति सूत्रमत्र प्रमाणम्। निष्ठा इति प्रत्ययत्वात् प्रत्ययग्रहणे तदन्ताः ग्राह्याः इति न्यायेन तदन्तविधौ निष्ठान्तम् इति रूपं भवति। अतः अनिष्ठा इत्यस्य अनिष्ठान्तम् इत्यर्थः। बहुव्रीहौ प्रकृत्या पूर्वपदम् इति सूत्रात् प्रकृत्या इति, पूर्वपदम् इति च पदद्वयम् अनुवर्तते। उत्तरपदे इति अध्याहार्यम्। अतः सूत्रार्थः भवति - क्तान्ते उत्तरपदे अनिष्ठान्तस्य पूर्वपदस्य प्रकृतिस्वरः भवति इति।

**उदाहरणम्-** श्रेणि॑कृताः। ऊ॒कक॑कृताः। पू॒गकृ॑ताः।

**सूत्रार्थसमन्वयः-** श्रेणिः च असौ कृतः इति विग्रहे श्रेण्यादयः कृतादिभिः इति सूत्रेण कर्मधारयसमासे बहुवचने श्रेणिकृताः इति रूपम्। अत्र पूर्वपदं श्रेणिशब्दः। श्रेणि इति क्तप्रत्ययान्तमपि नास्ति क्तवतुप्रत्ययान्तमपि नास्ति। अतः पूर्वपदम् अत्र अनिष्ठान्तम्। उत्तरपदं च क्तप्रत्ययान्तम्। अतः

प्रकृतसूत्रेण श्रेणिकृताः इत्यत्र समासे सत्यपि श्रेणिशब्दः प्रकृतिस्वरः भवति। श्रेणिशब्दस्य आद्युदात्तः भवति। तेन श्रेणिकृताः इति रूपं भवति।

एवम् ऊकर्कृताः, पूगकृताः इत्यादौ अपि बोद्धव्यम्। ऊकशब्दः पूगशब्दश्च अन्तोदात्तः।

**विशेषः**- कर्मधारयसमासे एव अनेन सूत्रेण प्रकृतिस्वरः विधीयते। न अन्यत्र। यथा श्रेणिकृताः इत्यत्रैव यदि श्रेण्या कृताः इति विग्रहे तृतीयातत्पुरुषसमासः स्वीक्रियते तर्हि कर्मधारयसमासाभावात् प्रकृतसूत्रेण श्रेणि इति अत्र प्रकृतिस्वरः न भवति।

किञ्च पूर्वपदम् अनिष्ठान्तमेव भवेत्। कृताकृतम् इत्यत्र कृतञ्च तत् अकृतम् इति विग्रहे कर्मधारयसमासे कृताकृतम् इति रूपम्। अत्र कर्मधारयसमासः वर्तते। उत्तरपदं क्तप्रत्ययान्तमपि वर्तते। किन्तु पूर्वपदं निष्ठान्तम्। अतः प्रकृतसूत्रेण कताकृतम् इत्यत्र कृत इति पूर्वपदस्य प्रकृतिस्वरः न भवति।

## १३.१३) तृतीया कर्मणि॥ (६.२.४८)

**सूत्रार्थः**- कर्मवाचिनि क्तान्ते उत्तरपदे तृतीयान्तं पूर्वपदं प्रकृत्या भवति।

**सूत्रव्याख्या**- विधिसूत्रमिदम्। अनेन सूत्रेण प्रकृतिस्वरः विधीयते। अस्मिन् सूत्रे पदद्वयम् अस्ति। तृतीया इति प्रथमान्तं पदम्। कर्मणि इति सप्तम्यन्तं पदम्। क्ते च इति सूत्रात् क्ते इति पदम् अनुवर्तते। क्त इति एकः प्रत्ययः। प्रत्ययग्रहणे तदन्ताः ग्राह्याः इति न्यायेन तदन्तविधौ क्तान्ते इति रूपं भवति। बहुव्रीहौ प्रकृत्या पूर्वपदम् इति सूत्रात् प्रकृत्या इति, पूर्वपदम् इति च पदद्वयम् अनुवर्तते। पूर्वपदसामर्थ्यात् उत्तरपदे इति पदम् अध्याहार्यम्। अतः सूत्रार्थः भवति - कर्मवाचिनि क्तान्ते उत्तरपदे तृतीयान्तस्य पूर्वपदस्य प्रकृतिस्वरः भवति इति।

**उदाहरणम्**- अहिहतः। नखनिर्भिन्नः। दात्रलूनः।

**सूत्रार्थसमन्वयः**- अहिना हतः इति विग्रहे तृतीयातत्पुरुषसमासे अहिहतः इति रूपम्। हन्-धातोः कर्मणि क्तप्रत्यये हतः इति रूपम्। अतः उत्तरपदमत्र कर्मवाचकं क्तप्रत्ययान्तम्। पूर्वपदं च तृतीयान्तम्। अतः प्रकृतसूत्रेण अहिहतः इत्यत्र अहिशब्दः प्रकृतिस्वरः भवति। अहिशब्दः अन्तोदात्तः। अतः अन्तोदात्तः एव तिष्ठति। तेन अहिहतः एवं प्रयोगो भवति।

एवं नखनिर्भिन्नः, दात्रलूनः इत्यादौ अपि बोद्धव्यम्। नखशब्दः अन्तोदात्तः। दात्रशब्दः आद्युदात्तः।



## पाठगतप्रश्नाः-३

१५. चतुर्थी तदर्थे इति सूत्रस्य कः अर्थः?

१६. यूपदारु इत्यस्य विग्रहवाक्यं किम्?

१७. मात्रार्थम् इत्यत्र पूर्वपदं मातृशब्दः केन सूत्रेण अन्तोदात्तः भवति?

१८. मात्रर्थम् इत्यसय विग्रहवाक्यं किम्?



१९. क्तान्ते च उत्तरपदे केन सूत्रेण चतुर्थ्यन्तं प्रकृत्या भवति?

२०. श्रेणिकृताः इत्यत्र कः समासः स्वीक्रियते चेत् पूर्वपदस्य प्रकृतिस्वरत्वं भवति? केन सुत्रेण?

२१. कयोः निष्ठासंज्ञा भवति?

२२. कदा तृतीयान्तं पूर्वपदं प्रकृत्या भवति।?

२३. नखनिर्भिन्नः इत्यत्र पूर्वपदस्य प्रकृतिस्वरत्वं केन सूत्रेण?

## १३.१४) गतिरनन्तरः॥ (६.२.४९)

**सूत्रार्थः-** कर्मवाचिनि क्तान्ते उत्तरपदे गतिरनन्तरः पूर्वपदं प्रकृत्या भवति।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन सूत्रेण प्रकृतिस्वरः विधीयते। अस्मिन् सूत्रे पदद्वयम् अस्ति। गतिः इति प्रथमान्तं पदम्। अनन्तरः इत्यपि प्रथमान्तं पदम्। अनन्तरः इत्यस्य अव्यवहितः इत्यर्थः। तृतीया कर्मणि इति सूत्रात् कर्मणि इत्यनुवर्तते। क्ते च इति सूत्रात् क्ते इति पदम् अनुवर्तते। क्त इति एकः प्रत्ययः। प्रत्ययग्रहणे तदन्ताः ग्राह्याः इति न्यायेन तदन्तविधौ क्तान्ते इति रूपं भवति। बहुव्रीहौ प्रकृत्या पूर्वपदम् इति सूत्रात् प्रकृत्या इति, पूर्वपदम् इति च पदद्वयम् अनुवर्तते। उत्तरपदे इति अध्याहार्यम्। अतः सूत्रार्थः भवति - कर्मवाचिनि क्तान्ते उत्तरपदे गतिरनन्तरः पूर्वपदं प्रकृत्या भवति इति।

**उदाहरणम्-** प्रकृ॑तः। प्रहृ॑तः।

**सूत्रार्थसमन्वयः-** प्रकृतः इत्यत्र कुगतिप्रादयः इति सूत्रेण गतिसमासः जातः। अत्र कृत इति क्तप्रत्ययान्तम् उत्तरपदम्। क्तप्रत्ययः अत्र कर्मणि विहितः। क्तप्रत्ययान्तस्य अव्यवहितं पूर्वपदं प्र इति। प्र इति गतिसंज्ञकः आद्युदात्तश्च। अतः प्रकृतसूत्रेण प्र इति अस्य प्रकृतिस्वरः भवति। तेन आद्युदात्तत्वात् प्रकृ॑तः इत्येवं रूपं भवति। एवं प्रहृ॑तः इत्यत्रापि। समासे सत्यपि प्रकृतः इत्यत्र प्रकृतसूत्रेण प्रकृतिस्वरः अर्थात् अन्तोदात्तः भवति।

## १३.१५) कतरकतमौ कर्मधारये॥ (६.२.५७)

**सूत्रार्थः-** कतरशब्दः कतमशब्दश्च पूर्वपदं कर्मधारये समासे अन्यतरस्यां प्रकृत्या भवति।

**सूत्रव्याख्या-** सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण प्रकृतिस्वरः विधीयते। अस्मिन् सूत्रे पदद्वयं विराजते। कतरकतमौ इति प्रथमान्तं समस्तं पदम्। कतरश्च कतमश्च कतरकतमौ इति द्वन्द्वः। कर्मधारये इति सप्तम्यन्तं पदम्। ईषदन्यतरस्याम् इति सूत्रात् अन्यतरस्याम् इति पदम् अनुवर्तते। बहुव्रीहौ प्रकृत्या पूर्वपदम् इति सूत्रात् प्रकृत्या इति, पूर्वपदम् इति च पदद्वयम् अनुवर्तते। अतः सूत्रार्थः भवति - कर्मधारयसमासे पूर्वपदस्य कतरशब्दस्य कतमशब्दस्य च विकल्पेन प्रकृतिस्वरः भवति इति।

**उदाहरणम्-** क॒त॒र॑कठः। क॒त॒र॒क॒ठः। क॒त॒म॑कठः। क॒त॒म॒क॒ठः।



**सूत्रार्थसमन्वयः-** कतरशब्दः कतमशब्दश्च अन्तोदात्तः। कतरश्चासौ कठः इति विग्रहे कर्मधारयसमासे कतरकठः इति रूपम्। अस्मिन् कर्मधारयसमासे पूर्वपदं कतरशब्दः। अतः प्रकृतसूत्रेण कतरशब्दस्य विकल्पेन प्रकृतिस्वरः भवति। अतः एकस्मिन् पक्षे अन्तोदात्तः भवति, अपरपक्षे च समासान्तः उदात्तः भवति। तेन कतरकठः इति, कतरकठः इति च रूपद्वयं प्राप्यते।

एवं कतमकठः इत्यत्रापि कतमश्चासौ कठः इति विग्रहे कर्मधारयसमासे कतमकठः इति रूपं भवति। अत्रापि पूर्ववत् कतमशब्दस्य प्रकृतसूत्रेण विकल्पेन प्रकृतिस्वरः भवति। तेन कतमकठः इति, कतमकठः इति च रूपद्वयं प्राप्यते।

## १३.१६) आचार्योपसर्जनश्चाऽन्तेवासिनि॥ (६.२.१०४)

**सूत्रार्थः-** आचार्योपसर्जनान्तेवासिवाचिनि उत्तरपदे दिक्छब्दाः पूर्वपदानि अन्तोदात्तानि भवन्ति।

**सूत्रव्याख्या-** सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण अन्तोदात्तस्वरः विधीयते। अस्मिन् सूत्रे पदत्रयं विराजते। आचार्योपसर्जनः इति प्रथमान्तं पदम्। च इत्यव्ययपदम्। अन्तेवासिनि इति सप्तम्यन्तं पदम्। आचार्योपसर्जनः इति अन्तेवासिनि इत्यस्य विशेषणम्। आचार्योपसर्जनः इत्यत्र सप्तम्यर्थे प्रथमा विहिता। उपसर्जनं नाम अप्रधानम्। आचार्यः उपसर्जनम् अप्रधानं यस्य सः आचार्योपसर्जनः। आचार्योपसर्जनश्चासौ अन्तेवासी इति आचार्योपसर्जनान्तेवासी। तद्वाचिनि इत्यर्थः। उत्तरपदे इति अध्याहार्यम्। दिक्शब्दाः ग्रामजनपदाख्यानचानराटेषु इति सूत्रात् दिक्शब्दाः इति पदम् अत्र अनुवर्तते। अन्तः इत्यधिकारः अत्र आगच्छति। आदिरूदात्तः इति सूत्रात् उदात्तः इति पदम् अत्र अनुवर्तते। बहुव्रीहौ प्रकृत्या पूर्वपदम् इति सूत्रात् पूर्वपदम् इति पदम् अत्र अनुवर्तते। तच्च पूर्वपदानि इति बहुवचनान्ततया विपरिणम्यते। अतः सूत्रार्थः भवति आचार्योपसर्जनान्तेवासिवाचिनि उत्तरपदे दिक्शब्दाः पूर्वपदानि अन्तोदात्तानि भवन्ति इति।

**उदाहरणम्-** पूर्वपाणिनीयाः। अपरपाणिनीयाः। पूर्वकाशकृत्स्नाः। अपरकाशकृत्स्नाः।

**सूत्रार्थसमन्वयः-** पूर्वाः च इमे पाणिनीयाः इति विग्रहे पूर्वपाणिनीयाः इति रूपम्। अत्र पूर्वपदं पूर्व इति शब्दः। स च दिग्वाची। अतः दिक्शब्दः अत्र पूर्वपदम्। पाणिनेः आचार्यस्य अन्तेवासिनः इति पाणिनीयाः। अत्र अन्तेवासिनः प्राधान्येन उच्यन्ते आचार्यस्तु तद्विशेषणत्वात् उपसर्जनभावेन उच्यते। एवं पाणिनीयाः इति आचार्योपसर्चनान्तेवासिवाचि उत्तरपदं भवति। तादृशे उत्तरपदे सति पूर्वपदं दिक्शब्दः प्रकृतसूत्रेण अन्तोदात्तः भवति। तस्मात् पूर्वपाणिनीयाः इति रूपं भवति।

एवम् अपरपाणिनीयाः, पूर्वकाशकृत्स्नाः, अपरकाशकृत्स्नाः इत्यादौ अपि बोद्धव्यम्।

## १३.१७) बहुव्रीहौ विश्वं संज्ञायाम्॥ (६.२.१०६)

**सूत्रार्थः-** बहुव्रीहौ विश्वशब्दः पूर्वपदभूतः अन्तोदात्तः स्यात् संज्ञायां सत्याम्।



**सूत्रव्याख्या-** सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण अन्तोदात्तः विधीयते। अस्मिन् सूत्रे पदत्रयं विराजते। बहुव्रीहौ इति सप्तम्यन्तं पदम्। विश्वम् इति प्रथमान्तं पदम्। संज्ञायाम् इति सप्तम्यन्तं पदम्। अत्र विषयसप्तमी इति बोद्धव्यम्। अन्तः इत्यधिकारः अत्र आगच्छति। उदात्तः इति पदम् अत्र अनुवर्तते। बहुव्रीहौ प्रकृत्या पूर्वपदम् इति सूत्रात् पूर्वपदम् इति पदम् अत्र अनुवर्तते। अतः सूत्रार्थः - भवति बहुव्रीहौ समासे संज्ञायां विषये विश्वशब्दः पूर्वपदम् अन्तोदात्तं भवति इति।

**उदाहरणम्-** वि॒श्वदे॑वः। वि॒श्वय॑शाः। वि॒श्वम॑हान्।

**सूत्रार्थसमन्वयः-** विश्वः देवः यस्य इति विग्रहे विश्वदेवः इति रूपम्। अत्र बहुव्रीहिसमासः जातः। विश्वशब्दश्च अत्र पूर्वपदम्। अतः प्रकृतसूत्रेण विश्वशब्दः अन्तोदात्तः भवति। तेन वि॒श्वदे॑वः इत्येवं रूपं भवति।

एवं वि॒श्वय॑शाः, वि॒श्वम॑हान् इत्यादौ अपि बोद्धव्यम्।

**विशेषः-** विश्वदेवाः इत्यादौ यदि विश्वे च ते देवाः इति विग्रहे तत्पुरुषसमासः स्वीक्रियते तर्हि प्रकृतसूत्रेण अत्र विश्वशब्दस्य अन्तोदात्तत्वं न भवति।

## १३.१८) देवताद्वन्द्वे च॥ (६.२.१४१)

**सूत्रार्थः -** देवताद्वन्द्वे युगपत् उभे प्रकृत्या भवतः।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनेन सूत्रेण प्रकृतिस्वरः विधीयते। सूत्रे अस्मिन् पदद्वयम् अस्ति। देवताद्वन्द्वे इति सप्तम्येकवचनान्तं पदम्। देवतानां द्वन्द्वः देवताद्वन्द्वः तस्मिन् देवताद्वन्द्वे इति षष्ठीतत्पुरुषसमासः। देववाचिशब्दानां द्वन्द्वसमासे इत्यर्थः। उभे वनस्पत्यादिषु युगपत् इति इति सूत्रात् उभे इति प्रथमाद्विवचनान्तं पदं युगपत् इति प्रथमैकवचनान्तं पदम् अनुवर्तते। उभे इत्यस्य पूर्वोत्तरपदे इत्यर्थः। बहुव्रीहौ प्रकृत्या पूर्वपदम् इति सूत्रात् प्रकृत्या इति तृतीयान्तं पदम् अनुवर्तते। तेन अस्य सूत्रस्य अर्थः भवति- देवतावाचिनां यः द्वन्द्वसमासः तत्र युगपत् पूर्वोत्तरपदे प्रकृत्या भवतः। अर्थात् पूर्वं यथा स्वरः आसीत् तथा एव भवति इति।

**उदहरणम्-** आ य इन्द्रा॒वरु॑णौ। इन्द्रा॒वृ॒हस्पती॑ व॒यम् इति द्वयम् अस्य सूत्रस्य उदाहरणम्।

**सूत्रार्थसमन्वयः-** इन्द्रा॒वरु॑णौ इत्यत्र देवतावाचकानां द्वन्द्वसमासः अस्ति। इन्द्रश्च वरुणश्च इति अत्र विग्रहः। अतः तयोः यथा पूर्वं स्वरः आसीत् तथा एव भवति। एवं इन्द्रावृहस्पती इत्यपि।



## पाठगतप्रश्नाः-४

२४. गतिरनन्तरः इति सूत्रस्य अर्थः कः?

२५. कतरशब्दः आद्युदात्तः अन्तोदात्तः वा?

२६. आचार्योपसर्जनश्चाऽन्तेवासिनि इत्यत्र उपसर्जनं नाम किम्?



२७. पूर्वपाणिनीयाः इत्यत्र केन सूत्रेण पूर्वशब्दस्य अन्तोदात्तत्वं विधीयते?

२८. कतमकठः इत्यत्र कः समासः?

२९. विश्वशब्दः कदा अन्तोदात्तः भवति?

३०. देवताद्वन्द्वे च इति सूत्रस्य कः अर्थः?



## पाठसारः

पूर्वतनेषु पाठादिषु धातुस्वराः, प्रातिपदिकस्वराः, फिट्-स्वराः, प्रत्ययस्वराश्च अस्माभिः पठिताः सन्ति। प्रकृतपाठे अस्मिन् अस्माभिः समासस्वराः आलोच्यन्ते। यथा समासस्य इत्यनेन शास्त्रेण अन्तः उदात्तः भवति। यथा राजपुरुषः इति समासस्थले अन्त्यस्य अकारस्य उदात्तः विधीयते। अस्माभिः समासादिपाठपठनवेलायां ज्ञातम् अस्ति यत् समासे पूर्वपदम्, उत्तरपदञ्च तिष्ठति। साधारणतया राजपुरुषः इत्यादिस्थले समासस्य इति सूत्रेण अन्त्यस्य इत्युक्ते उत्तरपदस्य अन्तिमस्य अकारस्य उदात्तत्वं विधीयते। तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः इत्यादिसूत्रेण पूर्वपदस्य प्रकृतिस्वरः विधीयते। प्रकृतिस्वरः इत्युक्ते समासभवनात् प्राक् यः स्वाभाविकः स्वरः आसीत्, समासकरणात् परमपि स एव स्वरः तिष्ठति। तत्पुरुषसमासे पूर्वपदं यदि तुल्यार्थवाचकं, तृतीयान्तं, सप्तम्यन्तं, उपमानवाचकम्, अव्ययं, कृत्यप्रत्ययान्तं वा भवति तर्हि पूर्वपदं प्रकृत्या भवति। यथा तुल्यश्वेतः इति। तुल्यशब्दस्य समासात् प्राक् आद्युदात्तत्वं यथा आसीत् तथैव समासकरणात् परमपि आद्युदात्तत्वमेव भवति। वा भुवनम्, पूर्वे भूतपूर्वे इत्यादीनि सूत्राणि पूर्वपदस्य विकल्पेन प्रकतिस्वरः विधीयते। देवताद्वन्द्वे युगपत् उभे प्रकृत्या भवतः। अर्थात् देवतावाचिनां द्वन्द्वे समासे पूर्वपदम् उत्तरपदञ्च उभौ प्रकृत्या भवतः। इन्द्रावरुणौ इत्यत्र देवतावाचकानां द्वन्द्वसमासः अस्ति। इन्द्रश्च वरुणश्च इति अत्र विग्रहः। अतः तयोः (पूर्वपदोत्तपदयोः) यथा पूर्वं स्वरः आसीत् तथा एव समासात् परम् अपि भवति।



## पाठान्तप्रश्नाः-

इमानि सूत्राणि व्यख्यात-

१. तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः

२. कुमारश्च

३. बह्वन्यतरस्याम्

४. कार्तकौजपादयश्च

५. चतुर्थी तदर्थे

६. कर्मधारयोऽनिष्ठा



७. गतिरनन्तरः

८. आचार्योपसर्जनश्चाऽन्तेवासिनि



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. समासस्य अन्तः उदात्तः भवति?

२. तुल्यशब्दः आद्युदात्तः।?

३. अक्षशौण्डः इत्यस्य विग्रहवाक्यं अक्षेषु शौण्डः इति।

४. भौज्योष्णम् इत्यत्र पूर्वपदस्य प्रकृतिस्वरत्वं तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः इति सूत्रेण विधीयते?

५. वा भुवनम् इति सूत्रस्य अर्थः ऐश्वर्ये अर्थे तत्पुरुषे पत्यौ उत्तरपदे भुवनं पूर्वपदं वा प्रकृत्या स्यात् इति।

६. भुवनपतिः इत्यत्र भुवनशब्दः आद्युदात्तः?

७. पूर्वे भूतपूर्वे इति सूत्रेण पूर्वशब्दे उत्तरपदे भूतपूर्वे अर्थे तत्पुरुषे पूर्वपदस्य प्रकृतिस्वरत्वं विधीयते?

**उत्तराणि-२**

८. विस्पष्टादीनि गुणवचनेषु इति सूत्रेण गुणवचनेषूत्तरपदेषु विस्पष्टादिनां पूर्वपदानां प्रकृतिस्वरत्वं विधीयते?

९. विस्पष्टशब्दः आद्युदात्तः।

१०. कर्मधारयसमासे कुमारशब्दः पूर्वपदं प्रकृत्या भवति?

११. कुमारश्च इतिसूत्रस्य उदाहरणमेकं भवति कुमारश्रमणा इति।

१२. बहुमास्य इत्यत्र पूर्वपदस्य प्रकृतिस्वरत्वं बह्वन्यतरस्याम् इति सूत्रेण विधीयते?

१३. कार्तकौजपादयश्च इति सूत्रेण कार्तकौजपादयो ये द्वन्द्वास्तेषु पूर्वपदस्य प्रकृतिस्वरत्वं विधीयते?

१४. कृतस्य अपत्यम् इति कार्तः।

**उत्तराणि-३**

१५. चतुर्थी तदर्थे इति सूत्रस्य चतुर्थ्यन्तार्थाय यत्तद्वाचिन्युत्तरपदे चतुर्थ्यन्तं प्रकृत्या भवति इत्यर्थः?

१६. यूपदारु इत्यस्य विग्रहवाक्यं भवति यूपाय दारु इति।

१७. मात्रार्थम् इत्यत्र पूर्वपदं मातृशब्दः अर्थे इति सूत्रेण अन्तोदात्तः भवति?

१८. मात्रर्थम् इत्यसय विग्रहवाक्यं भवति मात्रे इदम् इति।



१९. क्तान्ते च उत्तरपदे क्ते च इति सूत्रेण?

२०. श्रेणिकृताः इत्यत्र कर्मधारयसमासः स्वीक्रियते चेत् पूर्वपदस्य प्रकृतिस्वरत्वं भवति? कर्मधारयोऽनिष्ठा इति सुत्रेण?

२१. क्तप्रत्ययस्य क्तवतुप्रत्ययस्य च निष्ठासंज्ञा भवति।

२२. कर्मवाचिनि क्तान्ते उत्तरपदे तृतीयान्तं पूर्वपदं प्रकृत्या भवति।

२३. नखनिर्भिन्नः इत्यत्र पूर्वपदस्य प्रकृतिस्वरत्वं तृतीया कर्मणि इति सूत्रेण?

**उत्तराणि-४**

२४. गतिरनन्तरः इति सूत्रस्य अर्थः भवति कर्मवाचिनि क्तान्ते उत्तरपदे गतिरनन्तरः पूर्वपदं प्रकृत्या भवति इति।

२५. कतरशब्दः अन्तोदात्तः।

२६. आचार्योपसर्जनश्चाऽन्तेवासिनि इत्यत्र उपसर्जनं नाम अप्रधानम्।

२७. पूर्वपाणिनीयाः इत्यत्र आचार्योपसर्जनश्चाऽन्तेवासिनि इति सूत्रेण पूर्वशब्दस्य अन्तोदात्तत्वं विधीयते?

२८. कतमकठः इत्यत्र कर्मधारयसमासः?

२९. बहुव्रीहौ विश्वशब्दः पूर्वपदभूतः संज्ञायाम् अन्तोदात्तः भवति।

३०. देवताद्वन्द्वे युगपत् उभे प्रकृत्या भवतः इत्यर्थः।

।।इति त्रयोदशः पाठः।।



# १४

# तिङन्तस्वरः

## प्रस्तावना

संस्कृतव्याकरणजगति वैदिकव्याकरणं लौकिकव्याकरणं च विद्यते। वैदिकसाहित्ये वैदिकव्याकरणम् अत्यन्तं प्रमुखतां भजते। तत्र च स्वरप्रकरणम् अतीव रम्यम्। स्वरप्रकरणे प्रकृतिप्रत्यययोः स्वरविषये चर्चा विहिता। पूर्वतनेषु पाठेषु अस्माभिः प्रातिपदिकस्वराः, धातुस्वराः, समासस्वराः, फिट्-स्वराः, प्रत्ययस्वराः आलोचिताः सन्ति। ततः पाठे अस्मिन् तिङन्तस्वरम् अवलम्ब्य विस्तरेण आलोचितम्। तिङ्प्रत्ययः येषाम् अन्ते अस्ति, तानि तिङन्तपदानि। यथा- भवति, गच्छति, बभूव इत्यादीनि पदानि। अस्मिन् प्रकरणे तिङन्तपदानां कः स्वरविशेषः इति आलोच्यः विषयः अस्ति। तिङन्ते स्वरविषयकानि सूत्राणि सम्यक् आलोचितानि। उदहरणसङ्गतिः च प्रदर्शिता। ततः तिङन्ते स्वरनिषेधविधायकानि सूत्राणि अपि आलोचितानि।



## उद्देश्यानि

इमं पाठं पठित्वा भवान्-

- तिङन्तस्वरविषये विस्तरेण ज्ञातुं पारयेत्।
- तिङन्तस्वरविधायकानां सूत्राणां व्याख्यानं लिखितुं समर्थः पारयेत्।
- तिङन्तस्वरनिषेधविधायकानि सूत्राणि ज्ञातुं शक्नुयात्।
- तिङन्ते कदा स्वरस्य परिवर्तनं भवति इति विषये ज्ञातुं शक्नुयात्।
- कस्य अव्ययस्य योगे कः स्वरः भवति इति विषये ज्ञातुं शक्नुयात्।

## १४.१) तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः॥ (८.१.२७)

**सूत्रार्थः** - तिङन्तात् पदाद् गोत्रादीनि अनुदात्तानि भवन्ति कुत्सनाभीक्ष्ण्ययोः गम्यमानयोः।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनुदात्तस्वरः अनेन सूत्रेण विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। तिङः इति पञ्चम्यन्तं पदम्। गोत्रादीनि इति प्रथमान्तं पदम्। कुत्सनाभीक्ष्ण्ययोः इति सप्तम्यन्तं पदम्। कुत्सना इत्यस्य निन्दा इत्यर्थः। आभीक्ष्ण्यम् इत्यस्य पुनः पुनः इत्यर्थः। पदात् इति सूत्रम् अधिक्रियते। अनुदात्तानि इति प्रथमाबहुवचनान्तं पदम् अनुवर्तते। तिङः इति पदं पदात् इत्यस्य विशेषणम्। अतः तदन्तविधिना तिङन्तात् पदात् इत्यर्थलाभः। अतः सूत्रस्यास्य अर्थः भवति- तिङन्तात्



पदात् पराणि गोत्रादीनि अनुदात्तानि भवन्ति कुत्सनाभीक्ष्ण्ययोः गम्यमानयोः इति। गोत्रादिगणे गोत्र ब्रुव प्रवचन प्रहसन प्रयतन पवन यजन प्रकथन प्रत्यायन प्रचक्षण विचक्षण अवचक्षण स्वाध्याय भूयिष्ठा इत्यादयः शब्दाः पठिताः। अतः सूत्रस्य अस्य अर्थः भवति- तिङन्तात् पदात् पराणि एतानि गोत्रादीनि शब्दस्वरूपाणि अनुदात्तानि भवन्ति कुत्सनाभीक्ष्ण्यार्थयोः गम्यमानयोः इति।

**उदाहरणम्-** कुत्सनार्थे अस्य सूत्रस्य उदाहरणं हि-पचति गोत्रम्। आभीक्ष्ण्ये उदाहरणं तावत् पचति पचति गोत्रम् इति सूत्रस्य अस्य द्वे उदाहरणे।

**सूत्रार्थसमन्वयः-** पचति गोत्रम् इत्यत्र तिङन्तात् परं गोत्रशब्दः विद्यते। वाक्यात् निन्दा अपि अवगम्यते। अतः प्रकृतसूत्रेण गोत्रशब्दस्य अनुदात्तत्वं भवति। स्वकुलं ताडयति इत्यर्थः। पचति पचति गोत्रम् इत्यत्र तिङन्तात् परं गोत्रशब्दः विद्यते। अत्र वाक्यात् आभीक्ष्ण्यम् अवगम्यते। अतः प्रकृतसूत्रेण गोत्रशब्दस्य अनुदात्तत्वं भवति। विवाहादौ पुनः पुनः सुखीकरोति इत्यर्थः।

## १४.२) तिङ्ङतिङः॥ (८.१.२९)

**सूत्रार्थः -** अतिङन्तात् पदात् परं तिङन्तं सर्वम् अनुदात्तं भवति।

**सूत्रव्याख्या -** इदं विधिसूत्रम्। अनेन सूत्रेण अनुदात्तस्वरः विधीयते। द्विपदात्मकं सूत्रमिदम्। तिङ् अतिङः इति सूत्रगतपदच्छेतः। तिङ् इति प्रथमान्तं पदम्। अतिङः इति पञ्चम्यन्तं पदम्। पदात् इति सूत्रमनुवर्तते। सर्वम् इति प्रथमान्तम् अपदादौ इति सप्तम्यन्तं पदं च अनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तमिति लाभः। अतिङः इति पदं पदात् इत्यस्य विशेषणम्। अतः तदन्तविधिना अतिङन्तात् पदात् इत्यर्थः लभ्यते। अनुदात्तम् इति प्रथमान्तम् अनुवर्तते। तेन सूत्रस्यास्य अर्थः भवति- अतिङन्तात् पदात् परस्थितम् अपदादौ यत् तिङन्तम् तत् सर्वम् अनुदात्तं भवति इति।

**उदाहरणम्-** अ॒ग्निमी॑ळे इति सूत्रस्य अस्य एकमुदाहरणम्।

**सूत्रार्थसमन्वयः-** अग्निम् ईळे इति उदाहरणम् अस्ति। अग्निः इति अतिङन्तात् परं तिङन्तम् ईळे इति पदं वर्तते। अतः प्रकृतसूत्रेण अपदादौ स्थितम् ईळे इति पदं सर्वम् अनुदात्तं भवति।

## १४.३) अङ्गाऽप्रातिलोम्ये॥ (८.१.३३)

**सूत्रार्थः -** अङ्गेत्यनेन युक्तं तिङन्तम् अनुदात्तं न भवति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनेन सूत्रेण अनुदात्तस्वरस्य निषेधः विधीयते। द्विपदात्मकं सूत्रम् इदम्। अङ्ग इति अव्ययपदम्। अप्रातिलोम्ये इति सप्तम्यन्तं पदम्। न प्रातिलोम्यम् अप्रातिलोम्यं तस्मिन् अप्रातिलोम्ये इति नञ्तत्पुरुषसमासः। अप्रातिलोम्ये इत्यस्य अभिमतकारित्वे इत्यर्थः। पदात् इति अधिकृतं पञ्चम्यन्ततया विपरिणम्यते। न इति अव्ययपदम् अनुवर्तते। तिङ्ङतिङः इति सुत्रात् तिङ् इति प्रथमान्तम् अनुवर्तते। तिङ् इति प्रत्ययः अस्ति। अतः प्रत्ययग्रहणपरिभाषया तिङन्तं पदम् इत्यर्थः लभ्यते। अतः अङ्ग इत्यनेन युक्तं तिङन्तम् अनुदात्तं न भवति इत्यर्थः समायाति।

**उदाहरणम्-** अङ्ग कुरु इति सूत्रस्य अस्य एकमुदाहरणम्।



**सूत्रार्थसमन्वयः-** अत्र अङ्ग इत्यनेन युक्तं कुरु इति तिङन्तम् अस्ति। कृधातोः परस्मैपदिनः लोटि मध्यमपुरुषैकवचने कुरु इति रूपम्। अतः अङ्ग इत्यव्ययेन युक्तं कुरु इति तिङन्तम् अनुदात्तं न भवति।

## १४.४) हि च॥ (८.१.३४)

**सूत्रार्थः -** हियुक्तं तिङन्तं नानुदात्तं भवति। अप्रातिलोम्यार्थे हिशब्देन युक्तं तिङन्तम् अनुदात्तं न भवति इत्यर्थः।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनेन सूत्रेण अनुदात्तस्वरस्य निषेधः विधीयते। द्विपदात्मकमिदं सूत्रम्। हि इति अव्ययम्। च इत्यपि अव्ययपदम्। अङ्गप्रातिलोम्ये इति सूत्रात् अप्रातिलोम्ये इति सप्तम्यन्तं पदम् अनुवर्तते। न प्रातिलोम्यम् अप्रातिलोम्यं, तस्मिन् अप्रातिलोम्ये इति नञ्तत्पुरुषसमासः। अप्रातिलोम्ये इत्यस्य अभिमतकारित्वे इत्यर्थः। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं पदमनुवर्तते। अनुदात्तम् इति प्रथमान्तं न इति अव्ययपदं च अनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तम् इति लाभः। एवञ्च हियुक्तं तिङन्तम् अनुदात्तं न भवति अप्रातिलोम्ये इति सूत्रार्थः समायाति।

**उदाहरणम्-** आ हि ष्मा यार्ति इति सूत्रस्य अस्य एकमुदाहरणम्।

**सूत्रार्थसमन्वयः-** याति इति हिशब्दयुक्तं तिङन्तम् अस्ति। अतः तस्मात् परस्य यार्ति इति अनुदात्तं न भवति।



## पाठगतप्रश्नाः-१

१. कुत्सनीभीक्ष्ण्ययोः गम्यमानयोः गोत्रादीनि केन सूत्रेण अनुदात्तानि भवन्ति।
२. तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः इति सूत्रस्य कुत्सनार्थे किम् उदाहरणम्।
३. अग्निमींळे इत्यत्र केन सर्वम् अनुदात्तं भवति।
४. तिङ्ङतिङः इति सूत्रस्य अर्थं लिखत।
५. अङ्ग कुरु इति कस्य सूत्रस्य उदाहरणम्।
६. हि च इत्यत्र हि इति किम्।
७. हिशब्दयुक्तं तिङन्तं कथम् अनुदात्तं न भवति।

---

## १४.५) छन्दस्यनेकमपि साकाङ्क्षम्॥ (८.१.३५)

**सूत्रार्थः -** हीत्यनेन युक्तं साकाक्षमनेकमपि तिङन्तं नानुदात्तं भवति छन्दसि।



**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनेन सूत्रेण अनुदात्तस्वरस्य निषेधः विधीयते। चतुष्पदात्मकमिदं सूत्रम्। छन्दसि अनेकम् अपि साकाक्षम् इति सूत्रगतपदच्छेदः। छन्दसि इति सप्तम्यन्तं पदम्। अनेकम् इति प्रथमान्तं पदम्। अपि इति अव्ययपदम्। साकाक्षमिति प्रथमान्तं पदम्। हि च इति सूत्रात् हि इति अव्ययपदमनुवर्तते। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं पदमनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तमिति लाभः। न, अनुदात्तम् इति पदद्वयमनुवर्तते। एवञ्च हिशब्दयुक्तं परस्परसाकाङ्क्षम् अनेकमपि तिङन्तम् अनुदात्तं न भवति वेदे इति सूत्रार्थः जायते।

**उदाहरणम्-** अनृतं हि मत्तो वदति पाप्मा चैनं युनाति इति सूत्रस्य अस्य एकमुदाहरणम्।

**सूत्रार्थसमन्वयः-** अत्र वदति इति युनाति इति द्वयं तिङन्तं हिशब्देन युक्तमस्ति। अपि च तिङन्तं परस्परं साकाङ्क्षमस्ति। अतः अत्र तिङन्तम् अनुदात्तं न भवति।

## १४.६) उपसर्गव्यपेतं च॥ (८.१.३८)

**सूत्रार्थः** - यावत्-यथाभ्याम् युक्तम् उपसर्गव्यपेतं तिङ् न अनुदात्तं पूजायाम्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनेन सूत्रेण अनुदात्तस्वरस्य निषेधः विधीयते। उपसर्गव्यपेतम् इति प्रथमान्तं पदम्। तस्य च उपसर्गेण व्यवहितम् इत्यर्थः। च इति अव्ययपदम्। यावद्यथाभ्यामिति सूत्रमनुवर्तते। यावत् च यथा च यावद्यथे ताभ्यामिति यावद्यथाभ्याम् इति द्वन्द्वसमासः। पूजायां नान्तरम् इति सूत्रात् पूजायाम् इति सप्तम्यन्तं नान्तरम् इति प्रथमान्तं पदद्वयमनुवर्तते। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं पदमनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तमिति लाभः। न, अनुदात्तं पदद्वयमनुवर्तते। अतः यावद्यथाभ्यां युक्तम् उपसर्गव्यवहितं तिङन्तं न अनुदात्तं पूजायाम् इति सूत्रार्थः समायाति। अर्थात् तिङन्तशब्दस्य उपसर्गव्यवधाने सत्यपि यावद्यथाभ्यां योगे तिङन्तम् अनुदात्तत्वं न भवति पूजायां गम्यमानायाम्।

**उदाहरणम्-** यावत् प्रपचति शोभनम् इति अस्य सुत्रस्य एकमुदाहरणम्।

**सूत्रार्थसमन्वयः-** अत्र यावत्-शब्देन युक्तं प्रपचति इति तिङन्तं प्र-इति उपसर्गव्यवहितम् अस्ति। अत्र पूजायां नानन्तरम् इति सूत्रेण पचति इति तिङन्तस्य अनुदात्तत्वं न निषिध्यते। तस्मात् प्रकृतसूत्रेण तस्य अनुदात्तत्वं निषिध्यते।

## १४.७) तुपश्यपश्यताहैः पूजायाम्॥ (८.१.३९)

**सूत्रार्थः** - तुपश्यपश्यताहैः युक्तं तिङन्तं पूजायाः विषये न अनुदात्तम्।।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनेन सूत्रेण अनुदात्तस्वरस्य निषेधः विधीयते। तुपश्यपश्यताहैः इति तृतीयान्तं पदम्। तुश्च पश्यश्च पश्यताः च अहः च इति तुपश्यपश्यताहाः तैः तुपश्यपश्यताहैः इति द्वन्द्वसमासः। पूजायाम् इति सप्तम्यन्तं पदम्। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं पदमनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तमिति लाभः। न अनुदात्तम् इति पदद्वयमनुवर्तते।



अतः अस्य सूत्रस्य अर्थः भवति- तुपश्यपश्यताहैः शब्दैः युक्तं तिङन्तं पदम् अनुदात्तं न भवति पूजायां गम्यमानायाम् इति।

**उदाहरणम्-** आदहं स्वधाम तु पुनर्गर्भस्तु मेरिरे इति सूत्रस्य अस्य उदाहरणम्।

**सूत्रार्थसमन्वयः-** अत्र मेरिरे इति तिङन्तं पदम् अस्ति। तुशब्देन अहशब्देन वा युक्तम् अस्ति। पूजा अपि अत्र अवगम्यते। अतः प्रकृतसूत्रेण तिङन्तम् अनुदात्तं न भवति।

## १४.८) शेषे विभाषा॥ (८.१.४१)

**सूत्रार्थः** - अहो इत्यनेन युक्तं तिङन्तं विकल्पेन न अनुदात्तम् अपूजायाम्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। शेषे इति सप्तम्यन्तं पदम्। विभाषा इति प्रथमान्तं पदम्। अहो च इति सूत्रात् अहो इति ओदन्तम् अव्ययपदम् अनुवर्तते। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं पदम् अनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तमिति लाभः। न,अनुदात्तम् इति पदम् अनुवर्तते। पूजायाम् इति सप्तम्यन्तं पदम् अनुवर्तते। अतः अस्य सूत्रस्य अर्थः भवति- अहो इत्यनेन अव्ययेन युक्तं तिङन्तं विकल्पेन अनुदात्तं न भवति अपूजायां गम्यमानायाम् इति।

**उदाहरणम्-** अहो कटं करिष्यति।

**उदाहरणसमन्वयः-** अत्र करिष्यति इति तिङन्तं पदम् अस्ति। अहो इति अव्ययेन युक्तमपि अस्ति। किञ्च पूजाभिन्नः अर्थः अवगम्यते। अतः प्रकृतसुत्रेण करिष्यति इति तिङन्तम् अनुदात्तं न भवति।



## पाठगतप्रश्नाः-२

८. छन्दस्यनेकमपि साकाङ्क्षम् इति सूत्रस्य कः अर्थः।
९. उपसर्गव्यपेतं च इति सूत्रस्य उदाहरणं लिखत।
१०. तुपश्यपश्यताहैः युक्तं तिङन्तं पूजायाः विषये न अनुदात्तं भवति केन सूत्रेण।
११. अहो इत्यव्ययेन युक्तं तिङन्तं केन अनुदात्तं न भवति।
१२. शेषे विभाषा इति सूत्रस्य कः अर्थः।
१३. शेषे विभाषा इति सूत्रस्य एकमुदाहरणं दीयताम्।

## १४.९) लोपे विभाषा॥ (८.१.४५)

**सूत्रार्थः** - किमः लोपे सति क्रियाप्रश्ने अनुपसर्गम् अप्रतिषिद्धं तिङन्तं विकल्पेन अनुदात्तं न भवति।



**सूत्रव्याख्या-** इदं विधिसूत्रम्। द्विपदात्मके अस्मिन् सूत्रे लोपे इति सप्तम्यन्तं पदम्। विभाषा इति प्रथमान्तं पदम्। किं

क्रियाप्रश्ने अनुपसर्गम् अप्रतिषिद्धम् इति सम्पूर्णं सूत्रम् अनुवर्तते। किम् इति प्रथमान्तं पदम्। क्रियाप्रश्ने इति सप्तम्यन्तं पदम्। अनुपसर्गम् इति प्रथमान्तं पदम्। अप्रतिषिद्धम् इति प्रथमान्तं पदम्। निषिद्धं प्रतिषिद्धम् इति अप्रतिषिद्धम्। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं पदम् अनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तमिति लाभः। न, अनुदात्तम् इति पदद्वयम् अनुवर्तते। तेन सूत्रार्थः भवति- क्रियाप्रश्ने किमः लोपे सति अनुपसर्गम् अप्रतिषिद्धं तिङन्तं विकल्पेन अनुदात्तं न भवति इति।

**उदाहरणम्-** देवदत्तः पचत्याहोस्वित् पठति।

**सूत्रार्थसमन्वयः-** अत्र पठति पचति इति तिङन्तं पदम्। क्रियाप्रश्ने अर्थे विद्यमानस्य किम्शब्दस्य लोपः जातः। पठति इति तिङन्तं च अत्र उपसर्गरहितम् अप्रतिषिद्धं अस्ति। अतः प्रकृतसूत्रसामर्थ्यात् पचति इति तिङन्तं विकल्पेन अनुदात्तं न भवति।

## १४.१०) किंवृत्तं च चिदुत्तरम्॥ (८.१.४८)

**सूत्रार्थः -** अविद्यमानपूर्वं चिदुत्तरं यत्किंवृत्तं तेन युक्तं तिङन्तम् अनुदात्तं न भवति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनुदात्तस्वरस्य निषेधः सूत्रेण अनेन विधीयते। किंवृत्तम् इति प्रथमैकवचनान्तं पदम्। किम्शब्दस्य वृत्तम् इति किंवृत्तम्। च इति अव्ययपदम्। चिदुत्तरम् इति प्रथमैकवचनान्तं पदम्। चिच्छब्दः उत्तरं यस्मात् तत् चिदुत्तरम् इति बहुव्रीहिसमासः। जात्वपूर्वम् इति पूर्वसूत्रात् अपूर्वम् इति प्रथमैकवचनान्तं पदम् अनुवर्तते। अपूर्वम् इत्यस्य अविद्यमानपूर्वम् इत्यर्थः। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं पदम् अनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तमिति लाभः। न इति अव्ययपदम्, अनुत्तमम् इति प्रथमैकवचनान्तं पदम् अनुवर्तते। अतः अपूर्वम् चिदुत्तरं किंवृत्तं तिङन्तं न अनुदात्तम् इति सूत्रान्वयः। तेन सूत्रस्य अस्य अर्थः भवति- अविद्यमानपूर्वं चिदुत्तरं यत् किंवृत्तं तेन युक्तं तिङन्तम् अनुदात्तं न भवति इति। अर्थात् यस्मात् किम्शब्दात् पूर्वं किमपि पदं नास्ति। परं च चिच्छब्दः विद्यते। तादृशकिंवृत्तशब्देन युक्तं तिङन्तम् अनुदात्तं न भवति इति।

**उदाहरणम्-** कश्चिद् भुङ्क्ते इति सूत्रस्य एकमुदाहरणम्।

**सूत्रार्थसमन्वयः-** अत्र यः किम्शब्दः वर्तते। तस्मात् पूर्वं किमपि पदं नास्ति। परं च चिच्छब्दः विद्यते। तद्युक्तं तिङन्तं च भुङ्क्ते इति। अतः प्रकृतसूत्रेण तत् तिङन्तम् अनुदात्तं न भवति।

## १४.११) आहो उताहो चानन्तरम्॥ (८.१.४९)

**सूत्रार्थः -** आहो उताहो इत्येताभ्यां युक्तं तिङन्तम् अनुदात्तं न भवति।



**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनेन सूत्रेण अनुदात्तस्वरस्य निषेधः विधीयते। चतुष्पदात्मकमिदं सूत्रम्। आहो इति अव्ययपदम्। उदाहो इति अव्ययपदम्। च इत्यपि अव्ययपदम्। अनन्तरम् इति प्रथमैकवचनान्तं पदम्। न अन्तरम् अनन्तरम् इति नञ्तत्पुरुषसमासः। जात्वपूर्वम् इति पूर्वसूत्रात् अपूर्वम् इति प्रथमैकवचनान्तं पदम् अनुवर्तते। अपूर्वम् इत्यस्य अविद्यमानपूर्वम् इत्यर्थः। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं पदम् अनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तमिति लाभः। न इति अव्ययपदम्, अनुत्तमम् इति प्रथमैकवचनान्तं पदम् अनुवर्तते। तेन अस्य सूत्रस्य अर्थः भवति- आहो उताहो इत्याभ्याम् अविद्यमानपूर्वाभ्यां युक्तम् अनन्तरं तिङन्तम् अनुदात्तं न भवति इति। अर्थात् पूर्वं किमपि पदं नास्ति ययोः, एतादृशाभ्याम् आहो उताहो इत्यव्ययाभ्यां युक्तं तिङन्तम् अनुदात्तं न भवति इति।

**उदाहरणम्-** आहो उताहो वा भुङ्क्ते इति सूत्रस्य अस्य एकमुदाहरणम्।

**सूत्रार्थसमन्वयः-** अस्मिन् उदाहरणे आहो उताहो इति अव्ययद्वयं विद्यते। तयोः पूर्वं च किमपि पदं नास्ति। किञ्च भुङ्क्ते इति तिङन्तम् आहो उताहो इत्याभ्याम् अव्ययाभ्यां युक्तम् अस्ति। अतः प्रकृतसूत्रेण भुङ्क्ते इति तिङन्तम् अनुदात्तं न भवति।

## १४.१२) शेषे विभाषा॥ (८.१.५०)

**सूत्रार्थः -** आभ्यां युक्तं व्यवहितं तिङन्तं विकल्पेन अनुदात्तं भवति।

**सुत्रव्याख्या-** इदं विधिसूत्रम्। विकल्पेन अनुदात्तस्वरः अनेन सुत्रेण विधीयते। द्विपदात्मकमिदं सूत्रम्। शेषे इति सप्तम्यन्तं पदम्। शेषे इत्यस्य च अनन्तरभिन्ने इत्यर्थः। विभाषा इति प्रथमान्तं पदम्। आहो उताहो चानन्तरम् इति सूत्रात् आहो उताहो इति अव्ययपदद्वयम् अनुवर्तते।जात्वपूर्वम् इति सूत्रात् अपूर्वम् इति प्रथमान्तं सुबन्तं पदम् अनुवर्तते। अपूर्वम् इत्यस्य अविद्यमानपूर्वेण इत्यर्थः। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं सुबन्तं पदम् अनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तम् इति पदलाभः भवति। न अनुदात्तम् इति पदद्वयम् अनुवर्तते। तेन आहो उताहो इत्येताभ्याम् अपूर्वाभ्यां युक्तं तिङन्तं शेषे विकल्पेन अनुदात्तं भवति इति सूत्रार्थः समायाति। अर्थात् आहो उताहो इत्याभ्यां युक्तमपि व्यवहितं तिङन्तं विकल्पेन अनुदात्तं भवति इति फलितार्थः।

**उदाहरणम्-** आहो देवः पचति इति अस्य सूत्रस्य एकमुदाहरणम्।

**सूत्रार्थसमन्वयः-** अस्मिन् उदाहरणे पचति इति तिङन्तं पदम् अस्ति। आहो इत्यव्ययेन युक्तम् अस्ति। किञ्च तिङन्तपदं व्यवहितम् अस्ति। अतः प्रकृतसूत्रेण विकल्पेन अनुदात्तं भवति।

## १४.१३) गत्यर्थलोटा लृण्ण चेत्कारकं सर्वान्यत्॥ (८.१.५१)

**सूत्रार्थः -** गत्यर्थानां लोटा युक्तं तिङन्तम् अनुदात्तं न भवति, यत्रैव कारके लोट् तत्रैव लृट् अपि चेत्।



**सूत्रव्याख्या**- इदं विधिसूत्रम्। सूत्रेण अनेन अनुदात्तस्वरस्य निषेधः विधीयते। षट्पदात्मकमिदं सूत्रम्। गत्यर्थलोटा लृट् न चेत् कारकं सर्वान्यत् इति सूत्रगतपदच्छेदः। गत्यर्थलोटा इति तृतीयैकवचनान्तं पदम्। लृट् इति प्रथमैकवचनान्तं पदम्। न इति अव्ययपदम्। चेत् इति अव्ययपदम्। कारकम् इति प्रथमैकवचनान्तं पदम्। सर्वान्यत् इति प्रथमैकवचनान्तं पदम्। गतिः अर्थः यस्य सः गत्यर्थः इति बहुव्रीहिसमासः। गत्यर्थः अर्थः यस्य इति गत्यर्थः इति शाकपार्थिवादिवत्समासः। गत्यर्थः चासौ लोट् च इति गत्यर्थलोट्, तेन गत्यर्थलोटा इति कर्मधारयसमासः। गत्यर्थलोटा युक्तम् इत्यर्थः। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं सुबन्तं पदम् अनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तम् इति पदलाभः भवति। न इति अव्ययम्, अनुदात्तम् इति प्रथमैकवचनान्तं पदद्वयम् अनुवर्तते। तेन सूत्रस्य अस्य अर्थः भवति- गत्यर्थलोटा युक्तं लृडन्तं यत् तिङन्तं तत् अनुदात्तं न भवति यत्रैव कारके लोट् तत्रैव लृडपि चेत् इति। अर्थात् यस्मिन् स्थले कर्तरि कर्मणि वा लोट् भवति तस्मिन्नेव स्थले यदि लृट् भवेत् तर्हि गत्यर्थलोटा युक्तं तिङन्तम् अनुदात्तं न भवति इति।

**उदाहरणम्**- आगच्छ देव ग्रामं द्रक्ष्यसि एनम् इति अस्य सूत्रस्य एकमुदाहरणम्।

**सूत्रार्थसमन्वयः**- अत्र कर्तरि लोट्लकारः अस्ति। तस्मिन्नेव अर्थे लृट्लकारः अस्ति। आगच्छ इति गत्यर्थलोटा युक्तं तिङन्तम्। अतः प्रकृतसूत्रेण आगच्छ इति लोडन्तं तिङन्तम् अनुदात्तं न भवति।

## १४.१४) लोट् च॥ (८.१.५१)

**सूत्रार्थः** - गत्यर्थलोटा युक्तं लोडन्तं नानुदात्तम्।

**सूत्रव्याख्या**- इदं विधिसूत्रम्। अनेन सूत्रेण अनुदात्तस्वरस्य निषेधः विधीयते। द्विपदात्मकमिदं सूत्रम्। लोट् इति प्रथमान्तं पदम्। लोट् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया लोडन्तमिति लाभः। च इति अव्ययपदम्। गत्यर्थलोटा लृण्ण चेत्कारकं सर्वान्यत् इति सूत्रात् गत्यर्थलोटा, चेत् कारकम्, सर्वान्यत् इति पदानि अनुवर्तन्ते। गत्यर्थलोटा इति तृतीयान्तं पदम्। गतिः अर्थः यस्य सः गत्यर्थः इति बहुव्रीहिसमासः, गत्यर्थः अर्थः यस्य इति गत्यर्थः इति शाकपार्थिवादिवत्समासः। गत्यर्थः चासौ लोट् इति गत्यर्थलोट् तेन गत्यर्थलोटा इति कर्मधारयसमासः। लृट् इति प्रथमान्तं पदम्। न इति अव्ययपदम्। चेत् इति अव्ययपदम्। कारकमिति प्रथमान्तं पदम्। सर्वान्यत् इति अव्ययपदम्। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं पदम् अनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तमिति लाभः। अनुदात्तमिति प्रथमान्तं पदम् अनुवर्तते। एवञ्च गत्यर्थलोटा युक्तं यत् लोडन्तं तिङन्तं तत् अनुदात्तं न भवति इति सूत्रार्थः समायाति।

**उदाहरणम्**- आगच्छ देव ग्रामं पश्य।

**सूत्रार्थसमन्वयः**- अत्र पश्य इति तिङन्तं लोडन्तमस्ति। आगच्छ इति गत्यर्थलोटा युक्तं तिङन्तम् अपि अस्ति। अतः प्रकृतसूत्रेण पश्य इति तिङन्तम् अनुदात्तं न भवति।

## १४.१५) हन्त च॥ (८.१.५४)

**सूत्रार्थः** - हन्तेत्यनेन युक्तमनुदात्तं लोडन्तं विकल्पेन अनुदात्तं भवति।



**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनुदात्तस्वरः अनेन सूत्रेण विधीयते। हन्त इति अव्ययपदम्। च इति अपि अव्ययं पदम्। विभाषितम् सोपसर्गमनुत्तमम् इति सम्पूर्णं सूत्रमनुवर्तते। विभाषितम् इति प्रथमान्तं पदम्। सोपसर्गम् इत्यपि प्रथमान्तं पदम्। अनुत्तमम् इति प्रथमान्तं पदम्। न उत्तमम् इति अनुत्तमम् इति नञ्तत्पुरुषसमासः। तस्य च उत्तमपुरुषभिन्नम् इत्यर्थः। लोट् च इति सूत्रात् लोट् इति प्रथमान्तं पदम् अनुवर्तते। लोड् इति प्रत्ययसंज्ञकः अस्ति। अतः प्रत्ययग्रहणपरिभाषया लोडन्तमिति लाभः। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं पदम् अनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तमिति लाभः। अनुदात्तम् इति पदम् अनुवर्तते। तेन अस्य सूत्रस्य अर्थः भवति- हन्त इत्यनेन युक्तं लोडन्तं अनुत्तमं तिङन्तं विकल्पेन अनुदात्तं भवति इति। अर्थात् हन्त इति शब्देन युक्तम् उपसर्गपूर्वकं लोड्विभक्त्यन्तम् अनुदात्तं विकल्पेन भवति किन्तु उत्तमपुरुषे न भवति इति।

**उदाहरणम्-** हन्त प्रविश इति अस्य सूत्रस्य एकमुदाहरणम्।

**सूत्रार्थसमन्वयः-** अत्र हन्त इत्यनेन युक्तम् अस्ति प्रविश इति तिङन्तं पदम्। तच्च उपसर्गपूर्वकमपि अस्ति। किञ्च उत्तमपुरुषः नास्ति। अतः प्रकृतसूत्रसामर्थ्यात् अत्र अनुदात्तं विकल्पेन भवति।

## १४.१६) यद्धितुपरं छन्दसि॥ (८.१.५६)

**सूत्रार्थः -** यद्धितुपरं तिङन्तं छन्दसि विषये अनुदात्तं न भवति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनेन सूत्रेण अनुदात्तस्वरस्य निषेधः विधीयते। द्विपदात्मके अस्मिन् सूत्रे यद्धितुपरम् इति प्रथमैकवचनान्तं पदम्। यच्च हि च तुश्च इति यद्धितु इति समाहारद्वन्द्वसमासः, तस्मात् परं यद्धितुपरम् इति पञ्चमीतत्पुरुषसमासः। यच्छाब्दात् परं हिशब्दात् परं तुशब्दात् परम् इत्यर्थः। छन्दसि इति सप्तम्येकवचनान्तं पदम्। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं पदम् अनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तमिति लाभः। न इति अव्ययपदम्, अनुदात्तम् इति प्रथमैकवचनान्तं पदद्वयम् अनुवर्तते। अतः सूत्रस्य अस्य अर्थः भवति- यच्छब्दात् परं हिशब्दात् परं तुशब्दात् परं तिङन्तं छन्दसि विषये अनुदात्तं न भवति इति।

**उदाहरणम्-** उदसृजो यदङ्गिरः। उशन्ति हि। आख्यास्यामि तु ते इत्यादि अत्र उदाहरणम्।

**सूत्रार्थसमन्वयः-** उशन्ति इति अत्र तिङन्तं हिशब्दयुक्तम् अस्ति। अतः तत् अनुदात्तं न भवति।



## पाठगतप्रश्नाः-३

१४. लोपे विभाषा इति सूत्रस्य अर्थं लिखत।

१५. पचति आहोस्वित् पठति इति कस्य सूत्रस्य उदाहरणम्।

१६. शेषे विभाषा इति सूत्रस्य अर्थः कः।



१७. गत्यर्थलोटा युक्तं लोडन्तं कथं नानुदात्तम्।

१८. आगच्छ देव ग्रामं पश्य इति कस्य सूत्रस्य उदाहरणम्।

१९. हन्त च इति सूत्रस्य एकम् उदाहरणं दीयताम्।

२०. हन्त इत्यनेन युक्तमनुदात्तं लोडन्तं विकल्पेन अनुदात्तं केन सूत्रेण भवति।

## १४.१७) चादिषु च॥ (८.१.५८)

**सूत्रार्थः** - चवाहाहैवेषु तिङन्तम् अनुदात्तं न भवति।

**सूत्रावतरणम्-** इदं विधिसूत्रम्। अनेन सूत्रेण अनुदात्तस्वरस्य निषेधः विधीयते। द्विपदात्मकम् इदं सूत्रम्। चादिषु इति सप्तम्यन्तं पदम्। चकारः आदिः येषां ते चादयः तेषु चादिषु इति बहुव्रीहिसमासः। च इति अव्ययपदम्। चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः इति सूत्रात् अगतेः इति पञ्चम्यन्तं पदम् अनुवर्तते। न गतिः अगतिः तस्मात् अगतेः इति द्वन्द्वसमासः। अगतेः इत्यस्य गतिसंज्ञाभिन्नात् इति अर्थः। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं पदम् अनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तमिति लाभः। अतः चादिषु परेषु अगतेः उत्तरं तिङन्तम् अनुदात्तं न भवति इति सूत्रार्थः समायाति।

**सूत्रव्याख्या-** देवः पचति च खादति च इति सूत्रस्य अस्य एकमुदाहरणम्।

**उदाहरणम्-** अत्र पचति खादति इति द्वयं तिङन्तम् अस्ति। पचति इत्यस्मात् पूर्वम् अगतिसंज्ञकः चकारः अस्ति। खादति इत्यस्मात् परम् अगतिसंज्ञकः चकारः अस्ति। अतः पचति खादति इत्यनयोः तिङन्तयोः अनुदात्तं न भवति इति।

## १४.१८) चादिलोपे विभाषा॥ (८.१.६३)

**सूत्रार्थः** - चवाहाहैवानां लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। चादिलोपे इति सप्तम्यन्तं पदम्। चकारः आदिः येषां ते चादयः चादीनां लोपः, चादिलोपः तस्मिन् चादिलोपे इति बहुव्रीहिगर्भतत्पुरुषसमासः। विभाषा इति प्रथमान्तं पदम्। चवायोगे प्रथमा इति सूत्रात् प्रथमा इति प्रथमान्तं पदम् अनुवर्तते। प्रथमा इति विभक्तिः इत्यनेन अन्वेति। अतः प्रथमा तिङ्विभक्तिः इत्यर्थलाभः। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं पदम् अनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तमिति लाभः। न इति अव्ययपदम्, अनुदात्ततम् इति प्रथमान्तं पदद्वयम् अनुवर्तते। अतः सूत्रस्यास्य अर्थः भवति- चवाहाहैवानां लोपे प्रथमतिङ्विभक्त्यन्तं विकल्पेन अनुदात्तं न भवति इति।

**उदाहरणम्-** इन्द्र॒ वाजे॑षु नोऽव इति सूत्रस्य एकमुदाहरणम्।

**सूत्रार्थसमन्वयः-** इन्द्र॒ वाजे॑षु नोऽव इत्यस्मिन् वाक्ये अव इति तिङन्तं पदम्। अत्र च चादीनां लोपः जातः। अतः अत्र विकल्पेन अनुदात्तं न भवति।



## १४.१९) यद्वृत्तान्नित्यम्॥ (८.१.६६)

**सूत्रार्थः** - यत्र पदे यच्छब्दः ततः परं तिङन्तं नित्यम् अनुदात्तं न भवति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनेन सूत्रेण अनुदात्तस्वरस्य निषेधः विधीयते। द्विपदात्मके अस्मिन् सूत्रे यद्वृत्तात् इति पञ्चम्येकवचनान्तं पदम्। यद्वृत्तात् इत्यस्य यस्मिन् पदे यच्छब्दः अस्ति। तस्मात् परम् इत्यर्थः। नित्यम् इति प्रथमैकवचनान्तं पदम्। तिङ्ङतिङः इति सूत्रात् तिङ् इति प्रथमान्तं पदम् अनुवर्तते। तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्तमिति लाभः। न इति अव्ययपदम्, अनुदात्तम् इति प्रथमान्तं पदम् अनुवर्तते। एवञ्च यद्वृतात् उत्तरं तिङन्तं नित्यं न अनुदात्तम् इति सूत्रार्थः। अर्थात् यस्मिन् पदे यच्छब्दः विद्यते ततः परं यत् तिङन्तं पदं तत् नित्यम् अनुदात्तं न भवति इति सूत्रार्थः समायाति।

**उदाहरणम्-** यो भुङ्क्ते। यदद्र्यङ् वायुर्वाति इति सूत्रस्य अस्य एकमुदाहरणम्।

**सूत्रार्थसमन्वयः-** यो भुङ्क्ते। यदद्र्यङ् वायुर्वाति इत्यत्र भुङ्क्ते इति वाति इति च द्वयं तिङन्तं पदम् अस्ति। उभयमपि यच्छब्दात् परम् अस्ति। तस्मात् प्रकृतसूत्रेण अत्र तिङन्तम् अनुदात्तं न भवति।

## १४.२०) पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः॥ (८.१.६७)

**सूत्रार्थः** - पूजनेभ्यः काष्ठादिभ्यः पूजितवचनम् अनुदात्तं भवति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनेन सूत्रेण अनुदात्तस्वरः विधीयते। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। पूजनात् पूजितम् अनुदात्तं काष्ठादिभ्यः इति सूत्रगतपदच्छेदः। पूजनात् इति पञ्चम्येकवचनान्तं पदम्। पूजितम् इति प्रथमैकवचनान्तं पदम्। अनुदात्तम् इति प्रथमैकवचनान्तं पदम्। काष्ठादिभ्यः पञ्चमीबहुवचनान्तं पदम्। काष्ठाशब्दः आदिः येषां ते काष्ठादयः तेभ्यः काष्ठादिभ्यः इति बहुव्रीहिसमासः। काष्ठादिगणे काष्ठा दारुण अमातापुत्र वेश अनाज्ञात अनुज्ञात अपुत्र अयुत अद्भुत भृश घोर सुख कल्याण अनुक्त इत्यादयः शब्दाः पठिताः। सगतिरपि तिङ् इति परसूत्रे तिङ्ग्रहणात् इदं सूत्रं सुब्विषयकम्। अतः सुप् इति प्रथमान्तं पदं लभ्यते। सुप् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया सुबन्तमिति लाभः। अनुदात्तम् इति प्रथमान्तं पदम् अनुवर्तते। पूजनात् इति पदं काष्ठादिभ्यः इत्यत्र बहुवचनान्ततया अन्वेति। अतः सूत्रस्य अर्थः भवति- पूजनेभ्यः काष्ठादिभ्यः पूजितं सुबन्तम् अनुदात्तं भवति इति। अर्थात् पूजनार्थेभ्यः काष्ठादिभ्यः परं पूजितं सुबन्तम् अनुदात्तं भवति इति।

**उदाहरणम्-** काष्ठाध्यापकः इति सूत्रस्य अस्य एकम् उदाहरणम्।

**सूत्रार्थसमन्वयः-** अस्मिन् उदाहरणे काष्ठादिगणे पठितः काष्ठाशब्दः पूजितार्थे विद्यते। अपि च सुबन्तं पदम् अस्ति। अतः प्रकृतसुत्रेण तत् सुबन्तम् अनुदात्तं भवति।

## १४.२१) गतिर्गतौ॥ (८.१.७०)

**सूत्रार्थः** - गतौ परतः गतिः अनुदात्तः भवति।



**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनुदात्तस्वरः अनेन सूत्रेण विधीयते। द्विपदात्मकम् इदं सूत्रम्। गतिः गतौ इति सूत्रगतपदच्छेदः। गतिः इति प्रथमैकवचनान्तं पदम्। गतौ इति सप्तम्येकवचनान्तं पदम्। अनुदात्तम् इति प्रथमैकवचनान्तं पदम् अनुवर्तते। गतिः इत्यनेन गतिश्च इति सूत्रेण विधीयमानाः प्रादयः गतिसंज्ञकाः उपसर्गाः उच्यन्ते। अतः गतिसंज्ञके परे गतिसंज्ञकः अनुदात्तः भवति इति सूत्रार्थः जायते।

**उदाहरणम्-** अभ्युद्धरति इति अस्य सूत्रस्य एकम् उदारणम्।

**सूत्रार्थसमन्वयः-** अभ्युद्धरति इत्यत्र हरति इति तिङन्तम् अभि इति गतिसंज्ञकम् उदिति अपि गतिसंज्ञकं पदम्। उदिति गतिसंज्ञकं पदम् अभि इति गतिसंज्ञकात् पदात् परम् अस्ति। अतः उदिति गतिसंज्ञकम् अनुदात्तं भवति प्रकृतसूत्रेण।

## १४.२२) तिङि चोदात्तवति॥ (८.१.७१)

**सूत्रार्थः -** उदात्तवति तिङन्ते परे गतिर्निहन्यते।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनेन सूत्रेण अनुदात्तस्वरः विधीयते। त्रिपदात्मके अस्मिन् सूत्रे तिङि इति सप्तम्येकवचनान्तं पदम्। च इति अव्ययपदम्। उदात्तवति इत्यपि सप्तम्येकवचनान्तं पदम्। गतिर्गतौ इति सूत्रात् गतिः इति प्रथमान्तं पदम् अनुवर्तते। तिङि इत्यत्र तिङ् इति प्रत्ययः। अतः प्रत्ययग्रहणपरिभाषया तिङन्ते इति लाभः। अनुदात्तम् इति प्रथमैकवचनान्तं पदम् अनुवर्तते। अतः सूत्रस्य अस्य अर्थः भवति- उदात्तवति तिङन्ते परे गतिसंज्ञकः अनुदात्तः भवति इति।

**उदाहरणम्-** यत्प्रपचति इति अस्य सूत्रस्य एकमुदाहरणम्।

**सूत्रार्थसमन्वयः-** अत्र प्र इति गतिसंज्ञकः अस्ति। पचति इति तिङन्तम् उदात्तवत् पदं प्र इत्यस्मात् परम् अस्ति। अतः प्रकृतसूत्रेण प्र इति गतिसंज्ञकः अनुदात्तः भवति।



## पाठगतप्रश्नाः -४

२१. चादिषु च इति सूत्रस्य अर्थं लिखत।
२२. चादिलोपे विभाषा इति सूत्रस्य एकमुदाहरणं दीयताम्।
२३. पूजनात्...इति सूत्रं पूरयत।
२४. के गतिसंज्ञकाः उच्यन्ते।
२५. तिङि चोदात्तवति इति सूत्रेण कीदृशे तिङन्ते परे गतिः अनुदात्तः भवति।





## पाठसारः

अस्मिन् पाठे तिङन्तस्वरविषये वस्तुतः विस्तरेण आलोचितम् अस्ति। तिङन्तस्वरविधायकानि चितानि सूत्राणि अत्र आलोचितानि। धातोः तिङ्प्रत्ययेन तिङन्तं पदं भवति। तिङन्तानां पदानां सामान्येन अनुदात्तस्वरः एव विधीयते । अत्र च कैश्चित् सूत्रैः तिङन्तस्वरः विधीयते। कैश्चित् सूत्रैः तिङन्ते अनुदात्तस्वरः निषिध्यते। अत्र साकल्येन अष्टादश सूत्राणि व्याख्यातानि। कदाचित् अव्ययेन युक्ते तिङन्ते स्वरः विधीयते। कदाचित् स्वतः एव स्वरः विधीयते। अव्यययुक्ते तिङन्ते उदाहरणं यथा अङ्ग कुरु इत्यादि। स्वतः यथा अ॒ग्निमी॑ळे इत्यादि। तिङन्तमाश्रित्य अपि कदाचित् स्वरः विधीयते यथा पचति गोत्रम् इत्यादि। तिङन्तात् पराणि गोत्रादीनि अनुदात्तानि भवन्ति। अत्र व्याख्यानकाले गोत्रादयः शब्दाः उल्लिखिताः। अतिङन्तात् परं तिङन्तम् अनुदात्तं भवति। यथा अ॒ग्निमी॑ळे इत्यादि। तिङन्ते च परे गतिसंज्ञकः अनुदात्तः भवति। उदाहरणं यथा अभ्युद्धरति इति। प्रादयः क्रियायोगे गतिसंज्ञकाः भवन्ति। एवमेव पाठस्य अस्य विषयः तिङन्तस्वरः इति।



## पाठान्तप्रश्नाः

१. तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः इदं सूत्रं व्याख्यात।
२. अङ्गाऽप्रातिलोम्ये अस्य सूत्रस्य व्याख्यानं कुरु।
३. लोपे विभाषा इति सूत्रं व्याख्यात।
४. आहो उताहो चानन्तरम् इति सूत्रं व्याख्यात।
५. गत्यर्थलोटा... अस्य सूत्रस्य अर्थं लिखित्वा उदहरणसङ्गतिं दर्शय।
६. चादिलोपे विभाषा इति अस्य सूत्रस्य व्यख्यानं कुरुत।
७. तिङि चोदात्तवति इति सूत्रं व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः इति सूत्रेण।
२. पचति गोत्रम् इति।
३. तिङ्ङतिङः इति सूत्रेण।
४. अतिङन्तात् पदात् परं तिङन्तं सर्वम् अनुदात्तं भवति इति तिङ्ङतिङः इति सूत्रस्य अर्थः।
५. अङ्गाऽप्रातिलोम्ये इति सूत्रस्य उदाहरणम्।



६. हि इति अव्ययपदम्।

७. हि च इति सूत्रनिषेधात्।

**उत्तराणि-२**

८. हीत्यनेन युक्तं साकाक्षमनेकमपि तिङन्तं नानुदात्तं भवति छन्दसि।

९. यावत् प्रपचति शोभनम् इति अस्य सुत्रस्य एकमुदाहरणम्।

१०. तुपश्यपश्यताहैः पूजायाम् इति सूत्रेण।

११. शेषे विभाषा इति सूत्रेण।

१२. अहो इत्यनेन युक्तं तिङन्तं वानुदात्तं पूजायाम् इति।

१३. अहो कटं करिष्यति इति शेषे विभाषा इति सूत्रस्य एकमुदाहरणम्।

**उत्तराणि-३**

१४. किमः लोपे सति क्रियाप्रश्ने अनुपसर्गम् अप्रतिषिद्धं तिङन्तं विकल्पेन अनुदात्तं न भवति इति सूत्रार्थः।

१५. लोपे विभाषा इति सूत्रस्य उदाहरणम्।

१६. आहो उदाहो इत्याभ्यां युक्तं व्यवहितं तिङन्तं विकल्पेन अनुदात्तं भवति इति।

१७. लोट् च इति सूत्रनिषेधात्।

१८. लोट् च इति सूत्रस्य उदाहरणम्।

१९. हन्त प्रविश इति अस्य सूत्रस्य एकमुदाहरणम्।

२०. हन्त च इति सूत्रेण भवति।

**उत्तराणि-४**

२१. चवाहाहैवेषु तिङन्तम् अनुदात्तं न भवति।

२२. इन्द्र॒ वाजेषु नोऽव इति सूत्रस्य एकमुदाहरणम्।

२३. पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः इति।

२४. प्रादयः क्रियायोगे गतिसंज्ञकाः भवन्ति।

२५. उदात्तवति तिङन्ते परे गतिः।

## ।।इति चतुर्दशः पाठः।।





# एतत्पुस्तकस्थसूत्राणां सूची

## (अकारादिक्रमेण)

**पाठे स्थानम् - सूत्रम्  - अष्टाध्यायीक्रमः (यस्य संख्या नास्ति तत् फिट् सूत्रम्)**

